\-\

सरस्वतीभवन-अध्ययनमाला

[ ३५ ]

# नयनप्रसादिन्याः समीक्षणम्

लेखकः सम्पादकश्च

डॉ० पारसनाथद्विवेदी

उपाचार्यः,

वेदान्तविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-STUDIES

[ Vol. 35 ]

# NAYANAPRASĀDINYĀ SAMĪKṢAṆAM

BY

DR. PĀRASANĀTHA DVIVEDĪ
Reader in Vedānta Department
Sampurnanand Sanskrit University
Varanasi




VARANASI
1986

**Research Publication Supervisor :—**
**Director, Research Institute,**
**Sampurnanand Sanskrit University**
**Varanasi.**

**[ This Thesis has been approved for the 'Vācaspati' ( D. Litt. ) degree of Sampurnanand Sanskrit University and has been published out of generous grant from University Grants Commission, New Delhi ]**

□

**Published by :—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
**Sampurnanand Sanskrit University**
**Varanasi–221002.**

□

**Available at :—**
**Sales Department,**
**Sampurnanand Sanskrit University,**
**Varanasi–221002.**

□

**First Edition, 1000 Copies**
**Price Rs. 44.00**

□

***Printed by :—***
**VIJAYA PRESS,**
**Sarasauli, Varanasi.**

सरस्वतीभवन-अध्ययनमाला

[ ३५ ]

# नयनप्रसादिन्याः समीक्षणम्

लेखकः सम्पादकश्च
डॉ० पारसनाथद्विवेदी
उपाचार्यः,
वेदान्तविभागे,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



वाराणस्याम्

२०४३ तमे वैक्रमाब्दे १९०८ तमे शकाब्दे १९८६ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षक :—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'वाचस्पतिः' ( डी० लिट्० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनार्थिकसाहाय्येन मुद्रापितः प्रकाशितश्च]

प्रकाशक :—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१-०२.

□

प्राप्तिस्थानम् :—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

□

प्रथमं संस्करणम् :—१००० प्रतिरूपाणि
मूल्यम्—४४-०० रूप्यकाणि

□

मुद्रक :—
विजय-प्रेस,
सरसौली, वाराणसी ।

## नयनप्रसादिन्याः समीक्षणम्

**येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु।**
**तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम् ॥**

तत्र विद्या नाम ज्ञानम्। ज्ञानञ्च द्विविधम्—प्रमात्मकं भ्रमात्मकञ्च। क्वचन स्मृतेः यथार्थात्मिकाया भ्रमभिन्नत्वेऽपि न प्रमारूपत्वमिति मते त्रैविध्यं ज्ञानस्य विवेक्तव्यम्। ज्ञानञ्च अर्थविषयकप्रकाशः। प्रमाणानि तादृशं ज्ञानं जनयन्ति। विषयशूराणि हि ज्ञानानि। तेषु ज्ञानेषु विषयद्वारैव विशेषता प्राप्यते। तथा चोक्तं श्रीमद्भिः परमवन्द्यैरुदयनाचार्यैः—**'अर्थेनैव विशेषो हि निराकारतया धियाम्'** इति। अत एव सर्वव्यवहारहेतुगुणो ज्ञानमिति प्रोक्तम्। तानि च ज्ञानानि स्वविरोधि अज्ञानं निवर्तयत्प्रमोदं जनयन्ति, विषयप्रभावाद् दुःखञ्च, इष्टानिष्टोदासीनविषयकत्वात्तेषां सुखदुःखोपेक्षाजनकत्वात्। तेषु च ज्ञानेषु परमात्मविषयकं ज्ञानं सर्वश्रेष्ठम्। तथा चोक्तं गीतायां भगवता श्रीकृष्णेन—**'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते'** (गी० ४।३८) इति, **'अध्यात्मविद्या विद्यानाम्'** (गी० १०।३२) इति च। तादृशीमध्यात्मविद्यां द्योतयितुमेवोपनिषदः प्रवृत्ताः। तत्रैव तत्तत्त्वं निर्दिष्टम्—**'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह'**(मु०१।१।) इति। सर्वविद्याप्रतिष्ठात्वञ्च—सर्वविद्यावेद्यवस्त्वधिष्ठानत्वेन। ब्रह्मविद्याव्यतिरिक्तनिखिलविद्यावेद्यानि वस्तूनि परमात्मन्येव कल्पितानि स्थितानि वा। तद्विषयकत्वात्परमात्मविद्या सर्वश्रेष्ठा। अत एव नारदेन निखिलविद्यावतापि परतोषमप्राप्तवता भगवान् सनत्कुमारो गुरुत्वेन वृत्तो येन सा विद्या लब्धा भवेत्। यश्च देवदुर्लभं मानवशरीरं सौभाग्याल्लब्ध्वापि न लभते तां विद्यां तं निन्दति श्रुतिः स्मृतिश्च। तथाहि—

**इह चेदवेदीदथ सत्यमस्ति नो चेदिहावेदीन् महती विनष्टिः।**
(के० उ० २।५)

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः।**
(बृ० उ० ३।८।१०)

**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्।** (गी० ९।३३) इति।

अत एव कुल्लूकभट्टेन मनुस्मृतेः व्याख्यायामुक्तम्—**'अभ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुब्रह्मविद्यां शिक्षेत'** इति। तादृशीमेव धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु नित्यत्वाद् मोक्षरूपपरमपुरुषार्थसाधिकां सर्वबाधबाधिकां परमतत्त्वप्रकाशिकां विद्यां जनयितुमुपनिषदो वेदान्तापरपर्यायाः प्रवृत्ताः। यद्यपि तासु

उपनिषत्सु सर्वे विचारा विहिताः; किन्तु तन्निरूपणीयविषये सञ्जाताः शङ्का व्युदसयितुं तदनुसारिणोऽन्येऽपि ग्रन्थाः प्रवृत्ताः। तेषु ब्रह्मसूत्रं गीता च प्राधान्यं भजेते; किन्तु 'न वा वाणी मुखे मुखे' इत्युक्तेः 'सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते' इत्याद्युक्त्या—

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते** ॥ (वा० प० १।३४)

इति वाक्यप्रामाण्याच्च विविधा आक्षेपा यदा समागताः, तदा यावदनुपपन्नं तावत्सर्वं कल्प्यमिति न्यायात् **'अप्रतिपत्तौ अतिप्रतिपत्तौ वा व्याख्यानं कुर्वन्ति सन्तः'** इति हेतुवचनाच्च ग्रन्थरचनायां प्रवृत्ता जगद्व्यापारनिवृत्ता ब्रह्मविदोऽपि श्रीश्रीहर्षमिश्रप्रभृतय आचार्याः। समन्वयविरोधपरिहारसाधनफलाध्यायात्मकस्य ब्रह्मसूत्रस्य प्रतिबिम्बभूता ग्रन्थाश्चतुःपरिच्छेदविभक्ताः खण्डनखण्डखाद्यम्, तत्त्वदीपिका ( चित्सुखी ), अद्वैतसिद्धिः, सिद्धान्तलेशसङ्ग्रहश्च।

यस्य च ज्ञानस्य लब्धये निखिलानि प्रमाणानि प्रवृत्तानि, तच्च ज्ञानं स्वप्रकाशात्मकम्। स्वप्रकाशत्वेऽपि सन्ति विवादा इति खण्डनखण्डखाद्यग्रन्थत एव स्पष्टीभवति; किन्तु तत्र तथाविशदं विवरणं नोपलभ्यते, येन जिज्ञासूनां तत्त्वविदां वा परमः प्रमोदो जायेत। अतो विविधैर्विकल्पैः पूर्वं पूर्वपक्षमुपस्थाप्य ततः परं समाधानेन चित्सुखमुनिभिः श्रोत्रियब्रह्मनिष्ठैर्ज्ञानस्य स्वप्रकाशत्वमेव ग्रन्थादौ प्रसाधितम्। इदमेवेतरेभ्यः समस्तेभ्यो ग्रन्थप्रणेतृभ्य आचार्येभ्यो वैशिष्ट्यं चित्सुखाचार्ये समुपलभ्यते यत्सम्पूर्णेऽपि ग्रन्थे कमपि विषयं निरूपयितुं प्रवृत्तैराचार्यैः प्रतिप्रकरणं पूर्वं सर्वे सम्भाविता दोषाः पूर्वपक्षरूपेण निरूपिताः, तदनन्तरे केवलं समाधानमात्रमेव क्रियते। यदि कश्चिदध्येता पूर्वपक्षग्रन्थमपठित्वैव केवलमुत्तरग्रन्थमेव पठेत्, तथैव तस्य वस्तुज्ञानं लाघवेन भवेत्। मया केचन त्वरिता अध्यापिताः। अन्येषु ग्रन्थेषु तथास्थितिरेव नास्ति; किन्तु सहैव सर्वे पूर्वपक्षा उत्तरपक्षाश्च निरूपिताः। तथा च तेषामानुपूर्वीतः पठनमन्तरा नाक्षेपनिराकरणाकलनसम्भवः।

तादृशस्य लोकोत्तरस्य वेदान्तिवृन्दवन्दितस्य गूढार्थप्रकाशकस्य शास्त्रार्थसागरस्य ग्रन्थस्य व्याख्यापि तादृशी भवेत्, तदैव चमत्कारः। नयनप्रसादिनी-चित्सुखीटीका नूनं टीकागुरूणां गुरुरिति प्राचीनोक्तिमाटीकते। मूलकारा यादृशमनुमानं मानं महाविद्यादिरूपं प्रदर्शयन्ति, ततोऽपि निगूढं नयनप्रसादिनी प्रदर्श्य प्रसादयति। एवमेव फलव्याप्यत्वनिरुक्तिः, स्वप्रकाशत्वव्यतिरेके अनुपपत्तिरापत्तिश्च यथा निरूपिते, न तथा वस्तुज्ञानं स्यात्, यदि नेयं व्याख्या स्यात्।

अत्रेदं विवेक्तव्यम्—यथा नयनप्रसादिनीं विना तत्त्वप्रकाशजप्रसादो दुर्लभः, तथैव तदनुसारितत्समीक्षणमन्तरा नानन्दोल्लाससम्भवः, कुत इति चेत्, तर्हि

क्वचित्पदकृत्यनिरूपणावश्यकता, क्वचिच्छब्दार्थनिरुक्तिरपेक्षिता, क्वचित्समागत-पूर्वोत्तरविरोधपरिहाराय परिष्कारविष्कारं विना न निस्तारसम्भव इत्यादिका विषया आसन्। यानि च कार्याणि नितरामपेक्षितानि आसन्, तानि सर्वाण्येव पूरितानि **'नयनप्रसादिन्याः समीक्षणम्'** इति ग्रन्थे। सन्ति चास्य ग्रन्थस्य रचयितारो व्याकरणसाहित्यवेदान्तज्यौतिषशास्त्रमर्मज्ञाः परापरविद्याविचक्षणाः शान्ता दान्ताः शिष्टा विशिष्टा अध्यापनचणा अल्पीयस्येव वयसि सम्प्राप्त-विद्याप्रकर्षाः शास्त्रार्थप्रक्रियायां प्रसिद्धाः **'शतं वद एकं मा लिख'** इति प्रवाद-स्यापवादभूताः "वत्स वृद्धिं प्राप्य गुणेषु द्वेषं मा कार्षीः, व्याकरणे हि गुणं वृद्धिर्बाधते, न सत्पुरुषेषु" इति सत्पुरुषोक्तिं नलचम्पूक्तिं सार्थयन्तः कवयो लेखका अनुकरणीयाचरणा यशस्विनो मनस्विनो मनीषिणो **डॉ० पारसनाथ-द्विवेदिमहाशया** ममान्तेवासिनः। एते सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-वेदान्तविभागे उपाचार्यपदं साम्प्रतं विभूषयन्ति। एषामनेन ग्रन्थेन वेदान्तस्य बहवो विषयाः सुस्पष्टतां नीताः। शास्त्रार्थप्रक्रियया लिखितस्यास्य ग्रन्थस्याध्यय-नेन जना विदुषां सदसि प्रतिष्ठापराकाष्ठां लप्स्यन्त इत्यत्र न संशयः, मदुक्तौ नार्थवादस्य लेशोऽपि, पठनेनैव समाधानात्।

अन्ते चाहमेषां विद्वत्तल्लजानां पुण्यवतां दीर्घायुष्यनैरोग्यलोकोत्तराभ्युदय-परमात्मज्ञानदार्ढ्यशिष्यसम्पत्तियशोलब्धिप्रभृतिफलेभ्यो भगवन्तं भवानीजानिं मातरमन्नपूर्णाञ्च प्रार्थये। करालेऽस्मिन् कलिकाले एतादृशा देवदुर्लभा-दूष्यवैदुष्यमण्डिताः पण्डिता जायन्तामिति चापि निवेद्य ग्रन्थस्यास्य नानादिग्-देशीयलोकसमवेतज्ञानविषयतालक्षणविस्तारो भूयादिति कामये।

सोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य **'सरस्वतीभवन-अध्ययन-मालायाः'** पञ्चत्रिंशपुष्परूपेण प्राकाश्यमेतीति महत्प्रमोदास्पदमिति।

**काश्याम्,**
**श्रावणपूर्णिमायाम्,**
**वि० सं० २०४३।**

**देवस्वरूपमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भूमिका

## [ १ ]

इह किञ्चित् प्रस्तूयते भूमिकारूपेण । भूमिरेव भूमिका । भूमिश्च ग्रन्थे प्रतिपिपादयिषितसंक्षेपार्थः । तत्त्वप्रदीपिकाग्रन्थस्य वेदान्तसम्बद्धत्वात् तस्यापि स एव प्रतिपाद्यार्थः । वेदान्तप्रतिपाद्यविषयश्च जीवब्रह्मणोरैक्यमेव । वेदान्तो नामोपनिषत्प्रमाणम् । उपनिषद् उपनिपूर्वकसद्धात्वर्थयोगाद् ब्रह्मणः प्रापकत्वात् समूलप्रपञ्चस्य विशारणाद् अवसादनाद् वा ब्रह्मविद्या, सा चाहं ब्रह्मास्मीत्याकारा नीरन्ध्रमणिमयूखवदखण्डा चित्तवृत्तिः ।

जीवब्रह्मैक्यं नाम तयोरभेदः । जीवोऽपरोक्षत्वादिविशिष्टान्तःकरणावच्छिन्नचैतन्यम् । ब्रह्म च सत्यज्ञानादिलक्षणं जगज्जन्मादिकारणं सर्वज्ञत्वादिविशिष्टं चैतन्यम् । निर्विशेषं शुद्धं चिद्रूपं वा ब्रह्म ।

अयम्भावः—अद्वैतवेदान्ते पदार्थद्वयम्–दृक्, दृश्यञ्च । चैतन्यं दृक्, तद्भास्यञ्च दृश्यम् । दृग् उपहितानुपहितभेदेन द्विविधः । उपहितोऽपि जीवेश्वरभेदेन द्विधा । अनुपहितं शुद्धं चिन्मात्रं ब्रह्म जीवश्चान्तःकरणावच्छिन्नचैतन्यम् । ईश्वरश्च अज्ञानोपहितं चैतन्यम् । दृश्यञ्च ब्रह्मणि कल्पितमज्ञानादिसकलप्रपञ्चः ।

वस्तुतो ब्रह्मैव केवलं परमार्थसद् । तच्च सजातीयविजातीयस्वगतभेदशून्यं सकलपरिच्छेदरहितम् । दृश्यं सर्वं कल्पितं मिथ्या । चितो भेदाश्च सर्वे कल्पिता मिथ्यैव । अखण्डं चिन्मात्रमेव वस्तु वेदान्तप्रतिपाद्यम् तत्रैव सर्वेषां वेदान्तानां तात्पर्यात् । उक्तञ्चेद तथ्यं भगवत्पादैः समन्वयसूत्रे भाष्ये । एव जीवब्रह्मणोरैक्यं सिध्यति ।

तच्च नात्मस्वरूपम्, भेदवादिनाऽपि तथा स्वीकारात्, नाप्यभेदरूपम्, अभेदस्य भेदाभावरूपत्वाद् भेदस्यासिद्धचा तत्प्रतियोगिकाभावस्याप्यसिद्धेः; किन्तु जीवावृत्तिधर्मानाश्रितत्वोपलक्षितात्मस्वरूपम् । जीवे अवृत्तयो ये धर्माः सर्वज्ञत्वादयस्तदानाश्रितत्वोपलक्षितमात्मरूपमेव तयोरैक्यम् ।

ननु प्रत्यक्षमेव जीवेश्वरयोर्भेदे कथमभेद इति । न च भेदः कल्पितोऽविद्याप्रयुक्त इति वाच्यम्, अविद्याकल्पितभेदाङ्गीकारे अविद्यायाः कल्पकाभावात् तदनुपपत्त्या तादृशभेदस्याप्यनुपपत्तेः । जीवस्य कल्पकत्वाभ्युपगमे तु अन्योन्याश्रयापत्तेः । तथा हि अविद्याधीनो जीवविभागः, जीवाश्रिता तत्कल्पिता अविद्या- इति चेत्, न, ब्रह्मविषयाया अविद्याया जीवस्यैव कल्पकत्वाङ्गीकरणात् । न

चान्योन्याश्रयः, जीवस्यानादित्वात्। उक्तञ्चाध्यासभाष्ये भगवत्पादैरात्मानात्मनो-रितरेतराध्यासस्य, अनादिप्रवृत्तस्य मिथ्याज्ञानस्याविद्यात्वम्।

अतो यावन्तोऽपि भेदास्तेऽविद्याकल्पिता एव। न च तद्भेदपारमार्थिकत्वे किञ्चत् प्रमाणमस्ति। तत्र प्रत्यक्षादिप्रमाणानां व्यावहारिकभेदेऽपि गतार्थत्वात्। प्रमाणानि च भेदमात्रे फलवन्ति, तेषां तत्पारमार्थिकत्वं प्रत्यौदासिन्यात्। भेद-वादिन्यः श्रुतयोऽपि द्वा सुपर्णा इत्यादयो लोकसिद्धकल्पितभेदानुवादिन्य एव। तासां स्वार्थे तात्पर्याभावात्।

अपि च भेदस्य पारमार्थिकत्वे तस्य लक्षणं वक्तव्यं न च किञ्चिद् अदुष्टं बुद्धिपथमवगाहते। तथा हि न तावत् स्वरूपं भेदः। प्रतियोग्यनपेक्षत्वप्रसङ्गात् प्रतियोगिसापेक्षो भेदः। वस्तुस्वरूपं तु निरपेक्षम्। यदि च प्रतियोगिसहितस्य भेदस्य वस्तुस्वरूपत्वमुच्यते, तदा प्रतियोगिनोऽपि धर्मिरूपत्वाद् अद्वैतस्यैव प्रसङ्गः।

किञ्चैवं यदि भेदोऽनेकनिष्ठो विदारणात्मा वस्तुस्वरूपं स्यात्, तदा स भेदो वस्तुस्वरूपस्यापि अनेकात्मतामापादयेत्। तथासति एकाभावात् तन्निमित्ता-नेकाभावाच्च शून्यतापत्तिः स्यात्।

किञ्च भेदस्य वस्तुस्वरूपत्वे वस्तुनि दृष्टे भेदस्यापि दृष्टत्वात् संदेहो न स्यात्। एवं विपर्ययोऽपि न स्यात्। तस्मान्न भेदो वस्तुस्वरूपम्। न च तत्र प्रत्यक्षं प्रमाणमुत्सहते।

न च मा भूत् स्वरूपं भेदः। धर्म एव वस्तुतो भेदः प्रत्यक्षसिद्ध इति वाच्यम्, धर्मरूपे भेदेऽपि प्रत्यक्षायोगात्। धर्मिप्रतियोगिभेदानां युगपद्ग्रहणायोगात्। दण्डी पुरुष इत्यादावपि दण्डपुरुषयोर्युगपदुपलब्धावपि तयोर्विशेष्यविशेषणभावस्य पश्चाद् भावित्वात्। विशिष्टप्रत्ययस्य विशेषणविशेष्यस्वरूपप्रत्ययाधीनत्वात्।

किञ्च धर्मरूपभेदस्वीकारे अनवस्थादोषः। तथा हि धर्मधर्मिणोरवश्यं भेदो वाच्यः। स च भेदो यदि स्वेनैव भिन्ने धर्मिणि निविशते, तदा स्वस्मिन् स्ववृत्तिताप्रसङ्गः। भेदान्तरेण भिन्ने चेद् अनवस्था। न च अनन्तभेदस्वीकाराद् मूलक्षतेरभावाद् अनवस्था न दोषावहेति वाच्यम्, तेषामनन्तभेदानां क्रमशः प्रतीति-र्युगपद्वा। नाद्यः, पूर्वपूर्वभेदप्रतीतिमन्तरेणोत्तरोत्तरभेदप्रतीतेरभावात्। न द्वितीयः, युगपदनन्तभेदप्रतीतेरयोगात्। एवञ्च साऽनवस्था मूलक्षयकारिणी स्यादेव। एवं भेदस्य खण्डनचित्सुख्यादिग्रन्थे विस्तरेण खण्डनं कृतमत्र किञ्चिदुक्तम्। एवञ्च न भेदः प्रामाणिकः।

श्रुतयश्च एकमेवाद्वितीयमित्यादयो जीवब्रह्मणोरभेदे तात्पर्यग्राहिकाः। अभेदेऽपि तयोरविद्याकृतभेदमादाय सर्वो लौकिकः पारलौकिकश्च व्यवहारः

सम्पद्यते। उक्तञ्च भगवत्पादैरविद्यावद्विषया सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्चेति।

अतोऽन्यदार्तमित्यादिश्रुत्या आत्मातिरिक्तस्य सर्वस्य प्रपञ्चस्य आर्तत्वं बोध्यते। आर्तत्वं नाम अनृतत्व विनाशित्वं मिथ्यात्वं वा। मिथ्यात्वञ्च स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वम्, सत्त्वप्रतियोगिकासत्त्वप्रयोगिकात्यन्ताभाववत्त्वं वा। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा ज्ञाननिवर्त्यत्वं वा सद्विविक्तत्वं वेति पञ्चधा अद्वैतसिद्धिग्रन्थे श्रीमधुसूदनसरस्वतीभिः सम्यक् प्रतिपादितम्।

एवञ्च प्रपञ्चस्य नास्ति सत्यत्वम्। त्रिकालाबाध्यत्वं सत्यत्वम्। प्रतीयमानत्वाद् व्यवहारसिद्धत्वाच्च नालीकत्वं तस्य। विरोधाच्च नोभयमिति सदसदुभयविलक्षणत्वरूपमनिर्वचनीयत्वं प्रपञ्चस्य सिध्यति। प्रपञ्चस्य कालत्रयेऽपि पारमार्थिकत्वेनाभावाद् जीवब्रह्मणोर्भेदस्यासत्त्वाद् ब्रह्मैव केवलं सत्यम्, सत्यं ज्ञानमित्यादिश्रुत्या बोध्यते। तच्च ब्रह्म ज्ञानरूपमेव न ज्ञानाधिकरणं प्रज्ञानं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतेः। ज्ञानञ्च चैतन्यं प्रकाशः। समस्तस्य च प्रपञ्चस्य असङ्गे तादृशे चैतन्ये प्रकाशरूपे अध्यस्तत्वात् प्रकाश उपपद्यते। तस्य भासा सर्वमिदं विभातीति श्रुतेः। ब्रह्मप्रपञ्चयोः प्रकाशप्रकाश्यभावोपपत्तयेऽवश्यं सम्बन्धो वाच्यः। स च न विषयविषयिभावादिः, तस्य निरूपयितुमशक्यत्वात्। सत्यस्य सम्बन्धस्य कस्यचिद् तयोरसम्भवाद् आध्यासिकः सम्बन्धः स्वीकर्तव्यः। अन्यथा असङ्गस्यात्मनः सर्वप्रकाशत्वं श्रुतिबोधितमनुपपन्नं स्यात्। एवञ्च आत्मानात्मनोऽध्यासो वाच्यः। अध्यासश्च स्मृतिरूपः परत्र पूर्वदृष्टावभास इति भगवता शङ्करेण लक्षणं कृतमध्यासभाष्ये। तत्रैव भामत्यामध्यासलक्षणं विभजता श्रीवाचस्पतिमिश्रेणोक्तम्—"अवसन्नोऽवमतो वा भासोऽवभासः। प्रत्ययान्तरबाधश्चावसादोऽवमानो वा। एतावता मिथ्याज्ञानमित्युक्तं भवति। तस्येदमुपव्याख्यानं पूर्वं दृष्टस्येति"। पूर्वदृष्टपदेन अनृतस्यारोपणीयस्योपस्थानम्। दृष्टग्रहणेन पूर्वप्रीतिमात्रमुपयुज्यते, न वस्तुसत्ता। परत्र शुक्तिकादौ आरोपणीयापेक्षयाधिकसत्तावतीति भावः। एवञ्च सत्यानृतमिथुनं ज्ञानमध्यासः। सत्येऽनृतावभास इति यावत्। एवञ्चाध्यासं विना आत्मनि अनात्मवस्तु न भासेत, भासते चेति अध्यासः स्वीकर्तव्यः।

स च अध्यासो मिथ्याज्ञानरूपः, अधिष्ठानज्ञानेन निवर्तते शुक्तिज्ञानेन रजततज्ज्ञानमिव। ज्ञानेनाध्यासस्य निवृत्तौ तत्प्रपञ्चस्यापि निवृत्तिर्भवति। एतत् सर्वं वेदान्तग्रन्थेषु विस्तरेण प्रतिपादितमस्ति।

प्रबन्धे चास्मिन् मया यथामति सर्वे प्रसङ्गतोऽनुषङ्गतश्चेमे विषयाः साक्षेपं विवेचिताः। इह किञ्चिदुक्तम्। मन्येऽयं प्रबन्धो विदुषां मोदावहः स्यात्।

# चित्सुखाचार्यः

अद्वैतवेदान्ते चित्सुखाचार्यः तत्त्वप्रदीपिकाग्रन्थकारत्वेन प्रसिद्धः। खण्डनतत्त्वप्रदीपिकाद्वैतसिद्धिग्रन्थत्रयी शाङ्करमतप्रतिपादने परमतनिरसने चातिमहत्त्वं भजते। तत्र तत्त्वप्रदीपिकाखण्डनग्रन्थात् पश्चात् प्रवृत्ता खण्डनोपरिकृताक्षेपाणां समाधानपरा शाङ्करमतसिद्धान्तप्रदीपिकेव विराजतेतराम्। चित्सुखाचार्यनामत एव चित्सुखीति ग्रन्थस्यास्यापरं नाम प्रसिद्धम्।

तत्रास्य महतो महत आचार्यस्य विदुषो मुनेश्च प्रादुर्भावकालदेशविषये यद्यपि न स्पष्टं निर्णयः, तथापि विविधग्रन्थावलोकनेनेतिवृत्तविदामस्ति मतं तदिह संक्षेपेण प्रस्तूयते।

चित्सुखाचार्यः खण्डनकारान् पश्चाद्भावीति तदीयग्रन्थेनैव विज्ञायते। खण्डनकारस्य महाकवेर्हर्षस्य समय ऐतिहासिकैर्द्वादशशताब्द्या अन्तिमः कालो निर्णीतः।

जयतीर्थेन ( १३६५-१३८८ ई० ) स्ववादावलीग्रन्थे चित्सुखाचार्यस्योल्लेखः कृतोऽस्ति। तथा विद्यारण्यस्वामिनाऽपि ( १३९१ ई० ) सर्वदर्शनसंग्रहे चित्सुखाचार्यस्योल्लेखकृतोऽस्ति। एतेनास्याविर्भावकालः ख्रैस्ताब्दीयत्रयोदशशताब्दीति निश्चीयते।

देशविषयेऽपि विवादोऽस्ति। केचन विद्वांसः, न्यायमतखण्डनकारकाः प्रायश उत्तरभारतीया इतिकृत्वा अस्यापि देश उत्तरभारत एवेति वदन्ति। अन्ये च दक्षिणभारते कामकोटिमठाध्यक्ष्येणानेन जीवनं यापितमिति वदन्ति। एवमस्य देशविषये नास्ति निश्चयः। अस्य गुरुर्गौडाचार्यो ज्ञानोत्तमाभिध आसीत्। यथोक्तं तेनैव—"ज्ञानोत्तमाख्यं तं वन्दे सत्यानन्दपदोदितम्" ज्ञानोत्तमाख्योऽपि महाद्वैतविद्वान् ज्ञानसिद्धिग्रन्थकर्ता। अस्य प्रधानशिष्यः सुखप्रकाश आसीत्। स च श्वेताश्वतरोपनिषदि तैत्तिरीये च व्याख्यानमकरोत्।

कृतयः—

महाविदुषा चित्सुखाचार्येण बहवो ग्रन्था विरचिताः। ते च यथा—

१. न्यायमकरन्दव्याख्या—आनन्दबोधभट्टारककृतन्यायमकरन्दनामकग्रन्थस्य व्याख्या अनेन लिखिता। इयं व्याख्या चित्सुखीतः पूर्वा।
२. खण्डनग्रन्थे उत्कृष्टा व्याख्या रचिता।
३. शारीरिकभाष्यव्याख्या—ब्रह्मसूत्रशाङ्करभाष्ये भावप्रकाशिका व्याख्या संक्षिप्तोपलभ्यते मर्मप्रकाशिका।

४. शङ्करदिग्विजयः।
५. ब्रह्मसिद्धिव्याख्या—ब्रह्मसिद्धिग्रन्थे उत्तमा व्याख्या।
६. नैष्कर्म्यसिद्धिव्याख्या—भावतत्त्वप्रकाशिका।
७. प्रमाणरत्नमालाव्याख्या आनन्दबोधभट्टारककृतप्रमाणरत्नमालायाः समुचित-टीका।
८. विवरणव्याख्या—प्रकाशात्मयतिकृतविवरणोपरि व्याख्या विरचिता।
९ विष्णुपुराणव्याख्या।
१०. अधिकरणसंगतिः· ब्रह्मसूत्राधिकरणानां समन्वयात्मकः संक्षिप्तनिबन्धः।
११. भागवतव्याख्या।
१२. ब्रह्मस्तुतिः।
१३. तत्त्वप्रदीपिका—मौलिकग्रन्थः।

एवं बहवो ग्रन्था विरचिताः सन्ति, केचिदुपलभ्यन्ते केचिन्नोपलभ्यन्ते।

**तत्वप्रदीपिकामहत्त्वम्—**

इदमेकं ग्रन्थरत्नं चित्सुखाचार्यस्य कीर्तिध्वजोत्तोलनायालमस्ति। तत्त्व-प्रदीपिका स्वेनैवाचार्येण विशेषिता।

विप्रतिपत्तिव्रातध्वान्त-ध्वंसप्रगल्भवाचाला।
क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका विदुषा॥

इह दर्शनीयतमेऽद्वैतवेदान्तदर्शने आत्मयाथात्म्यप्रतिपादके तत्वप्रदीपिका ग्रन्थस्यान्वर्थाभिधानस्य विद्वन्मुनिचित्सुखाचार्यप्रणीतस्य सर्ववेदान्तसिद्धान्तदर्शनादर्शभूतस्य परवर्त्तिसकलाचार्यरचनोपजीव्यस्य महाविद्यादिप्रयोगपरिपूरितस्य प्रमाणभूतस्य श्रीशङ्करभगवत्पादभाषितार्थप्रदीपकस्य महद्वैशिष्ट्यमस्तीति कश्च विद्वान् न जानाति। तत्र पूर्वोत्तरपक्षयोः पृथक् पृथग् उपपादनपूर्वं सिद्धान्त-व्यवस्थापनं समासव्यासविलासपूर्णशैल्या गद्येन पद्येन च सर्वेषां मनोहरति। चतुर्षु परिच्छेदेषु तत्तद्विषया अकाट्ययुक्तिभिर्निरूपिताः सन्ति। एतत्प्रतिपाद्य-विषये तावन्नयनप्रसादिनीकारैः संग्रहरूपेण उक्तं परिच्छेदान्तेषु—

विज्ञानं स्वप्रकाशं भवति च पुरुषस्तद्वपुर्भावरूपम्।
ध्वान्तं मिथ्या प्रपञ्चो भ्रमभरनिलयोऽनादिभावोऽप्रबोधः॥

आरोपारोप्यसिद्धिः प्रमितिजनकताऽखण्डता स्वप्रमात्वम्।
शक्तिर्लक्ष्यः पदार्थान्वय इति कथिताः पौरुषेयो न वेदः॥

भेदो द्रव्यादिषट्कं क्षणनिधनमतं षट्प्रमाणान्यभावो।
भावः पश्चात् पराणु ह्यवयविसहितश्चान्ययोगो वियोगः॥

द्वित्वादिर्जातिमानं द्व्यणुकपरिमिता पाकजप्रक्रियाथो।
हेतुत्वं कालकाष्ठे जनिमदपि भिदाऽभेदवादो निरस्तः॥

शब्दः साक्षात्कारहेतुर्विद्या मुक्तिफलप्रदा ।
विद्यैव न तु कर्मेति तृतीये त्रितयं गतम् ।।

स्वात्यन्तोच्छेदरूपा क्षणिकनिरतिभिस्तार्किकैः कापिलैर्वा
सोक्ता मुक्तिर्निरस्ता दृढनयनिकरैरात्मपक्षे च मुक्तिः ।
एकानेका चिदेकाश्रयविषयवती जीवभावैकहेतु-
र्याऽविद्या तन्निवृत्तिः परमसुखमयी जीवतश्चेति सोक्ता ।।

**नयनप्रसादिनीकारः प्रत्यक्स्वरूपः—**

अयं महाविद्वान् प्रत्यग्रूपप्रत्यक्स्वरूपाभ्यामुभाभ्यां नामभ्यां प्रसिद्धि गतः तत्त्वप्रदीपिकाग्रन्थमाश्रित्यापूर्वां व्याख्यां नयनप्रसादिनीपदां विरचितवान्। अस्याविर्भावकाल इतिहासविद्भिः १५०० पञ्चदशशताब्दीति निश्चीयते। केचित्तु १४०० चतुर्दशशताब्दीति वदन्ति। कस्मिन् भारतवर्षस्य भूभागेऽयं लब्ध-जनिरिति न निश्चितमद्यावधि। अस्य गुरवः प्रत्यक्प्रकाशाः, परमगुरवः सत्यप्रकाशाः, विद्यागुरवश्च मानसतीर्था आसन्निति अस्यैव मङ्गलश्लोकेन निश्चीयते, यथोक्तम्—"सत्यप्रकाशपरिशुद्धनिजानुभावम्"।

प्रत्यक्प्रकाशमभिनौमि गुरुं यतीन्द्रम्।
वन्दे विद्यागुरुमविरतं मानसं तीर्थमार्यम् ।।

अयं प्रत्यग्रूपो भगवान् सर्वशास्त्रपारं गतः अदुष्यवैदुष्यसंभूषितः प्रगाढ-पाण्डित्यपूर्ण इति तदीय प्रबन्धेनैव ज्ञायते। प्रतिपादनशैली अस्य संक्षिप्ता बोधगम्यास्तीति तद्ग्रन्थावलोकनेन ज्ञायते।

**नयनप्रसादिनी—**

श्रीचित्सुखमुनिकृततत्त्वप्रदीपिकायाः सर्वासु टीकासु नयनप्रसादिनीव्याख्या अत्यन्तमहत्त्वपूर्णा वर्तते। वस्तुतस्तत्त्वप्रदीपिका प्रदीपिकेयं मूलार्थावबोधिनी विविधान्यवान्तरविषयविवेचिनी परिमितपदा बहुलार्थप्रदा रत्नमिव महार्हा श्रीस्वामिप्रत्यक्स्वरूपविरचितातिसूक्ष्मविचारोपचिता परिमार्जितशैलीसम्पन्ना नातिविस्तृतबन्धा निकषमिव विद्वत्ताया लघुमञ्जूषेव पदार्थरत्नानामद्वैतानुभववैदु-ष्याादिगुणगणपरिचायिकेव तत्कर्तुर्विद्वन्मानसमनोहारिणी, न्यायमीमांसादि-शास्त्रोपक्षेपिणी नीयते अनेनेति नयतीति वा नयनं लोचनं सद् वस्तु वा तत् प्रसा-दयति मोदयति विशदीकरोति प्रकाशयतीति वार्थमन्तर्भावयन्ती व्याख्या विदुषां मनोहरत्येव। तत्र श्रीप्रत्यग्रूपस्य भवतोऽतिगम्भीरायामगाधायामुक्तौ ममानु-सन्धानं तावद् आत्मनः कृतार्थीकरणम्। एतस्य महानुभावस्य महाविदुषः प्रादुर्भाव काल इतिहासज्ञानुसारं चतुर्दशताब्दीतः पूर्वं एवासीदिति ज्ञायते। मङ्गले एवानेन स्वगुरूणां परिचयः प्रदत्तः। परमगुरवः सत्यप्रकाशाः, गुरुवः प्रत्यक्प्रकाशाः, विद्या-गुरवो मानसतीर्था आसन्नित्युक्तमेव। अस्य व्याख्यावलोकनेन सूक्ष्मातिप्रखरप्रति-

भाग्या: सद्य एव परिचयो जायते। मया यथामति यथापेक्षं तत्र तत्र सूक्ष्मा विषया विस्तरेण निरूपिता: सन्ति। यद्यपि एतादृशनिगूढागाधप्रबन्धे नयनप्रसादिनी-संज्ञे ममाल्पधियोऽवगाहनमतिकठिनम्; तथापि करतलामलकमिव वेदान्तार्थमवलोकयतामनुभवतामनुभावयताञ्च अपूर्वप्रतिभाप्रकाशकल्पनासमवेतानां गुरूणां पण्डितप्रकाण्डानां डॉ० श्रीदेवस्वरूपमिश्राणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये दर्शनसंकायच्छात्रकल्याणसंकायद्वयाध्यक्षाणामाचार्याणां कुलपतीनां परमकृपया निर्देशेन तत्र तत्र तत्त्वावबोधेन कथञ्चिद् अयं शोधप्रबन्धो लिखितो विदुषां मोदाय भवेदिति पुनः पुनरहं भगवन्तं साम्बशिवं प्रार्थये इति शम्।

वाराणस्याम्,
विजयादशम्याम्,
वि० सं० २०४३

विदुषां वशंवदः
**पारसनाथद्विवेदी**
व्याकरण-वेदान्ताचार्यः
उपाचार्यः, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणसी

## कृतज्ञताज्ञापनम्

प्रस्तुतशोधप्रबन्धनिर्देशकानां श्रुतिवत्प्रमाणभूतवचसां शारदाराधनसमुपजातविमलविवेकविगलिताखिलाविद्याविर्भूतप्रकाशानां सम्पूर्णानन्दसंस्कृत-विश्वविद्यालये वाराणसेये समासादितकुलपतिपदानां वेदान्तविभागाध्यक्षाणामाचार्याणां दर्शनसंकायच्छात्रकल्याणसंकायाध्यक्षाणां पण्डितप्रकाण्डानां डॉ० श्रीदेवस्वरूपमिश्राणामस्मद्गुरुचरणानां पण्डितराजानां शास्त्रार्थपञ्चाननवेदान्तभूषणोपाधिभाजां चरणसरोरुहेषु कृतज्ञताख्यापनविधौ मया शिष्येण दासेनानुकम्प्येन इमे पद्यप्रसूनाञ्जलयः समर्प्यन्ते—

अनस्तमितमभ्रमं ग्रहगणेषु विद्याकरं
सदुत्तरगति स्तृतान्तरघनान्धकारापहम् ।
अशून्यचरणातुलं किमपि चेतनं सर्वदा
महो जयति मण्डितं कुलपतेः पदेनाद्भुतम् ।। १ ।

सङ्गादसङ्गहृदयो विरजा रजोभ्यः
जातोऽस्मि रागरहितश्चरणस्य रागात् ।
तीर्णो भवात् सुविपुलात् खलु यस्य भावाद्
वन्दे तमेव शरणं गुरुमात्मवन्तम् ।। २ ।

पश्यामि नामसततं समनः शरीरं
स्वीयं घटादिमिव भिन्नतया समस्थः ।
येषामलभ्यदयया तपसां निधीनां
तान् राम ! रक्ष ! निखिलात्मवतां वरिष्ठान् ।। ३ ।

यत्पादपङ्कजरजःकणिकाप्रभावात्
पापाचलोऽहमपि नाम भवाब्धितीर्णः ।
अत्यन्तधार्मिकमृदुं विदुषां वरेण्यम्
तं रक्ष रक्ष भगवन् रघुवंशनाथ ।। ४ ।

बोधोदयास्तसकलान्धतमःप्रपञ्चं
अद्वैतसिद्धिरममाणमखण्डवृत्त्या ।
ब्रह्म प्रमाणपरमार्थदृशं पवित्रं
वेदान्तशास्त्रमिव तं शरणं प्रपद्ये ।। ५ ।

वादीभकुम्भकुलिशं कुलशीलयुक्तं
मुक्तं महाशयमहो बुधसेव्यपादम् ।
शिष्यैः सुरैरिववृतं विबुधेशमीशम्
वक्तारमीदृशमहं प्रणमामि भक्त्या ॥ ६ ।

श्रीशारदारुचिरभालविलग्नबिन्दु-
सौभाग्यसारमिव तं भुवि राजमानम् ।
मूर्ध्निस्थितं विबुधराजमणिं महार्हम्
वन्देऽनवद्ययशसं जपतां वरिष्ठम् ॥ ७ ।

सूक्ष्मं सदा हि परिपश्यति धर्मतत्त्वं
वार्तास्वपि स्वयमहो परिवक्ति धर्मम् ।
वेदान्ततत्त्वविदपि क्षमते सुलोकं
न्याय्यं करोति दृढसत्यवचोऽभिरक्तः ॥ ८ ।

साधारणानपि जनान् श्रुतिदिष्टमार्गे
सम्प्रेरयन् परिवदन् हितमेव सत्यम् ।
दत्त्वा स्वयं च परिहृष्यति दापयित्वा
लोकेऽनुरूपगुणवान् पितृवत्प्रसिद्धः ॥ ९ ॥

स्वच्छं विभुं नभ इवेन्दुमिवामृतौघ
तेजश्चयं रविमित्राविभ्रमिवात्मधीरम् ।
श्रेयस्करं परधर्ममिवात्रसन्त
काश्यां सुरक्षतु सदा खलु विश्वनाथः ॥ १० ।

गच्छन् स्वपन् किमपि कार्यमनन्यभावः
कुर्वन् सदोरसि निज परमं स्वरूपम् ।
शास्त्राप्तबुद्धिनिरतः सुनिगूढरूपं
पश्यत्यनवरतमहंरहितः प्रशान्तः ॥ ११ ।

शश्वत् परोपकृतिकर्मपरायणं तं
अम्भोभिरम्बुदमिव प्रकृतिप्रसन्न ।
मार्गे सतां समनसां शुचि शीलवन्तं
शास्त्रार्थधुर्वहमहर्निशमीश ! रक्ष ॥ १२ ।

सत्ये शमादिसहिते निगृहीतकोपे
निष्कामकर्मसुविशुद्धविवृद्धचित्ते ।
कारुण्यपूर्णहृदये करुणावतार !
श्रीराम ! तादृशगुरो भव मे दयालुः ॥ १३ ।

प्रीत्या प्रसन्नमनसा सुतवत् सदाऽहं
तेन स्वभावसरलेन समस्तशास्त्रम् ।
पाठप्रकर्षसमुदारवचोऽभिरामं
यत्नेन गुह्यमपि नाम सुपाठितोऽस्मि ॥ १४ ।

हे राम राघव ! दयानिचयैकसिन्धो !
एकं ममापि शृणु नाथ वचो लघीयः ।
तस्मै स्तुवे भगवते गुरवे भवन्तं
सर्वाः श्रियः सुखकरं परमायुरस्तु ॥ १५ ।

हे विप्ररक्षक ! महावरचापहस्त !
सर्वासु दिक्षु सततं जपबद्धभावम् ।
भूरत्नमीश ! परिपालय मे गुरुं तं
राजन् दयालुतम ! धर्मविवात्र सन्तम् ॥ १६ ।

ततः परं प्रतिभाजुषो नव्यन्यायदिनमणीनाचार्यान् मदुपकारपरायणान् श्रीमतो बदरीनाथशुक्लान् कुलपतीन्स्तौमि—

पूज्यं न्यायेऽद्वितीयं कुलपतिपदवीमादधानं महान्तं
वाराणस्यां वसन्तं विबुधगणकृतापूर्वसम्मानयुक्तम् ।
शास्त्रार्थे दुर्विगाहे स्वगुरुमिव गतिं तेजसा धारयन्तं
जानन् तस्योपकारं कृतिवरबदरीनाथशुक्लं नमामि ॥ १ ।

नीतौ निष्णातबुद्धिं रविमिव परितः तेजसा प्रज्वलन्तं
सम्यक्शास्त्रे प्रशास्तौ समधिगतमहाकौशलं श्रीविशालम् ।
विद्वद्वृन्दप्रधानं कृतमतिबदरीनाथशुक्लं प्रसन्नं
वन्दे विख्यातकीर्त्तिं निजगुरुमिव तद्दीर्घमायुष्यमिच्छुः ॥ २ ।

ततः पाणिनिशास्त्राम्भोधिपारं गतानां गुरूणां लब्धकीर्तीनां पण्डितश्रीरघुवीर-पाण्डेयानां सततविद्यादानोपकारपरायणानां मयि निरन्तरस्नेहभाजां चरणेष वन्दनम्—

दिगन्तविश्रान्तविशुद्धसंश्रवाः
तलप्रविष्टः खलु पाणिनेर्नये ।
विधाय शिष्यान् शतशोऽतियन्ततः
सुपाठनेनैव दिनान्ययापयत् ॥ १ ।

निगूढशास्त्रार्थमपि व्यधापयद्
विशिष्टशैल्याल्पधियोऽपि यः कृती ।
दिवं गतः पुण्यमयस्तपोधनो
स्तुवे गुरुं तं रघुवीरसंज्ञकम् ॥ २ ।

तदनन्तरं ब्रह्मविद्याचार्याणां श्रोत्रियब्रह्मनिष्ठवीतरागाणां महामण्डलेश्वराणां संस्कृतभाषाविच्छात्राध्यापकविप्रवृन्दकल्पद्रुमाणां सिद्धवाचां पावाहारिश्री-१००८ वाळकृष्णयतीनां निरन्तरमन्नद्रव्यानुशासनस्नेहदानमानै र्मदुपकारपरायणानां सिद्धपीठहथियाराममठाधीशानां चरणेषु शतशो नमामि—

मठे प्रसिद्धे हथियेति संज्ञके
विराजमानो यतिमण्डलेश्वरः ।
तपोधनो ध्यानपरायणात्मवान्
जितेन्द्रियस्त्यक्तपरिग्रहो यतिः ॥ १ ।

विनेयदानादिविधौ सुरद्रुमः
यदाश्रयेऽहं सुतरामधीतवान् ।
अमोघवाक् सज्जनवृन्दसेवितः
स बाळकृष्णो जयताद् मुनीश्वरः ॥ २ ।

# विषयानुक्रमणी

# नयनप्रसादिन्याः समीक्षणम्

## प्रथमः परिच्छेदः

रामारविन्दविमलोदरभासमाना
पीताम्बरा भगवती भुवनैकशक्तिः।
विद्या परा सकलबन्धविमोक्षहेतुः
सिद्धिं करोतु सदया मम सिद्धिदात्री ॥ १।

ब्राह्मं मार्गमनाविलं वितिमिरं वेदान्तविद्याकरै-
र्विद्वन् मानसपङ्कजं विकसितं कोकात्मशोकक्षतिम्।
वन्दे शारदवैभवं विदधतं शास्त्राम्बरे भास्करं
तेजोराशिमिव स्वयं समुदितं "देवस्वरूपम्" गुरुम् ॥ २।

यो न्यायादिसमस्तशास्त्रनिवहैर्निष्णातपूर्णः सुधी-
र्वेदान्तैर्विभवैर्दधद् विधुसमः शोभां परां शारदैः।
धर्मात्मोद्भटवाग्विलासमधुरः साक्षात् कृतात्मानघो
वन्दे पण्डितराजमाजमिह तं देवस्वरूपं गुरुम् ॥ ३।

अदीनवाचं पितरं विशुद्धं शिवशङ्करम्।
वन्दे रामसखीं देवीं जननीं पतिदेवताम् ॥ ४।

प्रणम्य पादाब्जरजांसि तद्गुरो-
र्गिरो महार्थाः सुविचिन्त्य तत्परः।
करोमि सम्यङ्नयनप्रसादिनी-
निगूढबन्धस्य समीक्षणं धिया ॥ ५।

### अथ मङ्गलविचारः

तत्र विघ्नध्वंसकामो मङ्गलमाचरेदिति श्रुतिः, सर्वे विघ्नाः शमं यान्ति गणेशस्तव पाठतः इत्यादि स्मृतिः, मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत् पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति भगवन्महाभाष्यकारपतञ्जलिवचनमित्येवं रूपेण श्रुतिस्मृत्यविगीतशिष्टानुगृहीतायुष्यापराजयसमाप्तिप्रयोजनं विघ्नध्वंसकामा माङ्गलिका ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते

च मङ्गलमाचरन्ति। अगर्हिताभीष्टसिद्धिर्मङ्गलम्। तत्प्रयोजन आचार्यो माङ्गलिक इति [1]वृद्धिरादैजिति सूत्रभाष्यप्रदीपे कैयटः। तस्य तत् प्रतिपादकशब्देऽपि प्रयोग इति तत्रैव प्रदीपोद्द्योतकारा नागेशभट्टाः। तत्र मङ्गललक्षणे अगर्हितत्वनिवेशाद् मारणादिप्रयोगे नातिव्याप्तिः। शास्त्रानुष्ठानेन धर्मोपचयाद् आयुर्वर्धनम्। तत्राविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वम्। शिष्टत्वञ्च फलसाधनांशे भ्रमरहितत्वम् आप्तत्वं वा वेदप्रामाण्याभ्युपगन्तृत्वं वेति। इष्टस्मरणं वा मङ्गलम्। अस्मिन् पक्षे गणेशस्तवपाठे स्वाव्यवहितोत्तरजायमानविघ्नध्वंसं प्रति पृथक् कारणता वाच्या। पाठस्योच्चारणस्वरूपत्वात्।

मङ्गलं त्रिविधम्। आशीर्वादात्मकम्, नमस्कारात्मकम्, वस्तुनिर्देशात्मकञ्चेति। ननु नमस्कारलक्षणे मङ्गल आशीर्लक्षणे च नमस्कार्यदेवताप्रसादाद् आशीर्वादकदेवतानुग्रहाद् भवति अगर्हिताभीष्टसिद्धिरिति मङ्गललक्षणमुभयत्र संघटते; किन्तु वस्तुनिर्देशात्मकमङ्गले वस्तुमात्रनिर्देशेन कथं मङ्गललक्षणं घटेत? कथञ्च विघ्नध्वंसपूर्वकसमाप्तिर्ग्रन्थस्य स्यादिति चेत्, न, वस्तुनिर्देशाद् ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकानुबन्धज्ञानेन इदं मदिष्टसाधनं कृतिसाध्यञ्चेति पाठकस्य ज्ञानात् प्रवृत्तिर्भवतीति स्वग्रन्थप्रचारोपयोगितादिद्वारा ग्रन्थकारस्याभीष्टसिद्धिर्जायत एव। नह्यभीष्टसिद्धिपदस्य तात्पर्यं तुलाधृतम्। ग्रन्थप्रचारहेतुः पाठकादीनां प्रेक्षावतां प्रवृत्तिरपि ग्रन्थकर्तुरिष्टैव वेति। विघ्नध्वंसादि तु ग्रन्थादिबद्धभगवत्स्मरणादिना भविष्यति। अथवा वस्तुनिर्देशेऽपि यावता मङ्गलत्वे सिद्धे, उक्त श्रुत्या विघ्नध्वंसग्रन्थसमाप्तिरपि भविष्यत्येव बाधकाभावात्।

तत्त्वप्रदीपिकायां स्तम्भाभ्यन्तेरत्यादि मङ्गलमाशीर्लक्षणम्। अत एव नयनप्रसादिनीकाराः श्रीप्रत्यग्रूपाख्याः स्वयं यन्नित्यं निरवग्रहमित्यादि ब्रह्मवाणीगुरुनमस्कारात्मकं मङ्गलमाचरन्तः कथयन्ति "प्रारिप्सितस्य प्रकरणस्य निरन्तरायपरिसमाप्तिपरिपन्थिदुरितपरम्परानिवारणाय शिष्योपशिष्यद्वारा प्रचयप्रचाराय शिष्टानुष्ठानप्रतिष्ठापनेन शिष्टपरिग्रहाय च प्रवरगुणगणोपवर्णनपूर्वकं परमेश्वरं परिपूजयन् आशीर्लक्षणं मङ्गलमविगीतशिष्टाचारानुमितस्मृतिपरिकल्पित-श्रुतिप्रमाणकमाचरितं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति स्तम्भ्याभ्यन्तरेति"[2]। तत्र श्रुतिरुक्ता स्मृतिरपि, अविगीतत्वं शिष्टत्वञ्चोक्तमेव।

ननु मङ्गलमाचरितम्, ग्रन्थे तु कथं निबध्यते केवलपाठमात्रेण मनसि तथानुष्ठानेन वा तत्फलानां सिद्धेरिति, चेत्, न, शिष्यशिक्षार्थं निबन्धनस्यावश्यकत्वात्। शिक्षा च स्वकर्तव्यत्वप्रकारकज्ञानानुकूलो व्यापारः। शिक्षयाचेदं मदीयं कर्तव्यमिति ज्ञानोत्पत्तेः। एवञ्च शिष्या अपि एवं कुर्युरिति बुद्ध्या लोकपरम्परा-

१. सू० १।१।१;

२. चित्सुखी—पृ० २।

परिपोषका माङ्गलिका आचार्या अनुग्रहेण ग्रन्थतो निबध्नन्ति। किञ्चाध्येतृणामपि अनुषङ्गतो मङ्गलं भवति, ग्रन्थे निबन्धनात्। तत्रानुषङ्गपदार्थं इतरार्थंप्रवृत्तस्येतरार्थलाभ इति। ग्रन्थविषयज्ञानप्रवृत्तानामध्येतृणां ग्रन्थनिबन्धितमङ्गलादेवायुष्यापराजयनिर्विघ्नाध्ययनरूपेतरार्थस्य लाभो भवत्येवेति भावः।

अत एव मङ्गलस्य एवंविधवक्तृश्रोतृगताभीष्टसिद्धिरूपत्वाद् माङ्गलिक आचार्यः पाणिनिः परापरज्ञो विदितवेदितव्यो विधेयत्वेन नियमतः परोच्चारणीयमपि वृद्धिशब्दं वृद्धिरादैजिति स्वाष्टाध्यायीस्थप्रथमसूत्रे मङ्गलार्थमादितः प्रयुङ्क्ते। यथोक्तं महाभाष्यकारैः "तदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यं मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते, सर्वत्रैव हि परोच्चारितो विधेयः अदेङ्गुण इत्यादि"। अत एव वार्त्तिककारः 'सिद्धे शब्दार्थसम्बन्धे' इति प्रथमवार्त्तिके नित्ये शब्दार्थसम्बन्धे इत्युच्चारयितव्ये सिद्धशब्दमादितः प्रयुङ्क्ते। अत एव च भाष्यकाराः श्रीमच्छङ्कराचार्या ब्रह्मसूत्रभाष्यादौ "युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद् विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणाञ्चाध्यासः[१]" इत्यादिग्रन्थेनानुपप्लुतं चिन्मात्रमात्मानमनुसन्दधानास्तत्त्वानुस्मरणं मङ्गलाचरणं विघ्नोपशमनार्थं कृतवन्त एवेति। प्रतिपादितञ्चैतद् अध्यासभाष्यस्यानन्दगिरीयनिर्णये रत्नप्रभायाञ्च।

किञ्च युष्मत्पदस्य प्रथमोच्चारणाद् मङ्गलं सिद्धम्, तत्र युष्मत्पदार्थस्याभ्यर्हितत्वात्। उक्तञ्च सिद्धान्तबिन्दौ श्रीमन्मधुसूदनसरस्वतीभिः न भूमिर्न तोयं न तेजो न वायुरित्यादि श्लोकव्याख्यावतरणे "तत् पदार्थस्य शास्त्रतात्पर्यविषयतयाऽभ्यर्हितत्वेऽपि त्वम्पदार्थस्य शास्त्रफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात्। अतस्तत्रापि मङ्गलं सिद्धमिति। ननु नयनप्रसादिन्यां प्रथममङ्गलश्लोकव्याख्यानावसरे[२] "हरिरज्ञानतत्कार्यहर्ता वो युष्मान् अव्यात् रक्षतात्" "हरिरित्यनेन अज्ञानतत्कार्यहारित्वदर्शनाद् निधूतोपाधिव्याधिपरिशुद्धं प्रत्यग्रूपं ब्रह्म प्रयोजनं सूचितम्" हरत्यज्ञानं तत् कार्यमिति हरिरित्युक्तम्। अत्र किञ्चित् प्रस्तूयते—उपनिषत्प्रमाणकेऽद्वैतवेदान्ते तावत् पदार्थो द्विविधो दृग् दृश्यश्चेति। तत्र दृग् चिद्रूपा द्विविधा—उपहितानुपहितरूपेण। अनुपहिता केवला मोक्षदशायां भाति। उपहिता तु जीवेश्वरभेदेन भेदद्वयवती। दृश्यश्चाज्ञानमूलकः सकलोऽनात्मप्रपञ्चः। तत्रात्मनि सर्वस्य प्रपञ्चस्याध्यासः समूलस्य स्वीक्रियते। अध्यासश्च स्मृतिरूपः परत्र पूर्वदृष्टावभासः[३]। 'ब्रह्मवेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्[४]' 'ज्ञात्वा देवं

---

१. ब्रह्मसूत्रम्—१।१।१ पृ०, २;
२. चित्सुखी, पृ० २।
३. मु० उ० ३।२।९;
४. छा० ७।१।३।

मुच्यते सर्वपाशैः'इत्यादिश्रुत्यन्यथानुपपत्त्या प्रपञ्चस्य ब्रह्मणि अध्यस्तत्वं मन्तव्यम्। अन्यथा ब्रह्मज्ञानादपि स न निवर्तेतेति। दृश्यते च लोके अधिष्ठानरूपशुक्तिदर्शनाद् आरोपितस्य रजतस्य निवृत्तिरिति। अतः शुक्तौ रजतवत् सकलोऽपि प्रपञ्चो ब्रह्मणि अध्यस्त इति स्वीक्रियते। तत्र सर्वस्य प्रपञ्चस्य विवर्तोपादानत्वं ब्रह्मणः, परिणामोपादानत्वमविद्याया इति। तत्रोपादाननिवृत्त्या तत्कार्यस्यापि निवृत्तिर्भविष्यति। ब्रह्मज्ञानाद् अविद्याया निवृत्तौ अविद्योपादानकस्य कार्यभूतस्य समस्तस्य प्रपञ्चस्यापि स्वयमेव निवृत्तिः सिद्धा भवतीति। अज्ञानं हरतीति हरिरित्येतावता कथनेनाप्यभीष्टसिद्धिः स्यात्, तत्कार्यहारित्वनिवेशनं किमर्थमिति। नहि शुक्तिरियमिति ज्ञाने सति रजतज्ञानं तत् प्रयुक्तलोभादिप्रयुक्ताहरणप्रवृत्तिरपि दृश्यते अधिष्ठानज्ञानेन सर्वस्याप्यारोपस्य निवर्त्तनात्। अधिष्ठानत्वञ्चारोप्यमाणसत्ताधिकसत्ताकत्वम्।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ इति।

इत्युक्तदिशा परावरब्रह्मदर्शनात् सर्वानात्मवस्तु निवर्तनात्। न च हरिशब्दस्य व्युत्पत्तिमात्रं क्रियते। तत्र येषां मते निमित्तकारणमज्ञानं तन्मते अज्ञाननाशात् तत्कार्यस्य नाशासम्भवः। नहि दण्डे नष्टे घटोऽपि नष्ट इति क्वचिद्दृश्यते। अत उभयोपादानं सार्थकमिति वाच्यम्, तन्मते अज्ञानस्य ज्ञानाभावरूपत्वाद् अभावस्य च कस्याप्युपादानकारणत्वायोगात्[1]। कार्यशब्देन परिणामस्य ग्रहणाद् अद्वैतमते च नाज्ञानमभावरूपं तस्य अधर्मवद् भावरूपत्वात्। किञ्चान्यमते नायं ग्रन्थो योजनीयः। अग्रे हरिशब्देन निर्धूतोपाधिव्याधिपरिशुद्धं प्रत्यग्रूपं ब्रह्मैव गृहीतमिति तादृशो हरिरन्यत्राप्रसिद्ध इति चेत्, अत्रोच्यते—यद्यपि अज्ञाननिवृत्त्या तत् कार्यस्यापि निवृत्तिर्भवति; तथापि हरिशब्दव्युत्पत्तौ तत्कार्योपादानं सर्व एव प्रपञ्चः अज्ञानकृतस्तदुपादानक एवेति द्योतनाय कृतम्। तथा च अविद्यापरिणामत्वस्य प्रपञ्चे सिद्धत्वाद् ब्रह्मज्ञानेन सविलासायास्तस्या निवृत्तिरिति। अत एव वेदान्तपरिभाषाकारैर्मङ्गलाचरण एवोक्तम्—

यदविद्याविलासेन भूतभौतिकसृष्टयः।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम्[2]॥ (मु० उ० २।२।८)

यदधिष्ठिता अविद्या यदविद्या, तस्या विलासः, कार्याकारेण परिणामस्तेन भूतानां वियदादीनां सूक्ष्मासूक्ष्माणां भौतिकानां चराचराणां भूतकार्याणां सृष्टय

---

१. नैयायिकास्तु प्रतिबन्धकाभावविधयाभावस्य कार्यमात्रं प्रति निमित्तकारणत्वं स्वीकुर्वन्ति, तथापि तन्मते नायं ग्रन्थो योजनीयः।
२. वे० प० पृ० १।

इत्यर्थः। यद् ब्रह्माविद्याविलासेन भूतादि सृष्टयो भवन्तीति वासुदेवः सर्वमितिवत् मृद्घट इतिवत् सुवर्णपिण्डं खदिराङ्गारवर्णं कुण्डले भवत इतिवत्, इदं रजतमितिवद् वा सामानाधिकरण्यमत्र। परमात्मैव जगद्रूपेण विवर्तते अविद्यावशात्। ब्रह्मैव तादृशः परमात्मा तं नौमि इति विधेय लिङ्गात् तमिति निर्देशः। उद्देश्यविधेययोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्तीति नियमादिति गुरवः। 'अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृज्यमानां सरूपाः[१]' इति श्रुतेः। 'मयाध्यक्षेण प्रकृतिः सूयते स चराचरम्[२]' इति स्मृतेश्च। अत एवाद्वैतसिद्धिकाराः 'मायाकल्पितमातृतामुख्यमृषाद्वैतप्रपञ्चाश्रय' इति अद्वैतसिद्धिग्रन्थादौ मङ्गलाचरणे प्राहुः। अतोऽज्ञानं तत् कार्यं हरतीति हरिरिति कथनेन अज्ञान कार्यमेव सर्वविकारजातमिति सूचितं स्वसिद्धान्तश्च स्पष्टीकृतः। तत्र तत्कार्यस्य हारित्वञ्च कारणनिवृत्त्येति बोध्यम्। अत एव अज्ञानादिनिवृत्त्या शुद्धं ब्रह्म प्रयोजनं तत्त्वप्रदीपिकाग्रन्थस्येति सूचितम्। अतः "हरिरज्ञानतत्कार्यहर्ता" इति व्याख्यानं समीचीनमेव।

अत्रेदं बोध्यम्—यथा शुक्तौ प्रतिभासमानमारोपितं रजतं न शुक्त्यैव निवर्तते, भ्रमासिद्धेः; किन्तु शुक्तिरियं न रजतमिति ज्ञातया शुक्त्या, तथैव सर्वसविछासानाद्यविद्याधिष्ठानभूतं ब्रह्म न स्वरूपेण हारकं निवर्तकं वा भवितुमर्हति, प्रपञ्चस्यैव तावद् अभासमानत्वापत्तेः। तस्य भासा सर्वमिदं विभातीति श्रुतेस्तस्य ब्रह्मणो ज्ञानाज्ञानसर्वस्यापि प्रपञ्चजातस्य स्वरूपभासकत्वावगमात्। किन्तु तत्त्वमस्यादिवाक्यजन्याखण्डाकाराकारितान्तःकरणवृत्त्यारूढं ब्रह्म अज्ञानस्य निवर्तकमिति। ज्ञात्वा देवं मुच्यते सर्वपाशैः, क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादि श्रुतेः। अत्र हरिरज्ञानतत्कार्यहर्तेति नयनप्रसादिनीकारमतेऽपि तथैव बोध्यम्। अर्थाद् ज्ञानविषयतापन्नो हरिः सर्वस्य निवर्तक इति भावो विवक्षितः। अत एवाग्रे तैः—

प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥

इत्यत्र व्याख्यायामुक्तम्—"प्रमाणं तत्त्वमस्यादिवाक्यजनिता, जीवब्रह्मैक्याकाराचित्प्रतिबिम्बधारिणी बुद्धिवृत्तिस्तत् प्रतिबिम्बितं वा चैतन्यं वाक्यापेक्षया बहुत्वम्। प्रमाणमयैर्नखैर्निर्भिन्नो महामोहाह्वयोऽमरारिरसुरो[३] येन"।

ननु स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्याततद्वैभव इति चित्सुखाचार्य मङ्गलश्लोके आभ्यन्तरगर्भशब्दयोरुभयोरेकार्थत्वाद् उभयोरुपादानाद् घटकलशशब्दवत् पुनरुक्तिः स्यात्। पुनरुक्तिश्च केनचिच्छब्देन प्रतिपादितार्थस्य पुनस्तद्वाचकेनैव पर्यायान्तरेण प्रतिपादनम् द्वितीयवारप्रतिपादनहेत्वनुसन्धानविलम्बेन रसप्रतीति-

---

१. श्वे० ।५; २. गी० ९।४; ३. चि० पृ० ४।

विलम्बनं दूषकताबीजम्। अत्रापि आभ्यन्तरशब्देन प्रतिपादितस्यैव मध्यार्थस्य गर्भशब्देनापि प्रतिपादनमिति भवति पुनरुक्तिरर्थस्येति चेत्, न, अत्र पुनरुक्तिप्रतीतिमात्रं भवति न तु वस्तुतः पुनरुक्तिः। तथा हि स्तम्भस्याभ्यन्तरं तत्र यो गर्भभावस्तेन निगदव्याख्यातं वैभवं यस्येति विग्रहः। अत्र व्याख्याने केवलगर्भपदोपादानेन गर्भस्यापि स्पष्टतया लक्ष्यमाणत्वात् सर्वभूतेषु परमात्मनः स्पष्टप्रतिपत्त्यापत्तिः स्यात्। आभ्यन्तरे यो गर्भभाव इति वचनाच्च गर्भत्वमनभिव्यक्ततया वृत्तित्वं गृह्यते। केवलाभ्यन्तरपदोपादानेन च गृहाभ्यन्तरावस्थितदेवदत्तादिवत् परमात्मनोऽवस्थानापत्तिः स्यात्, अतो गर्भभाव इति पदोपादानम्। उभयोपादानेन च हरेरतिशयनिलीनत्वं द्योतितम्। तथा च श्रुतिः—[1]'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते इति। "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति[2]",[3]"सर्वभूताशयस्थितः"इत्यादिस्मृतिरपि।

अथवा अन्तरमभिव्याप्याभ्यन्तरम्, अभ्यन्तरमेवाभ्यन्तरं तत्र भवं वेति। आभ्यन्तरश्चासौ गर्भभावः अनभिव्यक्ततयावस्थानमिति आभ्यन्तरगर्भभावः, स्तम्भे आभ्यन्तरगर्भभाव इति स्तम्भाभ्यन्तर गर्भभावः। एतेन प्रत्यन्तरं स्तम्भादिषु गर्भभावेन निलीनः परमात्मेति आगतम्। अन्यथा स्तम्भे गर्भभाव इति व्याख्ययैवाभीष्टार्थलाभे, आभ्यन्तरपदं व्यर्थं स्यात्।

अतिशयनिलीनत्वाच्च परमात्मनः प्राप्तिर्न सुगमेति ध्वन्यते। अपि तु गृह्यते त्वग्रया बुद्ध्येति श्रुत्या, भक्त्या त्वनन्यया लभ्य इत्यादि स्मृत्या च उक्ताखण्डाकारधियैव लभ्य इत्यपि सूचितम्। अत एव सर्वत्रैव रामं पश्यतां तदाकारधियां प्रह्लादानां कृते सर्वान्तरसूक्ष्मावस्थितः परमात्मा स्तम्भे जडेऽपि सहसा प्रकटीभूतः।

ननु सर्वगतस्यापरिच्छिन्नस्य व्यापकस्य परमात्मनः कथमेकस्मिन् प्रदेशे प्रकटीभाव इति चेत्, न, सर्वगतस्यापिपरमेश्वरस्य देशविशेषोपाधिनिमित्तो व्यपदेशः सम्भवत्येव। यथोक्तं ब्रह्मसूत्रशाङ्करभाष्ये सर्वत्र प्रसिद्धयधिकरणे "सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात् परिच्छिन्नव्यपदेशोऽपि कयाचिदपेक्षया सम्भवति। यथा सर्ववसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते"। तथा च सूत्रम्— "अर्भकौकस्त्वात् तद्व्यपदेशाच्च वेति चेन्न निचाय्यत्वाद् एवं व्योमवच्च"[4]। अतो व्यापकस्यापि भगवतो भक्तानुग्रहार्थं सर्वशक्तिमत्वाद् देशविशेषे प्रादुर्भावः परमकारुणिकस्य नासम्भवी। अतएव सुलभशब्देन परमात्मोच्यते सर्वत्र सत्त्वात् सर्वत्राविर्भावशक्तिमत्वाच्च। "तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः"। नहि पृथिव्यादिविकारयोगाः सर्वत्र लभ्याः। परमात्मा तु यत्रैवेष्टव्यो भक्तिमता तत्रैव लभ्यः। अत उपासनार्थं शिलादावपि तद्भावः। हृद्देशावच्छेदेनावस्थानम्। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'इति स्मृतिवचनात्। तदात्मानं सृजाम्यहमिति स्मृत्या च शरीरावच्छेदेनाविर्भावः सिद्धः।

---

१. कठ० १।३।१२;
२. गी० १८।६१।
३. गी० १०।२०;
४. ब्र० सू० १।२।७।

ननु[1] "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् इति" श्रुत्या तस्य परमेश्वरस्य अकायादिशब्देन स्थूलसूक्ष्मकारणशरीरत्रयशून्यत्वं प्रतिपाद्यते। तत् कथमत्र यः पाञ्चाननपाश्वजन्यवपुषेति चित्सुखाचार्यैरुच्यत इति चेत्, न, परमात्मनो भक्तानुग्रहार्थं शरीरसम्भवात्। यद्यपि परमार्थतस्तस्य न शरीरादिः, तथापि[2] "यस्य पृथिवी शरीरं यं पृथिवी न वेदेत्यादि श्रुत्या [3]पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यमित्यादि श्रुत्या च [4]"वासुदेवः सर्वमिति [5]मयि सर्वमिदं प्रोतम्" [6]तदात्मानं सृजाम्यहमित्यादिस्मृत्या च परमेश्वरस्य स्वेच्छया स्वशक्त्यैव शरीरधारणमुपपद्यते। रामादिरूपेणावतारा अपि धर्मोत्थानाय भक्तजनविमुक्तये लोकमङ्गलाय भगवत उपपद्यन्त एव। अत एव ब्रह्मसूत्रशाङ्करभाष्ये भूतयोनिशब्दस्य परमात्मैवार्थं इति प्रतिपादनाय "रूपोपन्यासाच्चेति[7] सूत्रं प्रवृत्तं तत्रत्यं भाष्यञ्च सर्वं तत्परमेव दृश्यते। एकोऽहं बहुस्यामितीच्छया परमात्मन अनेकरूपेण प्रादुर्भावः श्रुतिसिद्धः। लीलयैव परमात्मा मायया अवशीभूतः स्वेच्छया विभिन्नवपुर्धारणं करोति।

अत एव "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहमिति" (गीता ७।२१) प्रवृत्ता।

अत्र श्लोके प्रथमपादेन सर्वगतत्वं द्वितीयेन च सर्वरूपत्वं परमात्मनस्तृतीयेन च परमकारुणिकत्वं ध्वन्यते। नहि सर्वगतत्वेन सर्वरूपत्वं गतार्थं भवति। सर्वगतस्यापि आकाशस्य सर्वरूपत्वाभावाद् न वा सर्वरूपत्वेन सर्वगतत्वमित्युभयार्थप्रतिपादनं युक्तम्।

न च परमेश्वरस्य सर्वगतत्वेन सर्वरूपत्वेन वा पुरुषस्य कश्चिदर्थः सिद्ध इति तृतीयचरणेन परमकारुणिकत्वं ध्वन्यते। परमदयासागरो हरिर्भक्तरक्षार्थं तद्योगक्षेमरक्षणार्थञ्च स्तम्भादपि सहसा आविर्भूत इत्यहो आश्चर्यम्।

ननु मङ्गलाचरण एव हिरण्यकश्यपोः पुत्रस्य राक्षसस्य प्रह्लादस्य नामग्रहणं ब्राह्मणसभायां चाण्डालप्रवेशवत् शान्तकर्मणि वेतालोदयवच्च अशिवकरं विदुषामध्येतॄणाञ्चापरितोषकरं सहसोद्वेगकरञ्चेति चेत्, न, प्रह्लादश्चास्मि दैत्यानामिति गीतायां भगवान् स्वविभूतिगणनायां साक्षाद् अहमेव प्रह्लाद इति सामानाधिकरण्येन प्रतिजानीते। अर्थात् प्रह्लादः परमभक्तोऽम्बरीषादिपरमभक्तगणनाकोटिप्रविष्टः परमभागवतः। तस्यात्र न दैत्यत्वजात्या प्रवेशः; अपि तु उक्त गुणवत्त्वेन।

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥ (गी० ९।३०)

१. ईश० ८; २. बृहदा० ३; ३. पुरुषसूक्तम्।
४. गीता० ७।१९; ५. गी० ७।७; ६. गी० ४।७।
७. ब्र० सू० १।२।२३।

इति स्मृत्या सम्यक् परमात्मनिष्ठोऽदृष्टवशात् सुदुराचारोऽपि पुरुषः साधुरिति भगवानुद्घोषयति चेत् का कथा सर्वत्रैव रामं पश्यतः दृढविश्वासश्रद्धाभक्तिवृत्ति-सम्पन्नस्य परमविरक्तस्य प्रह्लादस्य। न कोऽपि तादृशः प्रह्लादसदृशोऽभूद् भुवि यः स्तम्भबद्धः पित्रा शत्रुणा राज्ञा राक्षसेन असिपाणिना निगृहीतो वद ते परमात्मा क्व रक्षक इति क्रोधरक्तेक्षणेन उक्तः अस्मिन्स्तम्भ एव परमात्मा, स एव मां पालयिष्य-तीति निर्भयं सोत्साहं सविश्वासं दृढं वदेद् नान्यः कश्चित्। अत एव भगवान् प्रह्लादश्चास्मि दैत्यानामिति वचनेन एनमेव सकलभक्तगुणगणगरिष्ठमात्मसात् करोति।

किञ्च प्रकर्षेण ह्लादयति प्रकृष्टो ह्लादो यस्येति वा व्युत्पत्त्या प्रह्लादः सम्पन्नो भवति। तत्र आह्लादे प्रकर्षश्च अखण्डाकाराकारितान्तःकरणवृत्त्या। आह्लादश्च परमात्मैवेति तथा च तत्त्वमस्यादिमहावाक्यजन्याखण्डाकाराकारित-चित्तवृत्तिविशिष्टः परमसात्त्विको नारदाम्बरीषादिपरमभागवताग्रणीः प्रह्लादः। तस्य च नाम ग्रहणं परममङ्गलकारीति प्रतिभाति। किञ्चाधिकार्यप्यस्य ग्रन्थस्य तथाविधो भवेदिति सूचनाय च प्रह्लादस्य नाम गृहीतम्।

ननु नृसिंहरूपभगवतः स्तुतिकरणेऽपि किञ्चिद् रहस्यमस्ति ग्रन्थकारस्येति चेत्, अस्तीति ब्रूमः। तथाहि, अयमवतारो रामाद्यवताराद् विलक्षणश्चेतनाद् आविर्भूतत्त्वात् सहसावेशेन, ब्रह्मादिदेवादिस्तुत्यनपेक्षया प्रवृत्तत्त्वात् केवल-भक्तत्राणाय प्राकट्याद् विचित्रशरीरत्वाच्चेति।

परमकारुणिको भगवान् विश्वात्मा सर्वगतो व्यापको भक्तरक्षकः सकल-गुणगणविशिष्ट इति श्रुत्या अनुमानेन वा साध्यः। प्रतिपक्षिराक्षसो हिरण्यकश्य-पुर्नास्तिकः प्रत्यक्षप्रमाणः कथं नाम श्रुतिमनुमानं वा मन्येत। प्रह्लादश्च विषमा-वस्थितो विषमं तं कथं बोधयेदिति। स्तम्भ एव परमात्मेति प्रत्यक्ष इति भक्तवाक्यं सत्यापयन्निव तदनुग्रहाय परित्राणाय च रक्षसवधाय तत् प्रत्ययार्थञ्च प्रत्यक्षेणैव प्रमाणेन गम्योऽहमिति आवेशात् स्वयं स्तम्भ एव [1]आत्मनि चैवं विचित्राश्चहीति श्रुतिसम्मतसूत्रमनुग्राहयन् नृसिंहरूपविचित्रशरीरे प्रकटीभूत इति। अत एव दृष्ट प्रमाणं हरिरित्युक्तम्। अनेनैतादृशः परमात्मा भक्तानुग्रहशीलोव्यापकः परम-कारुणिकः सर्वरूपो ग्रन्थस्य विषयः, तत् प्राप्तिः प्रयोजनम् प्रह्लादसदृशोऽधिकारीति ग्रन्थकारेण सूचितम्। अत एव सिद्धान्तबिन्दौ उक्तम्[2]—"श्रीभारती भवान्याद्याश्च स्त्र्याकारा अन्ये च मत्स्यकूर्मादयोऽनन्तावतारा लीलयैवाविर्भवन्ति भक्तानुग्रहार्थं-मित्यवधेयम्।

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥

---

१. ब्र० सू० ३।१।२८; २. सिद्धान्तबिन्दुः—पृ० ३६६।

अव्यादित्यनेन रक्षतादित्यर्थं आयाति । रक्षापदार्थश्च स्वरूपज्ञानेनानात्मवस्तुनिवृत्तिः । तथा च श्रुतिः [1]"ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्" अत्र भुञ्जीथा इत्यस्य श्रीशङ्कराचार्यैर्भगवद्भिः पालयेथा इत्यर्थः कृतः । पालनञ्चाध्यस्तानात्मवस्तुनिवृत्त्येति बोध्यम् ।

तथा च परमात्मा अनात्मवस्तु निवृत्तिपूर्वकं युष्मान् प्रह्लादमिवात्मसात् स्वरूपज्ञानेन करोत्वित्यर्थः फलितः ।

ज्योतिर्यद्दक्षिणामूर्त्ति व्यासशंकरशब्दितम्[2] ।
ज्ञानोत्तमाख्यं तं वन्दे सत्यानन्दपदोदितम् ॥

अनेन श्लोकेन परमात्मज्योतिषा सह व्यासशङ्कराचार्यस्वगुरुज्ञानोत्तमानामभेदः प्रतिपाद्यते । अभिधानेनैवान्तरं परमार्थतस्तु एकमेव ज्योतिरिति अद्वैतमेव अस्य ग्रन्थस्य विषय इति गुरुवन्दनामुखेनोच्यते ।

किञ्च वेदान्ताद्वैतप्रतिपादनाय तदेव ज्योतिः स्वेच्छया व्यासरूपेण ब्रह्मसूत्राणि व्यरचयत् । तदेव च पुनस्तदर्थस्फोरणाय शङ्कराचार्यरूपेणावतरितम् । तदेव च पुनर्भाष्यार्थस्फुटीकरणाय ज्ञानोत्तमरूपेणावतरितमिति एकमेव ज्योतिः । तद्रूप एव गुरुरिति भावः ।

"क्रियते चित्सुखमुनिना तत्त्वप्रदीपिका विदुषा" ।

अत्र मुनिशब्दोऽपि प्रयुक्तो विद्वच्छब्दोऽपीति किमुभयोरर्थयोरन्तरमिति विचारपदवीमारोहति । तथाहि वेदान्तज्ञानं द्विविधं शास्त्रीयतर्कवितर्कात्मकमनुभवरूपञ्चेति । तत्राहं ब्रह्मास्मीति वाक्यजन्याखण्डधियात्मसाक्षात्कारस्तत्पुनःपुनरभ्यासो वा अनात्मविषयविरक्तिर्वा अनुभवरूपम् । केवलं शास्त्र एवानुपपत्तिविप्रतिपत्त्यनुसन्धानरूपमुहापोहात्मरूपंवा शास्त्रीयमिति उभयमप्यपेक्षितं भवति । तत्र मुनिशब्देन आत्मवत्ता गृह्यते परमनिर्वेदवान् अनुभवेन ज्ञाततत्त्वः कृतात्मसाक्षात्कारो मुनिरुच्यते[3] "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इत्यादिश्रुत्या ।

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते[4] ॥

---

१. ईशावास्योपनिषद्, पृ० १;
२. तत्त्वप्रदीपिकामङ्गलश्लोकः ।
३. बृ० उ० ३।५।१;
४. गी० २।५६ ।

इति स्मृत्या च। विद्वच् शब्देन चाधीतसकलन्यायादिशास्त्रस्वीकृतवेदान्तसिद्धान्तः शास्त्रानुकूलपरपक्षखण्डनस्वपक्षमण्डननिष्णातबुद्धिरुच्यते। तदुभयगुण आचार्यं इति ध्वन्यते।

प्रत्यक् तत्त्वप्रदीपिकेत्यनेन प्रत्यक्तत्त्वमेवास्य विषय इति ध्वनितम्।

प्रमाणनखनिर्भिन्नमहामोहामरारये।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने॥

प्रमाणनखेत्यादि स्वप्रकाशचिदात्मने "इत्यस्य विशेषणम्। प्रमाणं तत्त्वमस्यादिवाक्यजन्यतदाकाराकारितचित्तवृत्तिः, तन्मयैर्नखैर्निर्भिन्नो महामोहरूपोऽमरारिर्येनेति भावः। स्वप्रकाशचिदात्मा वृत्त्यारूढः सन् सर्वभासकोऽपि मोहनिवर्तक इति तात्पर्यम्। यथा तूलराशिप्रद्योतकोऽपि रविकरनिकरः सूर्यकान्तमणिविशिष्टः सन् ज्वालक इति। यद्यपि मोहोऽज्ञानं तत्र ब्रह्मणि अध्यस्तं शुक्तौ रजतमिव मिथ्या, न ब्रह्मणा सह लेशमात्रमपि संस्पर्शमर्हति मुक्त एवात्मा सदा नित्यशुद्धबुद्धमुक्तस्वभावत्वाद् निवृत्तमोहस्य कुतो मोहः कुतश्च तन्निवृत्तिरिति? तथापि जीवकल्पिताविद्यया अध्यस्तकर्तृत्वभोक्तृत्वाद्यनेकधर्मत्वाच्च तिरोहित इवाप्राप्त इव भवत्यात्मा। उक्तवृत्त्या चावरणभङ्गात् प्राप्त इव भवतीति भावः।

अत एवोक्तम्—"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः" निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः"। अत एवाद्वैतसिद्धिमङ्गलाचरण एव मोक्षं प्राप्त इव स्वयं विजयते। विष्णुर्विकल्पोज्झितः" इत्युक्तम्। अन्यथा प्राप्तस्यैव प्रापणत्वात् शास्त्रानर्थक्यापुरुषार्थतापत्तिः स्यात् मोक्षस्यात्मरूपत्वाद् आत्मनश्च हेयोपादेयशून्यपरिनिष्ठितवस्तुरूपत्वात्।

किञ्च हेयोपादेयशून्यवस्तुप्रतिपादकत्वाद् वेदान्तानां ब्रह्मणि प्रामाण्यं नोपपद्येत। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति वचनात्। तादृशमोहनिवृत्त्या ब्रह्मणोऽप्राप्तप्रापकत्वात् सिद्धा पुरुषार्थता, सिद्धञ्च शास्त्रप्रमाणकत्वम्। अत एव सिद्धान्तबिन्दौ[1]। "नन्विदङ्कारास्पदेभ्योऽनात्मभ्यो विवेकेनाहङ्कारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखञ्चानुभवति तेन ज्ञातज्ञापकत्वाद् निष्प्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चेत्, न, चिद्भास्यत्वेन लक्षणेन इदङ्कारास्पदानामपि देहेन्द्रियमनसां प्रतिभासतोऽहङ्कारास्पदत्वेन तदविवेकात्। शास्त्रीयेण च ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः। तस्मादज्ञातज्ञापकत्वात् सप्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम्" इत्युक्तम्।

ब्रह्मसूत्रशाङ्करभाष्येऽपि समन्वयाधिकरणे उक्तम्[2]—"हेयोपादेयशून्य

१. सि० बि० पृ० ६।
२. ब्र० सू० शां० भा० पृ० १०६।

ब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः" "तत्रैव[1] च भामत्यां श्रीवाचस्पतिमिश्रैरुक्तम्—"द्विविधं हीप्सितं पुरुषस्य किञ्चिदप्राप्तं ग्रामादि, किञ्चित् पुनः प्राप्तमपि भ्रमवशाद् अप्राप्तमित्यवगतं यथा स्वग्रीवाबद्धं ग्रैवेयकम्। एवं जिहासितमपि द्विविधं किञ्चिदहीनं जिहासति, यथा वलयितचरणफणिनं किञ्चित् पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम्। तत्राप्राप्तप्राप्तौ, अत्यक्तत्यागे च बाह्योपायानुष्ठानसाध्यत्वात् तदुपायतत्त्वज्ञानादस्ति पराचीनानुष्ठानापेक्षा। न जातु ज्ञानमात्रं वस्त्वपनयति। न हि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते। समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठानानपेक्षेण शक्येते प्राप्तुमिव हातुमिव। समारोपमात्रजीविते हि ते। समारोपितश्च तत्त्वसाक्षात्कारः समूलघातमुपहन्ति। तथेहापि अविद्या समारोपितजीवभावे ब्रह्मणि आनन्दे वस्तुतः शोकदुःखादिरहिते समारोपितनिबन्धनस्तद्भावः, तत्त्वमसीति वाक्यार्थतत्त्वज्ञानाद् अवगतिपर्यन्तान्निवर्तते। तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति। त्यक्तमपि शोकदुःखादि अत्यक्तमिव त्यक्तं भवति"।

एतदेव नयनप्रसादिन्यामतिसंक्षेपेणोक्तम्—"एतेन स्वप्रकाशरूपेऽतिशयानाधायकत्वेऽपि मोहनिवृत्तिलक्षणातिशयाधायकतया वेदान्तानां स्वप्रकाशे ब्रह्मणि प्रामाण्यं प्रमाणकृत्यश्चोपपादितं भवति[2]।

प्रमाणमखण्डवृत्तिस्तत्कृत्यं मोहनिवृत्तिः। प्राप्तस्यापि निवृत्तमोहस्यापि ब्रह्मणो प्राप्तप्रापणमतिशय इति बोध्यम्। अनेन महामोहस्याध्यस्तत्वं ब्रह्मणश्च स्वप्रकाशत्वं द्योतितमिति।

स्वप्रकाशचिदात्मने इत्यत्र चित् संवित्, सैव आत्मेत्युभयत्र स्वप्रकाशत्वं योज्यम्। तथा च संविद आत्मनश्चोभयोः स्वप्रकाशत्वं सिद्धं प्रतिज्ञातं भवति। उभयोरभेदोऽपि सिद्धो भवति।

ननु नृसिंहस्वप्रकाशयोः कथं सामानाधिकरण्यं नृसिंहस्य शरीरित्वात् स्वप्रकाशस्य शुद्धबुद्धमुक्तस्वरूपत्वाद्भिदिति चेत्, न, उपाधिभेदेनैवंभेदाद् वस्तुत उभयोरभेदात्। बाधायां सामानाधिकरण्यं वा। प्रकाशशब्दार्थश्च अप्रकाशेतरत्वम्। प्रकाशेतरत्वञ्च अज्ञानतमोऽन्यतरत्वम्।

ननु तत्रैव नयनप्रसादिन्यामुक्तम्"संविदात्मनोः स्वप्रकाशत्वं प्रतिज्ञातं तदेतद् द्वयमुत्तरत्र यथाक्रमं समर्थयिष्यते"। अत्र संविदात्मनोरभेदात् कथं द्वन्द्वः? घटकलश-

१. ब्र० सू० भा० भा० पृ० १०७; २. न० प्र० पृ० ४।

योरभेदाद् यथा द्वन्द्वो न भवतीति। पदार्थभेदे पदार्थतावच्छेदकभेद एव द्वन्द्वस्य साधुत्वम्। न च सरूपाणामेकशेष इति सूत्रे रामौ इत्यादौ यदि एक शेषो न स्यात्, द्वन्द्वः प्रवर्तेत इति द्वन्द्वापवाद एकशेष इति सिद्धान्तितम्। तत्र च नास्ति पदार्थभेदो न वा पदार्थावच्छेदकरामत्वमेव भिन्नमिति कथमुच्यते भेद एव द्वन्द्वसाधुत्वमिति वाच्यम्, तत्राप्तवचनात् कथञ्चिद् भेदमादाय द्वन्द्वापत्तिप्रदानाद् द्वन्द्वस्य चाभावात्। शङ्कामात्रकरणादिति चेत्, न, इहापि आनुपूर्वीभेदमादाय संवित्पदजन्यबोध-विषयतया, आत्मपदजन्यबोधविषयतया च भेदमादाय द्वन्द्वोपपत्तिः कर्त्तव्या।

॥ इति मङ्गलविचारः ॥



## प्रथमपरिच्छेदे

# स्वप्रकाशशब्दार्थविचारः

"अथ कोऽयं स्वप्रकाशशब्दार्थः[1] ?"

ननु किमिदं मिथ्यात्वमित्यादिवत् किं स्वप्रकाशत्वमिति प्रश्नः करणीयः। तथा च स्वप्रकाशलक्षणं किमित्युक्तं भविष्यतीति चेत्, न, सिद्धे हि वस्तुनि लक्षणमनुगमार्थमनुसन्धीयते। इह च प्रतिवादिमते शुद्धबुद्धमुक्तस्वरूपं स्वप्रकाशं ब्रह्मैव तावदप्रसिद्धम्। यथा उभयमतसिद्धायां पृथिव्यां किमिदं पृथिवीत्वमित्यादिलक्षणानुसन्धानं युक्तं भवति। स्वप्रकाशशब्दार्थस्यैव सिद्धान्ताभिमतस्य प्रतिवादिमतेऽलीकायमानत्वात् किमिदं स्वप्रकाशत्वं यत् स्वप्रकाशे ब्रह्मणि, घटे नेति प्रश्नस्तावदनुपपन्नः स्यात्। स्वप्रकाशपदार्थे स्पष्टे जाते च ततस्तद्धर्मस्य लक्षणस्य वा जिज्ञासा उपयुक्ता। गोपदार्थे ज्ञाते सत्येव गोर्लक्षणं किमिति जागर्ति जिज्ञासा। किमिदं मिथ्यात्वमिति तु युक्तमेव। वादिमतेऽपि घटपटादीनां पदार्थानां सिद्धत्वात्। किं लक्षणं मिथ्यात्वमेतेषामिति जिज्ञासोदयो युक्त एव। न हि केनापि प्रत्यक्षभूतस्य प्रपञ्चस्यापलापः शक्यते कर्तुम्। केवलमनित्यत्वं नित्यत्वं मिथ्यात्वमस्येति शंका स्वभावतो जागर्ति।

किञ्च स्वमतेऽपि ब्रह्मणो सर्वधर्मगुणजातिशून्यत्वात् केवलचिदात्मकत्वात् स्वप्रकाशरूपत्वाच्च स्वप्रकाशत्वधर्मस्यैवाभावात् किमिदं स्वप्रकाशत्वमिति प्रश्नोऽनुपपन्नः प्रकृत्यर्थे प्रकारीभूतधर्म एव भावप्रत्ययेनोच्यते। यथा गोगता गवि प्रकारीभूतगुणधर्मा गोशब्दोत्तरजायमानभावप्रत्ययेनोच्यन्ते; तथेहापि स्वप्रकाशशब्दोत्तरजायमानभावप्रत्ययेन ब्रह्मगतधर्म एवाभिहितः स्यात्, तस्य च तत्राभावात्। नहि ब्रह्मणि कश्चित् प्रकारीभूतोधर्मः सम्भवति, तस्य निर्विकल्पकत्वात्, निर्धर्मकत्वाच्च।

ननु तर्हि कथं स्वयमेवोच्यते[2] "एतेनात्मनोऽपि स्वप्रकाशत्वं व्याख्यातम्" चिद्रूपत्वादकर्मत्वात् स्वयं ज्योतिरिति श्रुतेरात्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः" इति चेत्, न, स्वप्रकाशशब्दार्थनिर्णये जाते सति तदर्थं आत्मन्यपि घटत इत्यर्थात्। स्वप्रकाशत्वं स्वप्रकाशरूपत्वम्। एतावतात्मनि न कश्चिद्द धर्मः स्वीक्रियते,

---

१, चित्सुखी पृ० ४।     २. चित्सुखी पृ० ३८।

अभिलापमात्रं क्रियते। अथवा स्वप्रकाशचिदात्मन इत्यत्र स्वप्रकाशशब्दस्य समस्तत्वात् स्वस्य प्रकाशः स्वश्चासौ प्रकाश इत्यादि नानार्थसद्भावात् स्वप्रकाशशब्देन कोऽयमर्थस्तात्पर्यविषयीभूत इति स्वपरमते शङ्का सुतरामेव जागर्त्ति। अतः प्रथमं स्वप्रकाशशब्दार्थनिर्णयः कार्यः। तत्रैकादशकल्पाः कृताः। तद्यथा—(१) स्वश्चासौ प्रकाशः, (२) स्वस्य स्वयमेव प्रकाशः, (३) सजातीयप्रकाशाप्रकाश्यत्वं वा, (४) स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वं वा (५) स्वव्यवहारहेतुप्रकाशत्वं वा, (६) ज्ञानाविषयत्वं वा, (७) ज्ञानाविषयत्वे सति अपरोक्षत्वं वा, (८) व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा, (९) स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा, (१०) अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वं वा, (११) तद्योग्यत्वं वेति।

तत्राद्यौ द्वौ स्वप्रकाशशब्दाद् योगलब्धौ। अन्ये च पारिभाषिकाभिप्रेतार्थाः। तत्र प्रथमः स्वत्वविशिष्टप्रकाशत्वम्। घटादावतिव्याप्तिवारणाय प्रकाशग्रहणम्। सत्तावत्वं स्वत्वं तद्व्यक्तित्वं वा। इदं लक्षणं वेद्यज्ञानेऽपि प्रसक्तम्। तस्यापि स्वत्वविशिष्टप्रकाशत्वात्। वेद्यज्ञानं वृत्तिरूपं ज्ञानमुच्यते। ज्ञानं हि द्विविधं स्वरूपभूतं वृत्तिरूपञ्च। ननु वेद्यज्ञानशब्देन वृत्तिरूपं ज्ञानमुच्यते। तत्र वृत्तेर्जडत्वात् तस्य कुतः प्रकाशकत्वमिति। चित एव स्वप्रकाशत्वाभ्युपगमात्। यदि च साक्षिभास्यायां वृत्तौ साक्षिचैतन्यादेव प्रकाशकत्वमिति; तथापि स्वतः प्रकाशत्वाभावाद्द लक्षणातिव्याप्तिः कुतः।

न च प्रदीपेऽतिव्याप्तिस्तत्रापि स्वत्वविशिष्टप्रकाशत्वस्य सत्त्वादिति वाच्यम्, तस्य जडप्रकाशत्वादत्र प्रकाशशब्देन अज्ञाननिवर्तकं ज्ञानमेवोच्यते, न तु तमो निवर्तको लौकिको जडप्रकाश इति चेत्, अत्रोच्यते, साक्षिभास्याया वृत्तेर्जडाया अपि साक्षिचैतन्यरूपप्रकाशमादायैव तस्याः प्रकाशत्वाभ्युपगमात्। वस्तुतः प्रकाशरूपत्वाभावेऽपि अयो दहतीतिवत् प्रकाशकत्वव्यवहारः सिद्धः। अतो यथाश्रुतं स्वत्वविशिष्टप्रकाशत्वलक्षणं तत्रातिव्याप्तम्। तस्याः प्रकाशत्वाभ्युगपमादेव ज्ञानत्वोपचारः। अग्रे अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणस्वप्रकाशत्वस्य सिद्धान्तयिष्यमाणत्वाद्द विशेषसूक्ष्मविचारमनपेक्ष्य स्वरसतः वृत्तिरूपज्ञाने प्रथमलक्षणस्यातिव्याप्तिप्रदानं युक्तमेव। एवमेव प्रदीपेऽपि प्रसक्तिरस्त्येव प्रकाशशब्देनाप्रकाशेतरो गृह्यते, अप्रकाशेतरत्वञ्च ज्ञानप्रकाशान्यतरत्वम्।

ननु सिद्धान्तत्वेनाभिमतस्वप्रकाशलक्षणमपि अन्तःकरणतद्धर्मेच्छादिषु प्रसक्तमिति कृत्वा तत्र ग्रन्थकारैः [1]"अवेद्यत्वेऽपि नापरोक्षव्यवहारयोग्यता तेषाम् अस्ततयैव तेषां सिद्धेः" इत्युक्तम्। तस्यायं भावः, अपरोक्षसाक्षिणि अध्यस्तत्वात् साक्षिगतापरोक्षत्वमादाय तेषामपरोक्षत्वं न स्वतस्तेषामपरोक्षयोग्यतास्तीति। तथैव प्रथमकल्पे अपि वृत्तौ न स्वतः प्रकाशकत्वम्; अपि तु साक्षिगतप्रकाशकत्वमादायैव प्रकाशकत्वव्यवहार इति कथं लक्षणमतिप्रसक्तमिति कथं वा नेदमेव

१. चित्सुखी पृ० ११।

सिद्धान्तलक्षणं स्वीकृतमिति चेत्, न, यथाश्रुतलक्षणस्य प्रदीपादावतिव्याप्तेः। प्रकाशशब्दस्य प्रदीपादिसाधारणार्थपरत्वात्। ज्ञानरूपप्रकाशग्रहणे नातिव्याप्तिरित्यन्यदेतत्।

ननु वृत्तिरूपं ज्ञानं कथं वेद्यं भवितुमर्हति। अवेद्यत्वे सतीत्यादि सिद्धान्तलक्षणसमर्थनप्रसङ्गे स्वयमेव वेद्यत्वं फलव्याप्यतालक्षणं स्वीकृतम्। फलं नाम विषयेन्द्रियसन्निकर्षजन्यतत्तदाकाराकारितवृत्त्यभिव्यक्तविषयावच्छिन्नं चैतन्यम्। नयनप्रसादिन्यामप्युक्तम्[1]—"विषयावच्छिन्नं चैतन्यमभिव्यक्तं फलमिति वैदान्तिनां मतम्। अभिव्यक्तिश्चेन्द्रियद्वारा अर्थसन्निकृष्टमनःपरिणामविशेषः। न चैवंविधपरिणामविशेषोऽदृष्टादिषु सम्भवति तेषामिन्द्रियायोग्यत्वात्। तस्मान्नधर्मादीनां फलावच्छेदकतया वेद्यत्वमित्यर्थः"। एवञ्च वृत्तेः साक्षिभास्यतया इन्द्रिययोग्यत्वाभावात् कथं तस्या वेद्यता? स्वयमेव अन्तःकरणतद्धर्मादीनामवेद्यत्वं स्वीकृत्याग्रे ग्रन्थकारैः केवलं तेषु अपरोक्षव्यवहारयोग्यत्वापत्तिः प्रदर्शितेति चेत्, अत्रोच्यते—नात्र वेद्यत्वं फलव्याप्यत्वलक्षणं गृह्यते, येनोक्तदोषः स्यात्; अपि तु ज्ञानविषयत्वलक्षणं गृह्यते। अवेद्यत्वे सतीत्यादि लक्षणघटकमेव वेद्यत्वंफलव्याप्यतालक्षणं पारिभाषिकं गृह्यते। तद्घटकमत्र न गृहीतम्। स्वरूपलक्षणस्य ज्ञानस्य निर्विषयत्वात् तत्पार्थक्यप्रतिपादनाय वृत्तिरूपे ज्ञाने वेद्यत्वमुपात्तम्।

ननु सिद्धान्ते वेद्यस्य वृत्तिरूपज्ञानस्य स्वप्रकाशत्वास्वीकारात् कथं मूले प्रोक्तम्—"वेद्यस्यापिज्ञानस्य स्वप्रकाशत्वाभ्युपगमादिति[2]"चेत्, न, स्वप्रकाशत्वाभ्युपगमादित्यस्य स्वप्रकाशत्वाभ्युपगमपातादित्यर्थात् तथैव पाठः कर्तव्य इति केचित्।

वस्तुतस्तु यथाश्रुतपाठेनापि ग्रन्थसंगतिः। तथाहि स्वत्वविशिष्टप्रकाशत्वलक्षणस्वप्रकाशत्वस्वीकारे तथाविधलक्षणस्याभ्युपगमो वृत्तिरूपज्ञानेऽस्त्येवेत्यतिव्याप्तिप्रसङ्गः। अत्र कल्पे स्वप्रकाशशब्दार्थस्तु न सिद्धान्तभूतोऽपि तु स्वत्वविशिष्टप्रकाशत्वरूप इति तस्य च वृत्तौ स्वीकार एवेति समीचीन एव पाठः। अथवा वेद्यज्ञानस्यापि तथाविधलक्षणस्वीकारे स्वप्रकाशत्वाभ्युपगमः कर्तव्यो भविष्यतीति भावः। अभ्युपगमादित्यस्याभ्युपगमप्रसङ्गादित्यर्थः। अत एव शतदूषणीग्रन्थे[3]"तत्त्वज्ञानात् पूर्वं तदनभ्युपगमात्" इति पङ्क्तौ, अनभ्युपगमादित्यस्य अनभ्युपगमप्रसङ्गादित्यर्थः स्वीक्रियते। तथेहापीति न दोषः।

तत्र प्रथमलक्षणस्य प्रदीपरूपार्थान्तरताप्रतिपादकत्वाद् द्वितीयलक्षणोत्थानम्। स्वस्य स्वयमेव प्रकाश इति। अत्र स्वस्येति कर्मणि षष्ठी। यद्यपि सम्बन्धसामान्येऽपि शेषषष्ठी सम्भवति; तथापि व्यवहाराय विशेषसम्बन्धस्यापेक्षितत्वात् समभिव्याहृतप्रकाशनरूपक्रियाफलाश्रयत्वात् स्वस्येति कर्मणि षष्ठी युक्तैव। तत्र स्वयमेव प्रकाश इत्येतावदुक्तौ प्रदीपरूपार्थान्तरसिद्धिरिति प्रथमं

१. नयनप्र० पृ० १७; २. चित्सुखी पृ० ५; ३. पृ० ५५।

विशेषणं दत्तम् । न च तदापि न निर्मोक्षः, प्रदीपस्यापि स्वस्य प्रकाशकत्वात् । नैव प्रदीपप्रकाशनाय प्रकाशान्तरापेक्षा । अत एवोच्यते वाक्यपदीये "ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथेति" वाच्यम्, ज्ञानलक्षणप्रकाशस्य ग्रहणात् प्रदीपादौ न स्वस्य स्वेन विषयविषयिभावः । शब्दस्यापि स्वग्राहकत्वाद् अतिव्याप्तिरिति प्रकाशग्रहणम् । अयमपि पक्ष एकस्मिन् कर्मकर्तृभावविरोधेन त्याज्य एव । ननु कथं कर्मकर्तृभाव विरोधः ? कर्तृकर्मणोः संज्ञात्वाद् युगपदेकस्मिन् अनेकसंज्ञाया दर्शनात् । यदि च व्यापाराश्रत्वं कर्तृत्वं फलाश्रयत्वं कर्मत्वं किं वा शक्तिविशेषवत्त्वं वा तदिति, तदा देवदत्तः प्रयातीत्यादौ एकस्मिन्नपि देवदत्ते फलव्यापारयोर्दर्शनात् शक्तिद्वयविशिष्टत्वस्य वा सम्भवात् कुतो विरोध इति चेत, न, वैयाकरणमते परया कर्तृसंज्ञया कर्मसंज्ञाया बाध एव विरोधः । अत एव चैत्रश्चैत्रं गच्छतीति चैत्रो ग्रामं गच्छतीति प्रयोगे न भवतिः । न च चैत्रश्चैत्रमित्यादिशाब्दबोधोऽपि भवति प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्यकारणभावस्वीकारात् । प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः ।

नैयायिकानां मते स्वप्रतियोगिकभेदस्य स्वस्मिन्नसम्भवरूपो विरोधः । एवञ्चोक्तस्थले चैत्रः स्वं गच्छतीत्यादौ दोषवारणाय परसमवेतक्रियाजन्यफलाश्रयं कर्म । द्वितीयाप्रकृतित्वेन विवक्षितार्थभिन्नसमवेतव्यापारजन्यफलाश्रयस्य कर्मत्वमित्यर्थः । एवञ्च प्रकृते द्वितीयाप्रकृतित्वेन विवक्षितचैत्रार्थप्रतियोगिकभेदस्य चैत्रेऽसम्भवात् त समवेतव्यापारजन्यसंयोगरूपफलाश्रयस्य न कर्मत्वमिति ।

एकत्र कर्तृत्वकर्मत्वविरोधश्च [१]"कर्मकर्तृव्यपदेशाच्चेति इति सूत्रे भगवत्पादैः प्रतिपादितः । तथा हि मनोमयत्वादि गुणःपरमात्मा शारीरो वा जीव इति विशये[२] 'अनुपपत्तेस्तु न शारीरः' इति सूत्रेण विवक्षितगुणानामनुपपत्तेर्न मनोमयत्वादिविशिष्टः शारीर इत्युपपाद्य कर्तृकर्मव्यपदेशाच्चेति सूत्रेण तदेवोपपाद्यते । इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात् कर्मकर्तृव्यपदेशो भवति [३]"एवमितः प्रेत्याभिसम्भवितास्मि" ( छा० ३।१४।४ ) एवं प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति "अभिसम्भवितास्मि" इति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन । न सत्यां गतौ एकस्य कर्तृकर्मव्यपदेशो युक्तः । तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव" एवञ्च कर्मकर्तृविरोधात् नेदं लक्षणमिति स्थितम् ।

सजातीयप्रकाशाप्रकाश्यत्वरूपं तृतीयं लक्षणं प्रवृत्तम् । अत्र सजातीयपदाभावे अर्थान्तरता स्यात् । यथाश्रुतलक्षणमपि प्रदीपादौ घटादौ चातिव्याप्तम् । घटादेः सजातीयप्रकाशस्यैवाभावात् तदप्रकाश्यत्वमस्त्येव । न च

१. ब्र० सू० १।२।४; २. ब्र० सू० १।२।३ ; ३. ब्र० भू० भा० पृ० २५३ ।

प्रदीपादिः सजातीयप्रकाशप्रदीपान्तेण प्रकाश्यते। साजात्यञ्चात्र घटत्वादिना ग्राह्यः। तेन घटस्यान्यो घट एव सजातीयः। सत्तया साजात्यग्रहणे च सर्वस्यैव प्रकाशस्य सत्तावत्वाद् व्यभिचाराभावात् सजातीयेति विशेषणमनर्थकं स्यात्। सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदिति सिद्धान्तात्।

ननु तर्हि प्रकाशाप्रकाश्यत्वमित्येवलक्षणं स्वीकर्त्तव्यमिति चेत्, न, अलीकेऽति प्रसङ्गाद् इति तृतीयमपि दूषितम्।

अथ स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वमिति चतुर्थं लक्षणं स्यात्। व्यतिरेकविरहितत्वमवियोगः। यावदस्य सत्ता, तावत् प्रकाशावियोग इति। वेद्यज्ञाने च तिरोधानस्यापि सम्भवात् प्रकाशव्यतिरेकसम्भवोऽस्त्येव। इदं लक्षणं सुखादावतिप्रसक्तम्। यावत् सुख तावत् साक्षिचैतन्येन ईश्वरज्ञानेन मानसप्रत्यक्षेण ज्ञायते एव। नहि सुखं तिरोहितमननुभूतं वा तिष्ठति।

पञ्चमे स्वव्यवहारहेतुप्रकाशत्वरूपे लक्षणे स्वीकृते सति प्रदीपादावतिव्याप्तिः, तस्यापि स्वव्यवहारे हेतुत्वात्, प्रकाशत्वाच्च। ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथेति वाक्यपदीयात् प्रदीपेऽपि स्वग्राह्यत्वाद् हानोपादानलक्षणस्य व्यवहारस्य हेतुता सम्भवत्येव।

यदि च ज्ञानमेव स्वशब्देन गृह्यते, तथा च ज्ञानव्यवहारहेतुताविशिष्टप्रकाशत्वमिति लक्षणं सम्पन्नम्। अत्र पक्षे ज्ञानस्य व्यवहार इति नायमर्थः, अपितु ज्ञानरूपो व्यवहार इत्यर्थः। व्यवहारशब्देन च अभिवादनादिकं गृह्यते। ज्ञानपदेन च न स्वरूपज्ञानम्, अपि तु वृत्तिरूपमेव ज्ञानमुच्यते। तथा च स्वं वृत्तिरूपं ज्ञानं तदेव व्यवहार इति तत्र हेतुभूतप्रकाशत्वं ब्रह्मणि गतमिति भावः। तथापि अनुव्यवसायेऽतिव्याप्तिर्लक्षणस्य। तथाहि 'अयं घटः' इत्याकारकज्ञानरूपव्यवहारहेतुप्रकाशकत्वं घटज्ञानवानहमित्यनुव्यवसायस्यास्ति। ईश्वरज्ञाने वा सर्वज्ञानरूपव्यवहारहेतुप्रकाशत्वाद् अतिव्याप्तिर्बोध्या। ज्ञानस्य व्यवहार इति व्याख्यायामपि ज्ञानविषयाभिलपनादिरूपव्यवहारग्रहणे उक्तस्थले दोषः स्यादेव। "अनुव्यवसायज्ञानमेव स्वप्रकाशवादे न सम्प्रतिपन्नम्, यत्रातिव्याप्तिरुच्येत, सम्प्रतिपन्नत्वे वा तस्यापि व्यवसायवदेव पक्षतेति"[1]।

अयम्भावः—स्वप्रकाशवादेऽद्वैतमते अनुव्यवसायज्ञानमेव न स्वीक्रियते। अयं घट इत्याकारकव्यवसायग्रहणाय घटविषयकज्ञानवानहमित्याकारानुव्यवसायं ज्ञानं स्वीक्रियते नैयायिकैः। व्यवसायात् पश्चात् तद्ग्राहकत्वेन भवतीति अनुव्यवसायः। ज्ञानविषयज्ञानमिति। अत्र मते ज्ञानं न स्वप्रकाशं ज्ञानग्राह्यत्वाद् घटादिवदिति प्रयोगः।

---

१. नयनप्र० पृ० ७।

अत्रेदं वक्तव्यम्—व्यवसायज्ञानग्राहकत्वमनुव्यवसायस्य तद्ग्राहकत्वश्चान्यस्येत्यादिरूपेण अनवस्थापत्तिः। यदि अन्त्यस्य कस्यचिद् ज्ञानस्य स्वतः प्रकाशत्वं तर्हि प्रथमेन किमपराद्धम्। तस्यैव तत्स्वीकर्तुं युक्तं स्यात्। किञ्च येन आत्ममनःसंयोगेन व्यवसायो जन्यते, तेनैव यदि अनुव्यवसायोऽपीति तर्हि जन्यजनकयोः सहोत्पत्तिप्रसङ्गः, व्यवसायस्य अनुव्यवसायजनकत्वात्। जन्यजनकयोः सहोत्पत्तिप्रसङ्गभियैव तार्किकैरुत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियश्च तिष्ठतीति मन्यते। अन्यथा द्रव्यगुणयोर्जनकजन्ययोर्युगपदुत्पत्तिर्विरुध्येत। कार्याव्यवहितप्राक्क्षणवर्त्तित्वं कारणस्येति युक्तम्।

यदि चैकेनैव आत्ममनःसंयोगेन क्रमशो व्यवसायानुव्यवसायावुत्पद्येते, तदपि न, क्रमशः कार्योत्पत्तौ तत्क्रमेणैव कारणस्याप्यावश्यकत्वात्। अन्यथा अनेकज्ञानजन्मप्रसङ्गः स्यात्, न च विरामः स्यात्।

यदि चैकेनात्ममनःसंयोगेन घटादिविषयकव्यवसायो जन्यते, अपरेण च तद्विषयकमनुव्यवसाय इत्युच्यते, तदपि न, ज्ञानोत्पत्तिक्षणे हि मनसि क्रिया, ततो विभागस्ततः पूर्वसंयोगनाशः, तत उत्तरसंयोगोत्पत्तिस्तदग्रिमक्षणे जायमानः प्रत्ययः कथं तदानीमविद्यमानं पूर्वज्ञानं प्रत्यक्षीकर्तुं प्रभवेत्, प्रत्यक्षे विषयस्य कारणत्वात्। अतोऽनुव्यवसायज्ञानं न स्वीक्रियते सिद्धान्ते।

अत एव प्राभाकरा अपि स्वविषयत्वलक्षणं स्वप्रकाशत्वं ज्ञानस्य स्वीकुर्वन्ति, नानुव्यवसायज्ञानं तद्ग्राहकम्। तथाहि आत्ममनः संयोगस्य ज्ञानमात्रं प्रति हेतुत्वात् सर्वत्रैव हि घटादिज्ञाने आत्मभानं स्यात्। तथा च घटमहं जानामि इति ज्ञानं कर्मतया घटादिविषयीकरोति, आश्रयतया चात्मानमपि विषयीकरोति, तथैव स्वरूपमपि विषयीकरोति। एवञ्च सर्वत्रैव ज्ञाने ज्ञातृज्ञेयज्ञानभानं भवति। इदमेव त्रिपुटीभानमुच्यते।

भाट्टाश्च ज्ञानस्यातीन्द्रियतया ज्ञातताद्वारानुमेयत्वं वदन्ति। तथाहि विषयेन्द्रियसन्निकर्षद्वारा घटादिविषये ज्ञातता नाम कश्चित् धर्मं उत्पद्यते, ज्ञातो घट इति व्यवहारात्। सा च ज्ञातता ज्ञानव्याप्या सती ज्ञानं गृह्णाति। तथा चानुमानप्रयोगः—घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्वात्, यन्नैवं तन्नैवम्, यथा—पटः।

प्रभाकारानुसारिणो रामानुजीया अपि तथैव संगिरन्ते।

एवमेव योगाचारैर्बौद्धैरपि सर्वस्य विज्ञानरूपत्वाद् आत्मनोऽपि विज्ञानरूपत्वं तस्य विज्ञानस्य च स्वतः प्रकाशत्वं नानुव्यवसायग्राहकत्वं तस्याभावात्। उक्तञ्च—

तत् स्याद् आलयविज्ञानं यद्भवेदहमास्पदम् ।
तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥

इति स्वीक्रियते ।

तथा च विभिन्नलक्षणस्वप्रकाशवादेषु तावद् अनुव्यवसायोऽसम्प्रतिपन्नः । नयनप्रसादिन्याञ्च प्रत्यक्स्वरूपस्वामिना स्वप्रकाशवादे इत्युक्तम्, न तु अद्वैतवाद इति, अनेन सर्वं स्वप्रकाशवादिनो गृहीता । उपपादितञ्चैतद् अस्माभिः । अतोऽ-अनुव्यवसायस्यैवाभावात् तत्र पञ्चमलक्षणस्यातिव्याप्तिर्न युक्तेति स्थितम् ।

"अथ तुष्यतु दुर्जनः इति न्यायेन संप्रतिपन्ने वानुव्यवसाये व्यवसायवदेव पक्षता"। अस्यायं भावः—ज्ञानव्यवहारहेतुप्रकाशत्वं यदि स्वप्रकाशत्वम्, तदा व्यवसायज्ञानहेतुप्रकाशत्वाद् अनुव्यवसायेऽतिव्याप्तिः ।

तस्यापि ज्ञानत्वाद् अनुव्यवसायान्तरग्राह्यत्वाच्च व्यवसायतुल्यताऽस्त्येवेति तद्वत् तस्यापि तुल्ययोगक्षेमौ । यदि व्यवसायस्य स्वप्रकाशत्वमिष्टञ्चेद् अनुव्यव-सायस्यापीति । अत एव दोषान्तरमुच्यते प्रदीपज्ञानमिदमितिव्यवहारहेतौ प्रदीप-प्रकाशेऽतिव्याप्तेश्चेति ।

ननु प्रदीपज्ञानमिदमितिव्यवहारस्य प्रदीपप्रकाशे हेतुत्वं कुत उपपद्यते ?

प्रदीपविषयकज्ञानस्य प्रदीपविषयकज्ञानविषयकानुव्यवसायस्य ग्राहकस्य क्लृप्तत्वात् । न हि प्रदीपप्रकाशेन लौकिकेन प्रदीपज्ञानं प्रकाश्यते गृह्यते वेति चेत्, न, प्रदीपज्ञानमिदमिति विशिष्टज्ञानमनुव्यवसायस्वरूपम् । तत्र विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वात्, ज्ञानस्य च विषयजन्यत्वात्, उक्तानुव्यवसायस्य स्वविषयी-भूतप्रदीपज्ञानविषयप्रदीपजन्यत्वात् । अनुव्यवसायस्य हि व्यवसायविषयविषयक-त्वमावश्यकम् । अन्यथा अन्यस्य व्यवसायस्यान्येनानुव्यवसायेन ग्राह्यत्वापातः । अतो घटविषयकज्ञानस्य यथा घटो विषयः, तथैव तदनुव्यवसायस्यापि घटो विषयो भवत्येव ।

एवं प्रकृतेऽपि प्रदीपज्ञानमिदमिति ज्ञानस्यानुव्यवसायस्य प्रदीपोऽपि विषयो भवत्येव। तथा च प्रदीपरूपविषयजन्यत्वमनुव्यवसायस्यापि सिद्धमिति उक्ताति-प्रसङ्गः साधुरेव ।

यद्वा प्रदीपज्ञानमिदमिति विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् प्रदीप-ज्ञानस्य कारणत्वं सिद्धम् । तस्य च प्रदीपजन्यतया प्रदीपे परम्परया उक्तानुव्यव-सायकारणता सिद्धा ।

अथवा अभिलापादिकमेवात्र व्यवहारः । तथा च प्रदीपज्ञानमिदं न घटादि-ज्ञानमित्येवं रूपेण अन्यविषयकज्ञानव्यावर्तकतया प्रदीपस्य परम्परया उक्तव्यवहारे

हेतुत्वमिति सर्वं तत्रैव नयनप्रसादिन्यां स्पष्टम्। ननु प्रदीपज्ञानमिदमित्यनुव्यवसायं निष्ठजन्यतानिरूपितजनकता प्रदीपज्ञाने व्यवसायरूपे एव, न तु प्रदीपे व्यवसाय-विषये तस्यान्यथासिद्धत्वात्। अन्यथासिद्धशून्यस्यैव नियतपूर्ववर्त्तिनः कारणत्वम्। तत्रानुव्यवसाये स्वविषयविषयो भासतां नाम; किन्तु न तत्र कारणत्वं स्वीकार्यम्, अन्यथासिद्धत्वात्। तथा चान्यथा सिद्धाः—

[1]येन सह पूर्वभावः कारणमादाय वा यस्य।
अन्यं प्रतिपूर्वभावे ज्ञाते यत् पूर्वभावविज्ञानम्॥

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः॥

एते पञ्चान्यथा सिद्धा दण्डत्वादिकमादिमम्।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥

तृतीयं तु भवेद् व्योम कुलालजनकोऽपरः।
पञ्चमो रासभादिः स्याद् एतेष्वावश्यकस्त्वसौ॥

कारणतावच्छेदकधर्मत्वं प्रथमम्। स्वतन्त्रान्वयव्यतिरेकशून्यकारणगुणत्वं द्वितीयम्। अन्यकारणकत्वेन गृहीतकारणकत्वं तृतीयम्। द्वारभिन्नं यत् कारणम् तत्कारणत्वं चतुर्थम्। यद्रूपावच्छिन्नं नियतावश्यकपूर्वभाविभिन्नत्वं तद्रूपवत्वं पञ्चमम्।

तत्र प्रथमद्वितीययोरुक्तज्ञाने प्रदीपे सत्त्वाद् अन्यथा सिद्धत्वमस्त्येव। किञ्च ज्ञानं प्रति विषयस्य तादात्म्येन कारणत्वं न सार्वत्रिकम्। अतीतानागतस्थले व्यभिचारात्, इति चेत्, न, दोषान्तरसद्भावात्। तथाहि मूले उक्तम्—"किञ्च व्यवहारहेतुत्व विशेषणम्? उपलक्षणं वा। नाद्यः, मुक्तिप्रलयादावप्याप्तेः। न द्वितीयः, उपलक्षितत्वस्यापि विशेषणत्वे प्रागुक्तदोषानुषङ्गात्। स्वरूपमात्रत्वे तु ज्ञानं प्रकाश इत्येव स्यात्। तथा सति न लक्षणसिद्धिः[2]।"

तत्र विद्यमानत्वे सति विधेयान्वयित्वे सति व्यावर्तकत्वं विशेषणत्वम्। स्व-व्यवहारहेतुत्वस्य प्रकाशपदार्थे विशेषणत्वे स्वप्रकाशशब्दार्थे लक्ष्ये तस्य सर्वदैवा-वस्थितिर्वाच्या। तथा च मुक्तात्मनि प्रलयात्मनि कस्यापि धर्मस्याद्वैतवादिभिर-स्वीकारात्, तत्राव्याप्तिः स्यात्।

अत्र प्रलयशब्देन यदि सुषुप्तिरुच्यते, तथापि तत्र व्यवहारहेतुत्वं नास्त्येव। अत्रापि समस्तस्य प्रपञ्चस्य स्वोपादानभूताज्ञानरूपेणावस्थानमुच्यते, तत्रापि व्यवहार-हेतुत्वं नास्ति इति बोध्यम्। उपलक्षणपक्षे व्यवहारहेतुत्वेन धर्मेणोपलक्षितः प्रकाशः

१. मुक्तावली—पृ० ८४। २. चित्सुखी—पृ० ८।

स्वप्रकाशशब्दार्थं इत्यर्थः स्यात्। अविद्यमानत्वे सति विधेयानन्वयित्वे सति व्यावर्तकत्वमुपलक्षणत्वम्। तत्र प्रकाशे उपलक्षितत्वधर्मो विशेषणञ्चेत्, तथैव दोषः स्वरूपमात्रञ्चेल्लक्षणस्यानिष्पत्तिरेव स्यात्। न हि गौः क इत्युक्ते गौरेव गौरित्युक्ते सति कश्चिल्लक्ष्यं गां प्रतिपद्यते। केवलं स्वरूपेणैव पदार्थस्य ज्ञानं न भवति। अत एव "न हि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वाभिसम्बन्धात् तु गौरि"त्युक्तं काव्यप्रकाशकृता स्वोद्धरणे। तथैव व्यवहारहेतुत्वस्य धर्मस्य उपलक्षणभूतस्य स्वरूपमात्रत्वे ज्ञानं प्रकाश इति लक्षणं सम्पन्नं स्यात्। तथा च न लक्षणसिद्धिः।

ननु घटशब्दार्थजिज्ञासायां कलशः घट इत्युक्ते घटशब्दार्थज्ञानं जायत एव। पाकं करोतीत्युक्ते सति पचति पदार्थज्ञानं विवरणादपि जायत एव। तथैव ज्ञानं प्रकाश इत्युक्तेऽपि ज्ञानशब्दार्थावगमो भवत्येव। न च शब्दार्थावगमेऽपि तदर्थस्यासाधारणधर्मानुगतं लक्षणं न निष्पन्नं भवतीति वाच्यम्, लक्ष्यावगमप्रयोजनत्वाल्लक्षणस्य। सिद्धे च लक्ष्यावगमे लक्षणस्याकिञ्चित्करत्वादिति चेत्, न, पदार्थावगमेऽपि लक्षणस्यावश्यकत्वात्। लक्ष्यावगमोऽलक्ष्यव्यावृत्तिश्चेति द्वयं लक्षणेन प्रार्थ्यते, न केवलं स्वरूपज्ञानम्। इतरव्यावृत्त्या विना न च लक्ष्यनिश्चयो जायते। घटः कलश इत्युक्ते सति घटस्य स्वरूपमात्रज्ञानेऽपि अघटस्य व्यावृत्तिर्न भवति। लक्षणेन तु इतरस्मिन् घटबुद्धिर्व्यावर्त्यते।

किञ्च लक्ष्यावगमे जात एव लक्षणस्य समानुगतधर्मस्य जिज्ञासोदेति, तदनुगमाय। अतो ज्ञानं प्रकाश इत्युक्ते न ज्ञानस्य लक्षणमुक्तं भवति।

ननु अश्व इत्युक्ते सति न गौर्न गर्दभ इति इतरव्यावृत्तिरपि सिद्धा। तथैव प्रकृतेऽपि ज्ञानं प्रकाश इत्युक्ते प्रकाशेतरस्य निवृत्तिर्भवत्येवेति चेत्, न, ज्ञानं प्रकाश इत्युक्ते सति स्वाभिमतज्ञानस्वरूपासिद्धेः। अत्र जडज्ञानवादिभिरपि ज्ञानस्य प्रकाशत्वाभ्युपगमात्। किञ्च जडप्रकाशेऽपि ज्ञानत्वं प्रसज्येत। तदेव नयनप्रसादिन्यामुक्तम् "न लक्षणसिद्धिरिति लक्ष्यस्वरूपमात्रत्वात्तस्य। जडज्ञानवादिभिरपि तावन्मात्राङ्गीकाराच्चेत्यर्थः[१]"।

इदमत्रावधेयम्—स्वाधिकरणवृत्तिस्वासमानकालिकस्वाभावप्रतियोगित्वमुपलक्षणत्वं स्वीकार्यम्। अन्यथा सर्वथा लक्ष्ये अविद्यमानत्वाद् व्यावृत्तिरपि न स्यात्। यथा काकवन्तो देवदत्तस्य गृहा इत्यादौ कदाचित् काकस्य तत्र सत्त्वाद् इदानीमभावात् तस्योपलक्षणत्वम्। न चेदानीमभावात् काकवन्त इति अभिधानमेव न स्यात्, मतुपा सम्बन्धाल्लेखात्, सम्बन्धप्रतियोगिनः काकस्य चाभावाद् इति वाच्यम्, काकस्यासत्त्वेऽपि तदुपनीततृणादीनां गृहादौ सत्त्वात् तथा प्रयोगोपपत्तिः। व्यवहारहेतुत्वस्य प्रकाशे उपलक्षणत्वे मुक्तिप्रलयादौ तदसत्ता न विरुध्यते, कदाचित् तस्य सत्त्वात्। किन्तु स्वव्यवहारहेतुत्ववान् प्रकाशश्चात्मेति प्रयोगे यदि स्वव्यवहारहेतुत्वस्य विद्यमानता, तदा उपलक्षणत्वा-

१. काव्यप्र० पृ० ३२; २. नयनप्र० पृ० ८।

योगः। यदि न विद्यमानता, तदा प्रयोग एव न स्यात्। गृहादौ तृणादिवद् अत्रात्मनि स्वव्यवहारहेतुत्वकृतविशेषोपलब्धेरभावादिति। अतः कथमपि व्यवहारहेतुत्वस्योपलक्षणत्व न सम्भवति।

ज्ञानाविषयत्वमिति षष्ठं लक्षणम्। इदमपि न युक्तम्। यथोक्तं मूले—"नापि षष्ठः, स्वयंप्रकाशत्वसाधकानुमानागमादिजन्यज्ञानविषयत्वेन लक्षणस्यासम्भवित्वात्। तस्याप्यविषयत्वे कथाप्रवृत्त्यनुपपत्तेः[1]"।

अयम्भावः ज्ञानविषयत्वस्य केवलान्वयित्वेन ज्ञानाविषयत्वस्यैवासम्भवाद् ज्ञानाविषयत्वलक्षणपदार्थो नास्ति। स्वयंप्रकाशे ब्रह्मण्यपि अनुमानागमादिप्रमाणज्ञानविषयता अवश्यं वाच्या, कथा प्रवृत्त्यनुपपत्तेः। सर्वस्य सर्वज्ञानाविषयत्वेऽपि ईश्वरज्ञानविषयत्वमस्त्येव। अतो नेदं लक्षणम्।

ननु

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानता[2]॥

न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनो।
न विद्मो न विजानीमो ···· ···· ····· ·····[3]॥

इत्यादिश्रुत्या "अनाशिनोऽप्रमेयस्येत्यादि स्मृत्या चेन्द्रियमनोबुद्ध्यादीनां ब्रह्मणि अविषयता उक्ता। तथा च ब्रह्मणि ज्ञानाविषयत्वलक्षणस्य सत्त्वात् कथं न लक्षणं युक्तमिति चेत्, न, अलीके खपुष्पादौ अतिप्रसङ्गात्। ननु अलीकस्यापि विकल्पाख्यवृत्तिविषयत्वात् किं वा अत्यन्तासदर्थेऽपि ज्ञानं शब्दः करोति हीति वाक्यपदीयानुसारं शब्दज्ञानविषयत्वात्। कथं न तत्र ज्ञानविषयतेति चेत्, न, ज्ञानाविषयतेत्यस्य ज्ञानविषयत्वाभावोऽर्थः। तस्य च ज्ञानीयविषयताधिकरणताऽभावोऽर्थः। तथा च खपुष्पादेर्वस्तुनोऽभावात्, तत्र ज्ञानीयविषयताधिकरणताया अभावाज्ज्ञानाविषयत्वरूपं लक्षणं तत्रातिव्याप्तमिति भावः। अतो नेदं लक्षणम्।

इदमिह विचार्यते यद् ब्रह्मणि ज्ञानविषयता अस्ति न वेति।

तत्र ज्ञानं द्विधा—स्वरूपभूतं वृत्तिरूपञ्चेति। स्वरूपभूतं चैतन्यमेव। वृत्तौ ज्ञानत्वमौपचारिकम्। ब्रह्मणो ज्ञानरूपत्वात् स्वस्य स्वविषयत्वाभावात् कर्तृकर्मविरोधान्न चैतन्ये चैतन्यरूपज्ञानविषयता सम्भवति।

वृत्तिरन्तःकरणपरिणामः। अत्र पक्षे वृत्तिर्यथा घटादिविषयं स्वावच्छिन्नचिता सह व्याप्नोति, न तथा ब्रह्म। इन्द्रियसन्निकर्षविषयत्वाभावात्। घटादेरिव मिथ्यात्वापातात्, अस्वप्रकाशत्वापत्तेश्च।

सर्वथा अविषयत्वे चाध्यासस्यैवासम्भवात्। ब्रह्मणि प्रपञ्चोऽध्यस्त इति

१. चित्सुखी—पृ० ८; २. केनोपनिषद्—२।३; ३. केनोप० १।३।

कथाभङ्गप्रसङ्गः। तदुक्तं भाष्ये—"[1]सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यवस्यति। युष्मत्प्रत्ययापेतस्य च प्रत्यागात्मनोऽविषयत्वं ब्रवीषि"। तथा च विषयत्वे घटादेरिव दृश्यत्वाद् मिथ्यात्वापत्तिः। पराधीनप्रकाशत्वाच्चास्वप्रकाशत्वापत्तिः। अविषयत्वे चाध्यासासम्भवः। सम्भवेऽपि तस्यानिर्मोक्षप्रसङ्गः। ऋते ज्ञानान्न मुक्तिरिति स्मरणाज्ज्ञाते ब्रह्मणि बन्धनिवृत्तिदर्शनाद् अविषयत्वे च बन्धनिवृत्तेरभावादिति।

किञ्च ज्ञानविषयत्वमित्यनेन किं विवक्षितम्? ज्ञानकर्मत्वं फलव्याप्यत्वं वृत्तिव्याप्यत्वं वेति।

आद्ये कर्मकर्तृभावविरोध एकत्र, मिथ्यात्वापत्तेः। द्वितीये, इन्द्रियसन्निकर्षद्वारा भग्नावरणाभिव्यक्तविषयावच्छिन्नचैतन्यमेव फलम्। तद्व्याप्यत्वं तद्विषयत्वम्। ब्रह्मणि चेन्द्रियसन्निकर्षाभावात् फलव्याप्यत्वं न सम्भवति। सम्भवे चोक्तदोषापत्तेः।

तृतीयेऽपि मिथ्यात्वापत्तिः। वृत्तिव्याप्यं शुद्धम् उपहितं वेति। उपहितपक्षे मिथ्यात्वादिदोषाः सम्भवन्ति।

किञ्च उपहितमुपाधियुक्तम्। उपाधिश्चाविद्यैव। सा चाध्यस्तैवेति शुद्धस्य वृत्तिव्याप्यत्वरूपविषयत्वाभावाद् अध्यासासम्भवः। तदुक्तम् अध्यासभाष्ये भामत्याम्—[2] "एतदुक्तं भवति यत् पराधीनमंशवच्च तत् सामान्यांशग्रहे कारणदोषवशाच्च विशेषाग्रहे अन्यथा प्रकाशते। प्रत्यागात्मा त्वपराधीनप्रकाशतया न स्वज्ञाने कारणान्यपेक्षते, येन तदाश्रयैर्दोषैर्दूष्येत। न चाशंवान् येन कश्चिदंशोऽस्य गृह्येत, कश्चिन्नेति। न हि तदेव तदानीमेव तेनैव गृहीतमगृहीतञ्च सम्भवति इति न स्वयं प्रकाशपक्षेऽध्यासः"। निरंशस्य ब्रह्मणः शुद्धमुपहितमिति भेदोऽपि न युज्यते। यदि उपहितमेव वृत्तिविषयस्तदा शुद्धस्याप्रसिद्ध्यापत्तिः।

किञ्चोपहितं ब्रह्म वृत्तिविषयो भवतीति वृत्तिश्चाहं ब्रह्मास्मीत्यखण्डाकारा। तत्र वृत्त्योपाधिभूताविद्यानाशाद् उपहितत्वमेव न सम्भवति। यदि च वृत्तिदशायामनुपहितत्वाभावाद् उपहितस्यापि मिथ्यात्वमङ्गीक्रियते, तदा शुद्धस्याप्रसिद्धेः सत्याधिष्ठानशून्यतापत्तेरिति चेत्, अत्रोच्यते—[3]"न तावदयमेकान्तेनाविषयः, अस्मत् प्रत्ययविषयत्वात्" इत्यादिभाष्यात्। ब्रह्मणि ज्ञानविषयता तावत् स्वीकृता। विषयता च द्विधा तादात्म्यलक्षणा, भास्यत्वलक्षणा चेति। तत्र भास्यत्वलक्षणविषयत्वं दृश्यत्वव्याप्यम्। तादात्म्यलक्षणञ्च विषयत्वं ब्रह्मणि।

१. ब्र० सू० अध्यायसभाष्ये पृ० ३७। २. भा० पृ० १७०।
३. ब्र० सू० अध्यायसभाष्ये पृ० ३८।

तत्र अहं ब्रह्मास्मीति सामानाधिकरण्यानुरोधाद् अस्मत् प्रत्ययस्य अहमिति वृत्त्यवच्छिन्नचितो ब्रह्मणा सह तादात्म्यावबोधात्। तादात्म्यञ्चात्राभेदः। वस्तुतो ब्रह्मण उक्तवृत्त्यवच्छिन्नचितश्चाभेदात्।

एवं ब्रह्मणि तादृशविषयतायाः सत्त्वेऽपि न स्वप्रकाशत्वादिव्याघातः, तस्या उपहितानुपहितविषयाविशेषात्। उपहितस्यैव वृत्तिविषयत्वे अनिर्मोक्ष-प्रसङ्गात्। तस्माच्छुद्धस्य विषयताऽवश्यं वाच्या। विषयता चोक्तरूपा। शुद्धस्य वृत्तिविषयत्वं न सम्भवतीति अद्वैतसिद्धावपि वृत्तिविषयत्वमित्यनेन वृत्तिभास्यत्वमेव विवक्षितम्। एवमेव उपहितमेव वृत्तिविषय इत्यस्यापि तत्रत्यवाक्यस्य स एवार्थः। उक्तविषयता च ब्रह्मणि उपलक्षणविधया तेन उपहितदशायामपि अनुपहित-सदधिष्ठानसद्भावः सिध्यति। अत एव न निरंशस्य ब्रह्मण उपहितानुपहित-विभागोऽनुपपन्नः, तस्य कल्पितभेदात्।

अत एवोक्तं भामत्याम्—"अयमर्थः सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वाद् अविषयो अनंशश्च; तथापि अनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूल-शरीरेन्द्रियावच्छेदेनानवच्छिन्नेऽपि वस्तुतोऽवच्छिन्न इव अभिन्नोऽपि भिन्न इव अकर्ता अपि कर्तेव अभोक्ता अपि भोक्तेव अविषयोऽपि अस्मत्प्रत्ययविषय इव जीवभाव-मापन्नो अवभासते। नभ इव घटमणिमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्म-कमिवेति। न हि चिदेकरसस्यात्मनश्चिदंशे गृहीते अगृहीतं किञ्चिदस्ति। न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपत्वाद् वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन् गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति।

न चात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विको येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत्। बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्यापि अनिर्वचनीयत्वात्। तस्मात् चिदात्मनः स्वयंप्रकाशस्यैव अनवच्छिन्नस्य अवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तदध्यासेन जीवभाव इति। तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्व-मुपपद्यते। तथाहि कर्त्ता भोक्ता चिदात्मा अहंप्रत्यये प्रत्यवभासते। न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा सम्भवति। यस्य च बुद्ध्यादेः कार्यकारणसङ्घातस्य क्रियाभोगशक्ती न तस्य चैतन्यम्। तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितोपलब्धक्रिया भोगशक्तिः स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात् कथञ्चिद् अस्मत्प्रत्ययविषयोऽहङ्कारास्पदं जीव इति च जन्तुरिति च क्षेत्रज्ञ इति चाख्यायते। न खलु जीवश्चिदात्मनो भिद्यते। तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयं प्रकाशोऽप्यहं प्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियते, इत्यहंप्रत्यया-लम्बनमुच्यते[1]"। तत्र बुद्ध्यादिरूपविषयविच्छुरणादित्यस्य बुद्ध्यादिरूपविषय-तादात्म्याध्यासादित्यर्थः। स्वभाव एव यद् बुद्ध्यादिषु अहमिति तादात्म्याध्यासः।

---

१. भाम० पृ० १७१।

घटादिषु च ममेदमिति। एवञ्च अहमिति प्रत्ययस्य विषयोऽन्तःकरणोपहितचिदेव। तत्र चान्तःकरणस्योपाधिरूपतया उपाधेश्चेतरव्यावर्तकतायामपि विधेयानन्वयित्वात् केवलविषयतासम्पादनोपयोगित्वात् केवलायाश्चितो न स्वप्रकाशत्वहानिः। यथा कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यादौ कर्णशष्कुली उपाधिः, तेन नान्यत्र आकाशे शब्दोपलब्धिः। न च श्रोत्रस्याकाशव्यतिरिक्ततेति, तथैव प्रकृतेऽपि बोध्यम्।

अखण्डाकारवृत्तिकाले वृत्त्यैव उपहितत्वव्यवहारः। यावद् वृत्तिसद्भावः, तावद् उपहितत्वस्यैव सत्त्वात्। अतः तादात्म्यलक्षणविषयत्वमेव वृत्तिव्याप्यत्व-शब्देन गृह्यते। तादृशविषयताया ब्रह्मणि स्वीकारेऽपि न क्षतिः। तादात्म्यञ्चोपहितेन सह शुद्धस्येति। तत्र बुद्ध्यादेरेवोपाधित्वात्। एवञ्च उपहितशुद्धयोरभेद एव। अतो ब्रह्मणोऽपराधीनप्रकाशस्यापि अविषयस्यापि उपाधिवशाद् विषयता सम्भवतीति।

स्वप्रकाशत्वस्य भास्यत्वरूपविषयत्वेन विरोधः, न तु तादात्म्यलक्षण-विषयत्वेन। तथा च ज्ञानाविषयत्वमित्यादिस्वप्रकाशलक्षणे ज्ञानविषयता भास्यत्वलक्षणा, न तु तादात्म्यलक्षणा वृत्तिव्याप्यत्वरूपा वेति। एवञ्च वृत्ति-व्याप्यत्वस्वीकारेऽपि ब्रह्मणि भास्यत्वाभावाद् ज्ञानाविषयत्वलक्षणस्य ब्रह्मणि सत्त्वेऽपि अलीकादौ अति प्रसङ्गस्तदवस्थ एवेति भावः। अथवा वृत्तिव्याप्यत्वस्य ब्रह्मणि सत्त्वात् सामान्येन लक्षणे विषयताया ग्रहणात् नेदं लक्षणं स्वप्रकाशे ब्रह्मणि गतमिति असम्भवदोषः।

ब्रह्मणि वृत्तिव्याप्यत्वं तावत् स्वीक्रियते। तदुक्तम्—

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते।
स्वयंप्रकाशमानत्वान् नाभास उपयुज्यते॥

वृत्तिव्याप्यत्वं वृत्तेराकाराख्यविषयत्वम्, न तु स्वावच्छिन्नचिद्विषयत्वम्, ब्रह्मणि चिद्रूपे चिद्विषयत्वाभावात्। यत्र तादृशविषयत्व तादात्म्येनेति बोध्यम्। अम्भावः—घटपटादिप्रत्यक्षस्थले तावत् तदाकारेण परिणतान्तः-करणवृत्त्या विषयगतावरणनाशः क्रियते। विषय प्रकाशश्च तद्वृत्तिप्रति-बिम्बितचैतन्यसंम्बन्धेनैव। सम्बन्धश्च चैतन्येन सह तादात्म्यमिति। तत्तद् विषयेषु चिद्भास्यत्वरूपं दृश्यत्वमुपपन्नम्। तत्त्वमस्यादिवाक्यजन्या-खण्डाकारवृत्त्या च ब्रह्मणि अज्ञाननिवृत्तौ स्वयंप्रकाशब्रह्म स्वयमेव प्रकाशते, मेघाद्यावरणनिवृत्तौ भास्कर इव। न तु वृत्त्यवच्छिन्नाभिन्नाभिव्यक्तविष-यावच्छिन्नेन चैतन्येन। अतो वृत्तिव्याप्यत्वेऽपि न भास्यत्वादिलक्षणदृश्यत्वापत्तिः। न च वृत्तिव्याप्यत्वमेव दृश्यत्वं तथा च ब्रह्मणो मिथ्यात्वापत्तिरिति वाच्यम्, इष्टापत्तेः। यावद्वृत्ति उपहितमेव भवति तत्, अत एव शुद्धं न वृत्तिव्याप्यमिति अद्वैतसिद्धिग्रन्थे उक्तम्। वृत्तौ सत्यां शुद्धत्वायोगादिति भावः। वृत्तावपि

उपशान्तायां शिखी ध्वस्त इतिवद् वृत्त्युपहितस्य वृत्तिगतमिथ्यात्वमादाय मिथ्यात्वभाजः स्वरूपतोऽमिथ्यात्वोपपत्तिः ।

तत्रायं प्रकारः—प्रत्यक्षे बहिर्निर्गतान्तःकरणप्रतिबिम्बितविषयचैतन्याभिन्न-प्रमातृचैतन्यविषयत्वम् । परोक्षे तावद् अन्तःकरणस्य बहिर्निर्गमनाभावात् स्वस्थानस्थितान्तःकरणवृत्तिबिम्बितप्रमातृचैतन्यविषयत्वम् । शुक्तिरजतस्वाप्न-गजादिप्रातिभासिकेषु स्वाकाराविद्यावृत्तिप्रतिबिम्बितसाक्षिचैतन्यप्रमातृविषयत्वम् ।

ननु तत्र बहिर्विषयगताविद्यावृत्तौ अन्तःकरणावच्छिन्नचैतन्यस्य कथं प्रतिबिम्ब इति चेत्, न, स्वतादात्म्यापन्नेदमाकारबहिर्निःसृतान्तःकरणवृत्तिप्रति-बिम्बितेदमवच्छिन्नचैतन्याभिन्नत्वेन रूपेण । न हि तत्र रजताकारान्तःकरणं वृत्ति-र्भवति, अपि तु तथाऽविद्यावृत्तिरेव । उक्तान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यस्येद-मवच्छिन्नचैतन्यस्य चैक्याद् इदमिति प्रत्यक्षं ज्ञानं भवति । इदमवच्छिन्नचैतन्य एव अविद्या परिणामरूपा वृत्ती रजताकारा । तत्र अविद्यायास्तद्रजतगोचरवृत्ते-श्चाधिष्ठानम् इदमंशावच्छिन्नं चैतन्यमेव, न तु चैतन्यमात्रम् । अन्यथा इदमि तादात्म्येन रजतं न प्रतीयेत, तत्र इदमि इदमाकारान्तःकरणवृत्तिरपि अस्ति, तद्द्वारा चान्तःकरणोपहितं साक्षिचैतन्यमपि । एवञ्च साक्षिचैतन्यविषयगतचैतन्य-योरभेदाद् विषयगतचैतन्येऽध्यस्तमपि रजतं साक्षिण्येव अध्यस्तमिति चैतन्यस्यैक्यात् तद्भास्यं रजतम् ।

रजततादात्म्यापन्ने पुरोवर्त्तिनि चक्षुःसन्निकर्षादेव चक्षुषा रजतं पश्यामि इति व्यवहारः, न तु रजतेन सह चक्षुःसन्निकर्षोऽस्ति, तस्याविद्यमानत्वात् । तत्रोभाभ्यामपि वृत्तिभ्यामेकमेव विशिष्टं चैतन्यमभिव्यज्यते, अतो न तत्र ज्ञान-द्वयमिति तत्त्वम् । एवञ्च वृत्तिव्याप्यत्वं ब्रह्मणः स्वीकारे न वेदान्तानां वैयर्थ्यम् । ननु कथं वृत्तिव्याप्यत्वं ब्रह्मणः ? तथाहि वृत्तिपदेन वृत्त्यवच्छिन्नचिद्ग्रहणात् । व्याप्यत्वं नाम स्वाकाराख्यस्वरूपसम्बन्धविशेषः । तत्र वेदान्तजन्यमनोवृत्तिविषय-त्वेऽपि तत्प्रतिबिम्बितचैतन्यविषयत्वाभावाद् विशेष्याभावप्रयुक्तविशिष्टाभावाद् वृत्तिव्याप्यत्वं ब्रह्मणि न घटते, इति चेत्, न, तदवच्छिन्नचैतन्यस्यापि तादात्म्येन ब्रह्मणि विषयता स्वीकारात् । तत्काले च तदाकारवृत्त्यतिरिक्तोपाधेरभावात् स्वातिरिक्तानुपहितब्रह्मैव विषयः । अत एव मोक्षोपपत्तिः । अन्यथोपहितस्य तादृश-वेदान्तजन्यमनोवृत्तिविषयत्वेऽनिर्मोक्षप्रसङ्गः । शुद्धं ब्रह्मैव वेदान्तप्रतिपाद्यम् । एवञ्चोपहितं ब्रह्मवृत्तिव्याप्यमित्यत्र तत् काले तादृशवृत्तिरेवोपाधिर्नान्यः कश्चित् । मिथ्यात्वञ्च तस्य तादृशवृत्तिनाशादेव शिखी ध्वस्त इतिवत् । एवञ्च शुद्धमुपहितं वेति न भागद्वयं ब्रह्मणो निरवयवत्वात् । व्यवहारमात्रं तत् । वेदान्तानाञ्च तादृश-वृत्ति सम्पादने उपयोग इति दिक् ।

नापि सप्तमः। ज्ञानाविषयत्वे सत्यपरोक्षमिति सप्तमलक्षणमपि न युक्तम्। पूर्वोक्तरूपेण ब्रह्मणो ज्ञानाविषयत्वं न सम्भवति। यदि ज्ञानविषयत्वशब्देन ज्ञान-कर्मत्वं विवक्ष्यते चेत्, संविदाश्रयतया सिद्धस्यात्मनः प्राभाकरैर्ज्ञानकर्मत्वानङ्गी-कारात् तत्रातिव्याप्तिः। नैयायिकानाञ्च अपरोक्षे जगति शुक्तिरजतसंसर्गे चाति-व्याप्तिः।

नन्वस्तु दोषोऽन्यमते, तन्मतं नाङ्गीक्रियते, इति चेत्, न, वेदान्तिनामपि साक्षिवेद्यसुखादावतिव्याप्तिः। तस्यापि ज्ञानाकर्मत्वाद् अपरोक्षत्वाच्च। अत एव नाष्टमः। एवमेवान्येषामपि पक्षाणां निरासो मूले कृत एव इति स्वप्रकाशलक्षणे पूर्वपक्षविचारः।

॥ इति स्वप्रकाशशब्दार्थविचारः ॥



# अथ स्वप्रकाशोत्तरपक्षः

अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमिति स्वप्रकाशसिद्धान्तलक्षणम्। तच्च ब्रह्मणि संगतमेव।

ननु तादृशयोग्यत्वस्य धर्मत्वाद् मोक्षदशायां तदसम्भवाद् अव्याप्तिः। न हि मोक्षात्मनि केनचिद् धर्मेण भवितव्यम्। अविद्याया निवृत्तेः। न हि ब्रह्म धर्मवद् गुणवद् वेति चेत्, न, तादृशयोग्यत्वात्यन्ताभावानधिकरणत्वस्य विवक्षितत्वात्। तादृशानधिकरणत्वे सति तदत्यन्ताभावानधिकरणत्वमस्त्येव। अत एव गुणवत्त्वं द्रव्यलक्षणमुत्पत्तिक्षणेऽव्याप्तमिति कृत्वा गुणवत्त्वात्यन्ताभावानधिकरणत्वं विवक्षितम्। नन्वेवं सति अपरोक्षव्यवहारविषयत्वात्यन्ताभावानधिकरणत्वमेव लक्षणमस्तु कृतं योग्यत्वनिवेशेनेति चेत्, सत्यम्, तथापि आमुक्तेर्विद्यमानाया अपरोक्षव्यवहारयोग्यताया अत्यागाय इदमुक्तम्। ननु ब्रह्मणो निर्गुणत्वान् निष्क्रियत्वात् तथा च श्रुतिः निर्गुणं निष्क्रियं शान्तमित्यादि कथं तादृशयोग्यत्वलक्षणधर्मस्तत्र स्यात्। असत्त्वे तु लक्षणस्यासम्भवदोषता। एवञ्च सर्वथा धर्मस्यासत्त्वात् तदत्यन्ताभावानधिकरणत्वस्यापि विवक्षितुमशक्यत्वाद् इति चेत्, न, संसारदशायां ब्रह्मणि काल्पनिकधर्माणां सत्त्वात्। आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते। एवञ्चापरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वस्य तदधिकरणाभावरूपत्वाद् आरोपितप्रतियोगिकाभावस्य चाधिकरणरूपत्वान् न मोक्षदशायामपि विरोधः।

ननु निर्धर्मकस्य स्वप्रकाशस्य ब्रह्मणः आरोपितमेव तादृशयोग्यत्वमादाय लक्षणं क्रियते चेद् अन्यत्रापि आरोपितधर्ममादाय लक्षणापत्तिः स्यात्। तथा च शुक्तौ रजतमारोपितमिति रजतवत्त्वं शुक्तेर्लक्षणं स्यात्, सर्वत्वं रज्ज्वा लक्षणं स्याद् इति चेत्, न, निर्धर्मकस्थले तथास्वीकारेऽपि सधर्मकस्थले तथा स्वीकारे मानाभावात्। एवञ्च अनारोपिता धर्मा यत्र सन्ति, न तत्रारोपितधर्ममादाय लक्षणमिति स्थितम्।

अत्र लक्षणे अवेद्यत्वघटकवेद्यत्वं कीदृशम्? यदि ज्ञानविषयत्वम्, तदा ब्रह्मण्यपि स्वप्रकाशता न स्यात् यदि ज्ञानकर्मत्वम् तदा साक्षिवेद्यसुखादौ प्राभाकरात्मनि चातिव्याप्तिरिति चेत्, अत्रोच्यते—अवेद्यत्वं फलाव्याप्यत्वम्, वेद्यत्वं फलव्याप्यं विषयावच्छिन्नं चैतन्यमभिव्यक्तं सत् फलम्, अभिव्यक्तिश्च इन्द्रियसन्निकर्षद्वारेति बोध्यम्। तादृशचिद्भास्यत्वमेव फलव्याप्यत्वम्।

यत्तु वृत्तिविशेष्यतावच्छेदकत्वं फलव्याप्यत्वम् तन्न, न, धर्माधर्मादावपि अतिप्रसङ्गात् । अवेद्यत्वांशनिवेशेन घटादावतिप्रसक्तिर्वारिता ।

अतीतानागतयोर्नित्यानुमेयेषु च धर्मादिषु अतिव्याप्तिवारणाय अपरोक्षव्यवहारयोग्यत्वमुपात्तम् ।

अत्रापरोक्षव्यवहारशब्देन चाभिलापादिरूपव्यवहार एव विवक्षितः, न तु हानोपादानादिः । अस्ति च ब्रह्मणि अपरोक्षमिति व्यवहारः । यत् साक्षाद् अपरोक्षाद् ब्रह्मेति श्रुतिः । ननु शुक्तिरजतादावपि स्वप्रकाशत्वापत्तिः, तस्य अवेद्यत्वाद् अपरोक्षव्यवहारयोग्यत्वाच्च । अज्ञानान्तःकरणधर्मेच्छादावपि तथापत्तिः । अज्ञानस्यापि फलाव्याप्यत्वाद् अहमज्ञ इत्याद्यपरोक्षव्यवहारयोग्यत्वाद् इति चेद्, न, रजताज्ञानादीनां साक्षाद् अपरोक्षतताया अभावात् । तेषां साक्षिभास्यत्वात् साक्षिगतापरोक्षत्वस्य तत्राध्यासाद् अपरोक्षत्वव्यवहारः ।

नन्वेवं सति घटादेरपि स्वावच्छिन्नचैतन्ये अध्यस्ततया अध्यासादेवापरोक्षताव्यवहारः । एवञ्च तत्रातिप्रसक्तेरभावाद् अवेद्यत्वांशस्य न किञ्चिद् व्यावर्त्यं स्यात् । समानमेव अज्ञानघटयोरपरोक्षतेति चेत्, न, समानेऽप्युभयोरपारोक्ष्ये वेद्यत्वावेद्यत्वयोर्विशेषात् । तथाहि घटादेर्जलाहरणक्रियाक्षममपारोक्ष्यं प्रत्यक्षादिप्रमाणसिद्धं सत्त्वमिवास्ति सन् घट इत्यादिवद् अर्थक्रियासमर्थो घट इत्यादिप्रत्यक्षप्रमाणसिद्धमेवाद्यापारोक्ष्यम् । अज्ञानादेस्तु तन्नास्ति । प्रत्यक्षविषयताया अभावात् । एवञ्च व्यावहारिकापारोक्ष्यं घटादेः, तत्रातिप्रसक्तिवारणाय अवेद्यत्वांशो देय एव ।

ननु अवेद्यत्वे सत्यपरोक्षत्वमित्येतावतैव घटादौ अज्ञानादौ चातिव्याप्तिपरिहाराल्लक्षणे व्यवहारयोग्यत्वनिवेशः किमर्थं इति चेत्, न, अपरोक्षज्ञानविषयेऽष्वपि घटादिषु अपरोक्षशब्दप्रयोगाद् अवेद्यत्वे सति तादृशापरोक्षत्वस्य व्याघातः स्यात् अतो अवेद्यत्वेऽपि उपपद्यमानम् अपरोक्षव्यवहारयोग्यतापदग्रहणम् । अत एवोक्तम्—"वस्तुतस्तु न प्रसरत्येव घटादिषु अपरोक्षत्वमिति[1]"। अस्यायं भावः—प्रत्यक्षं घटज्ञानं प्रत्यक्षं प्रमाणं प्रत्यक्षो घट इत्यादि व्यवहारात् प्रत्यक्षशब्दस्य तावद् ज्ञानप्रमाणविषयेषु त्रिष्वपि प्रयोगो भवति। तत्रापरोक्षज्ञानविषयत्वाद् घटादिषु अपरोक्षव्यवहारः। एवञ्च ब्रह्मण्यपि स्यात्, तथा च अवेद्यत्वे सति व्याघातापत्तिः। कथं नाम अवेद्यमपि ब्रह्म अपरोक्षज्ञानविषयत्वाद् अपरोक्षमपि इति व्याघातः। तन्निवृत्त्यर्थम्, अपरोक्षव्यवहारयोग्यता उपात्ता। तया चावेद्येऽपि ब्रह्मणि अपरोक्षव्यवहाराविषयेऽपि अपरोक्षव्यवहारयोग्यमस्त्येवेति लक्षणसमन्वयः।

---

१. नयनप्र० पृ० २० ।

अत्र नयनप्रसादिनीकाराणामाशयः। अपरोक्षशब्दोः मुख्येन रूपेण ज्ञान एवं प्रयुज्यते। न च प्रयोगस्य त्रिष्वपि ज्ञानप्रमाणविषयेषु समानत्वात् प्रयोगाविशेषाच्च कुत्र गौणो मुख्यो वा प्रयोग इति कथं ज्ञायते, इति वाच्यम्, ज्ञानस्य सर्वाधिष्ठानत्वात् तदपारोक्ष्यादेव सर्वत्रापरोक्षत्वनिर्वाहाद् विषयादिषु अपरोक्षता स्वीकारे गौरवात्। यत् साक्षाद् अपरोक्षाद् ब्रह्मेति श्रुतिः ज्ञानरूपस्य ब्रह्मण एवापरोक्षत्वं कथयति। एवञ्च ज्ञानातिरिक्तेषु अपरोक्षत्वव्यवहारो भाक्तो ज्ञाने अध्यासादेव सिद्धेः। एवञ्च अपरोक्षत्व प्रमात्वव्याप्यजातिः। प्रमायामेव तस्याः सत्त्वम्। घटादेस्तु अप्रमात्वात् कथ तत्रापरोक्षत्वं स्यात्? अपरोक्षो घट इत्यादेस्तु व्यवहारस्य अध्यासिकापरोक्षत्वाङ्गीकारेऽप्युपपन्नत्वात्।

ननु अपरोक्षत्वं कथं प्रमात्वव्याप्यजातिः? यावता शुक्तिरजतज्ञानादावपि भ्रमे तस्य सत्त्वात्, साङ्कर्याज्जातित्वाभावाच्च। तथाहि प्रमात्वम् अपरोक्षत्वं विहायानुमित्यादौ अस्ति। अपरोक्षत्वञ्च प्रमात्वं विहाय भ्रमे अस्ति। उभयञ्च घटादिज्ञाने, अतः साङ्कर्यमिति चेत्, न, शुक्तौ वस्तुतो रजतस्याभावात् तत्रारोपादेव रजतप्रतीतेर्व्यवहारस्यापि अपरोक्ष रजतमित्यादेस्तन्मूलकत्वम्। वस्तुतोऽपरोक्षत्वान्न साङ्कर्यम्। अन्यथा घटत्वादेरपि जातित्व न स्यात्, पृथिवीत्वेन साङ्कर्यात्। तथाहि पृथिवीत्वं घटत्वहीने पटेषु घटत्वञ्च पृथिवीत्वहीने सुवर्णनिर्मितघटेषु मृद्घटेषु चोभयमिति साङ्कर्यात्। तस्माद् घटादिषु अपरोक्षत्वव्यवहारो अध्यस्तो ज्ञानस्यैवापरोक्षत्वं सिद्धम्।

व्याहतिशङ्का तु नास्त्येव अवेद्यत्वानुरोधाद्। अत्र लक्षणे अपरोक्षव्यवहारपदेम न ज्ञानरूपं व्यवहारो गृह्यते, अपि तु अभिलापादिरेव।

ननु तथापि अवेद्यत्वे सति अपरोक्षव्यवहारत्वमेव लक्षणं स्यात्, कृतं योग्यत्वनिवेशेनेति चेत्, न, सुषुप्तौ तादृशव्यवहाराभावात् तत्संग्रहाय योग्यत्वपदनिवेशात्।

ननु एवमपि सम्पूर्णं लक्षणमभावे अतिव्याप्तम्, अभावस्यानुपलब्धिप्रमाणगम्यत्वाद् अपरोक्षव्यवहारयोग्यत्वाच्चेति चेत्, न, व्यवहारपदेन प्रामाणिकव्यवहारस्य विवक्षितत्वात्। स च तादृशो व्यवहारो भ्रमाजन्य इति।

न च भ्रमस्यारोपरूपत्वाद् घटादौ तादृशव्यवहारस्यापि अप्रामाणिकत्वात् प्रामाणिकव्यवहाराभावादेव तत्र लक्षणस्यानतिप्रसक्ते स्तद्वारणाय अवेद्यत्वांशनिवेशो व्यर्थ एवेति वाच्यम्, भ्रमशब्देन लौकिकप्रतिभासस्य विवक्षितत्वात्, घटादेस्तु व्यवहारसिद्धत्वात्। न चैवमभावे लक्षणातिप्रसक्तिस्तदवस्थैवेति, तस्यापि व्यवहारसिद्धत्वाद् अप्रातिभासिकत्वाद् इति वाच्यम्, प्रामाणिकव्यवहार इत्यनेन अबाधितव्यवहारस्यैव विवक्षितत्वात् तथा चाबाध्यत्वमेव प्रामाणिकत्वम्। प्रकृते च व्यवहारस्य बाध्यत्वात्।

नन्वेमपि घटादावपि बाधितव्यवहारस्य सत्त्वाद् अभावेन सह तुल्ययोगक्षेमत्वाद् अवेद्यत्वांशनिवेशो न कर्तव्य इति चेत्, अत्रोच्यते—तत्रैव तस्यापि तात्पर्यग्राहकत्वात् । वस्तुतोऽपरोक्षत्वमेव स्वप्रकाशत्वम् । उक्तञ्च श्रुत्या यत् साक्षाद् अपरोक्षाद् ब्रह्मेति । तत्र लोकव्यवहारमादाय घटादावपि तदाशङ्क्य साक्षाद् इति निवेशः कृतः । तस्यैव साक्षादित्यस्य उपव्याख्यानं अवेद्यत्वमिति । तत्र साक्षादित्यनेन अपराधीनप्रकाशत्वं विवक्षितम् । घटादेस्तु पराधीनप्रकाशत्वान्न साक्षात्त्वमस्ति ।

अयमत्र निष्कर्षः—यत् साक्षाद् अपरोक्षं तदेव ब्रह्म । ब्रह्म च यत्तत् साक्षाद् अपरोक्षमेव तथा च श्रुतिप्रामाण्याद् अपरोक्षता स्वत आत्मन एव । अन्यस्य चाखिलस्य प्रपञ्चस्यापरोक्षता नास्ति । अन्यस्य यस्य चापरोक्षत्वं प्रतिभाति, तस्याप रोक्षे ब्रह्मणि अध्यस्तत्वादेव । एवञ्च ब्रह्मातिरिक्ते अपरोक्षत्वं भ्रमजन्यमेव, तस्य चाप्रामाणिकत्वात् प्रामाणिकापरोक्षव्यवहारयोग्यत्वाभावान्न घटादेरज्ञानादेर्वा स्वतःप्रकाशता । एवञ्च अवेद्यत्वांशानिवेशेऽपि न क्षतिः । तस्य उक्तार्थे एव तात्पर्यग्राहकत्वात् । अपरोक्षत्वमित्येतावतैव लक्षणे सुषुप्तौ मुक्तौ दोषाभावाद् व्यवहारनिवेशो योग्यत्वनिवेशो योग्यत्वात्यन्ताभावानधिकरणत्वनिवेशश्च न कर्तव्यो भवति ।

न चैवमपरोक्षत्वस्य स्वरूपमात्रपरत्वे न लक्षणसिद्धिरिति वाच्यम्, स्वरूपनिर्धारणायैव लक्षणस्य प्रवृत्तत्वात् । अत एव स्वरूपलक्षणं तटस्थलक्षणमिति लक्षणभेदद्वयं स्वीकृतम् । तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम् । यदि च स्वरूपं न लक्षणं स्यात्, तदा सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यादि ब्रह्मलक्षणं न स्यात् ।

लक्षणे चावेद्यत्वपदेन फलाव्याप्त्वमेव गृह्यते । फलञ्च भग्नावरणाचिदेव, आवरणभङ्गश्च इन्द्रियसन्निकर्षाज्जायमानान्तःकरणपरिणामेनेति बोध्यम् । तादृशचित्सम्बन्धित्वमेव तद्व्याप्यत्वम् । तच्च घटादौ, नात्मनि ।

अयम्भावः—फलशब्देन चिदेव गृह्यते चेत्, चिद्व्याप्यत्वाद् अन्तःकरणादेरपि फलव्याप्यत्वापत्तिः । वृत्त्यवच्छिन्नचिद्ग्रहणे ब्रह्मणि अतिप्रसक्तिः । तस्यापि अहं ब्रह्मास्मीति वृत्त्यवच्छिन्नचिद्व्याप्यत्वात् । यदि च फलशब्देन वृत्तिप्रतिबिम्बितचतन्यं गृह्यते, व्याप्यत्वशब्देन च तज्जन्यातिशयसम्बन्धित्वं गृह्यते, तच्च घटादावस्ति । तत्र घटाकाराकारितवृत्त्यवच्छिन्नचैतन्यातिशयश्च तत्रावरणनाशो ज्ञातो घट इत्यादिव्यवहारो वेति चेत्, तथापि आत्मन्यपि फलव्याप्यतापत्तिः, तत्रापि अखण्डाकारवृत्त्यवच्छिन्नचैतन्यस्य अनाद्यविद्यानिवृत्तिरूपातिशयकत्वात् ।

अत इन्द्रियसन्निकर्षाज्जायमानमनःपरिणामविशेषादभिव्यक्तं विषयावच्छिन्नं चैतन्यमेव फलशब्देन उच्यते ।

ननु विद्धातोर्ज्ञानार्थकतया वेत्तुंयोग्यं वेद्यमित्यस्य ज्ञानविषयार्थकतया, ज्ञानविषयत्वस्य च केवलान्वयित्वाद् अवेद्यत्वमेव तावदप्रसिद्धम् । न चोक्तरूपस्य फलाव्याप्यत्वस्यैव अवेद्यत्वस्वीकारान्न दोष इति वाच्यम्, तादृशावेद्यत्वस्य खपुष्पायमाणत्वादिति चेत्, न, सिद्धान्ते पारिभाषिकस्यैव उक्तरूपस्यावेद्यत्वस्य ग्रहणात् । तच्च सिद्धान्ते प्रसिद्धमेवेति न तस्यालीकता । तथा च नैयायिकैरपि प्रमाणप्रमेयादिपदार्थनिरूपणे पारिभाषिकमेव स्वकृतान्तसिद्धं प्रमेयं स्वीक्रियते[1] । अन्यथा प्रमेयत्वस्य केवलान्वयित्वात् प्रमाणस्यापि तत्त्वात् प्रमाणप्रमेयादिविभागो न स्यात् । स्वसमभिव्याहृतपदार्थतावच्छेदकमिथोविरुद्धयावद्धर्मप्रकारकबोधविषयत्वस्येव विधापदार्थत्वात् प्रमाणप्रमेयादौ प्रमेयत्वस्य केनापि तत्रोपात्तधर्मेण विरोधाभावात् । विरोधो नाम सहावस्थानाभावः । तथैव द्रव्यगुणकर्मादि स्थले दृष्टत्वात् । प्रकृते च न तादृशः प्रमेयत्वेन विरोध इति भावः ।

यथा वा पृथिव्यादीनां शरीरेन्द्रियविषयविभागे विषयशब्दः पारिभाषिको गृहीतः, तथैव सिद्धान्तेऽपि फलाव्याप्यत्वमवेद्यत्वमिति न दोषलेशोऽपि ।

न च उक्तलक्षणस्यातीतानागतघटादिषु अतिव्याप्तिः, अपरोक्ष व्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वस्य विवक्षितत्वादिति वाच्यम्, अवेद्यत्वेनापि तदत्यन्ताभावानधिकरणत्वस्य विवक्षितत्वात् । नहि अवेद्यो घटोऽस्ति अभूत् भविष्यति वेति दिक् ।

॥ इति स्वप्रकाशोत्तरपक्षः ॥

१ न्या० सू० १।१।९ ।

## अथ स्वप्रकाशे प्रमाणनिरूपणे पूर्वपक्षः

'नापि प्रमाणमिति मूलम्[१] प्रमाणबलात् स्वप्रकाशत्वे सिद्धे तदनुगुणं किञ्चिल्लक्षणमपि भविष्यति[२] ।

अयम्भावः—प्रमाणैर्हि वस्तुनि सिद्धे सति लक्षणेन स्वरूपनिर्धारणमितरवृत्त्या क्रियते। यथोक्तं काव्यप्रकाशे प्रथमपरिच्छेदे न हि स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धातु गौरिति। गोरूपव्यक्तौ चक्षुषा गृह्यमाणायामपि गोत्वादिजातिलक्षणज्ञानाभावाद् गौरेवेति विशेषतो ज्ञानं न जायते। निर्ज्ञातगोत्वसम्बन्धाच्च गौरिति विशेषनिर्णयो जायते। एवञ्च प्रमाणेन सामान्यतो वस्तुसत्ता सिध्यति, लक्षणेन तु विशेषनिर्णय इत्युभयमपेक्षते। अत एव प्रत्यक्षेऽपि अद्भुतवस्तुनि लक्षणज्ञानाभावात् किमिदमिति जिज्ञासोदयः। प्रकृते चैकादशकोटिकल्पस्य स्वयं प्रकाशलक्षणस्य खण्डनं कृत्वा प्रमाणमपि खण्ड्यते, अन्यथा प्रमाणेन वस्तुसिद्धौ पश्चाल्लक्षणमपि किञ्चिद् भविष्यत्येवेति।

तत्रानुमानम्—अनुभूतिरनुभूतिव्यवहारहेतुप्रकाशो अनुभूतित्वाद् यन्नैवम्, तन्नैवम्, यथा घटः। अत्र साध्यदले व्यवहारहेतुप्रकाश इत्येवोक्तौ सिद्धसाधनता। व्यवहारहेतुत्वस्य प्रकाशत्वस्य च अन्यैरपि अनुभूतौ स्वीकारात्। अतोऽनुभूतिग्रहणम्।

अत्र नयनप्रसादिनी "न चाप्रसिद्धविशेषणता, अनुभूतिव्यवहारस्योभयसिद्धतया तद्हेतुभूतप्रकाशस्यापि सम्मतत्वात्। केवलं व्यतिरेकाव्यतिरेकयोर्विप्रतिपत्तेः। तथा चानुभूतिव्यवहारहेतुत्वाप्रसिद्धिरलङ्कार एव[३]"।

अयम्भावः—अप्रसिद्धविशेषणता नाम साध्याप्रसिद्धिः। साध्यमत्र अनुभूतिव्यवहारहेतुभूतप्रकाशत्वम्। तत्र भागद्वयम्—अनुभूतिव्यवहारहेतुत्वं प्रकाशत्वञ्चेति। अनुभूतिरनुभूतिरित्यादिव्यवहारो घटविषयकानुभूतिव्यवहारो घटं जानामीत्यादिरूपो वा प्रसिद्ध एव सर्वमते, तथैव तादृशव्यवहारहेतुभूतप्रकाशस्यापि परमते प्रसिद्धत्वमस्त्येव, ज्ञानेनैव व्यवहारसम्भवात्। नाप्रसिद्धविशेषणता साध्यस्य प्रसिद्धेः।

---

१. पृ० १०; २. नयनप्र० पृ० १०; ३. न० प्र० पृ० १०।

ननु साध्यं प्रसिद्धं तदा सिद्धसाधनता अप्रसिद्धश्चेत् साध्याप्रसिद्धिरिति उभयतः पाशारज्जुरिति चेत्, न, क्वचित्तेन लिङ्गेन साध्यं प्रसिद्धमित्यर्थात्। यथा धूमेन हेतुना महानसादौ वह्निः सिद्धः। न हि एतावता पर्वते वह्नौ साध्ये सिद्धसाधनता पर्वतो अग्निमान् धूमादित्यादिनाऽनुमानेन अग्निना सह पर्वतसम्बन्धस्यैवानुमानगम्यत्वात्। धूमेन वह्निस्तु व्याप्तिबलेनैव ज्ञातः। एवं धूमस्यापि सिद्धत्वाद् अग्नेरपि अन्यत्र प्रसिद्धत्वाद् महीधरादिसम्बन्धो वह्नेः साध्य इति न सिद्धसाधनता। तथैव प्रकृतानुमानेऽपि अनुभूतिव्यवहारहेतुत्वस्यापि प्रसिद्धत्वात् प्रकाशस्यापि प्रसिद्धत्वान् नैयायिकैरुभयोर्व्यतिरेको भेदः स्वीक्रियते। एवञ्चानुभूतिव्यवहारहेतुप्रकाशयोर्भेद एव, न तु योऽनुभूतिव्यवहारहेतुः, स एव प्रकाश इति। व्यवसायस्यानुव्यवसायगम्यत्वादत्रानुभूतिरेव स्वव्यवहारहेतुरूपप्रकाश इति न स्वीक्रियते। तथा च परमते विशकलितरूपेण साध्यदलप्रविष्टपदार्थद्वयस्य प्रसिद्धिरस्त्येव।

वेदान्तमते च तादृशप्रसिद्धयोरनुभूतिव्यवहारहेतुप्रकाशयोरव्यतिरेकः = अभेद एव। न हि वेदान्तिनोऽनुभूतिविषयकानुभूतिं काञ्चिदनुभवन्ति स्वीकुर्वन्ति च, अनुभूतेः स्वतःप्रकाशत्वात्। अन्यथानवस्थापातात्। प्रकाशत्वाभावे च जगदान्ध्यप्रसङ्गात्। अनुभूतिव्यवहारहेतुत्वाप्रसिद्धिरलङ्कार एव तस्यैवानुमानगम्यत्वात्। उक्तानुमाने अनुभूतिव्यवहारहेतुप्रकाशयोरभेद एव तत्प्रतिपाद्यः, तस्यापि सिद्धौ सिद्धसाधनता स्यात्।

ननु तर्हि वेदान्तमते अनुभूतिव्यवहारहेतुप्रकाशयोरभेदाध्यवसायात् तादृशसाध्यस्याप्रसिद्धया अप्रसिद्धविशेषणता स्यात् प्रसिद्धौ च केवलव्यतिरेकिता व्याकोप इति चेत्, न, अनुभूतिं पक्षीकृत्य तत्र स्वव्यवहारहेतुप्रकाशेनाभेद एवानुमानप्रतिपाद्यः। सर्वत्र च साध्यस्य प्रसिद्धिर्न तद्रूपेणैव; अपि तु विशकलितादिरूपेण। विशकलितादिरूपेण प्रसिद्धत्वाच्च न दोषः।

ननु केवलव्यतिरेकित्वव्याकोपात् तत्र साध्याप्रसिद्धिर्न दोषावहा। न चेष्टापत्तिः, तथा सति वसुधाशशविषाणोल्लिखिता वसुधात्वात्, यन्नैवम् तन्नैवमित्यादिना शशविषाणादेरपि सिद्धिप्रसङ्गाद् इति चेत्, अत्रोच्यते, हेतुस्तावत् त्रिविधः- केवलान्वयी, अन्वयव्यतिरेकी, केवलव्यतिरेको च। तत्र केवलान्वयिनि अन्वयव्यतिरेकिणि च सपक्षवति साध्यस्य प्रसिद्धत्वात् स्वरूपभङ्गापत्तिभिया अप्रसिद्धविशेषणतायाः शङ्कैव नास्ति। यदि केवलव्यतिरेकिण्यपि सा न स्यात्, तदा कुत्र दोषतां भजेत् ?

अतः केवलव्यतिरेकिणि स दोषो मन्तव्यः। तत्र च सपक्षाभावात् साध्याप्रसिद्धिः सर्वत्रैवेति तादृशानुमानमेव न स्यात्, दोषसद्भावात्। क्वचित् साध्यप्रसिद्धौ तु सपक्षत्वसिद्धया केवलव्यतिरेकिताभङ्ग इति विषमस्थितिः।

साध्याप्रसिद्धिर्नाम साध्यस्य अप्रसिद्धिः = प्रमाणसिद्धत्वाभावः। एवञ्च केवलव्यतिरेकिणि साध्यस्य केनचिदपि प्रमाणेन प्रमितिरवश्यं वाच्या। अन्यथा वसुधा शशविषाणलिखितेत्यादिस्थले शशविषाणलेखनादेः प्रमितत्वापत्तिः। अत्र च साध्यस्य प्रमितिः प्रमाणान्तरेण विशकलितरूपेणापि नास्ति। तथा च प्रमाणान्तरेण क्वचिदपि सिद्धस्यैव धर्मस्य धर्मिणि पर्वतादावनुमानेन तद्धर्मवत्ता बोध्यते-तथैव केवलव्यतिरेकिण्यपि।

नन्वेवमपि यत्रैव येनापि प्रमाणेन स धर्मः सिद्धः, स एव सपक्षस्तदा केवलव्यतिरेकित्वं कुत इति चेत्, न, साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः। एवञ्च साध्यतावच्छेदकाभाववत् साध्यकमनुमानं साध्याप्रसिद्धिदोषग्रस्तम्। वसुधाशशविषाणलिखितेत्यादावपि साध्यतावच्छेदकशशविषाणस्याप्रमितत्वाद् अप्रसिद्ध्या तदुल्लिखितत्वस्यापि अप्रसिद्धिः। अतः केवलव्यतिरेकिण्यपि साध्याप्रसिद्धिर्दोषः, स भवत्येव।

नन्वेवमपि साध्यतावच्छेदकस्यैव का नाम अप्रसिद्धिरिति चेत्, प्रमाणाभाव एव गृह्यताम्। न च तेनैवानुमानेन तदपि साध्यतामिति वाच्यम्, तेनैव तत् सिद्धेरभावान्न ह्यनुमानेन तत्पक्षो हेतुः साध्यस्तदवच्छेदको वा साध्यते; अपि तु सिद्धे धर्मिणि सिद्धेन हेतुना अन्यत्र सिद्धस्यैव साध्यस्य सम्बन्धः साध्यते, न तु साध्यं स्वरूपतः साध्यते। एवञ्च वसुधाशशविषाणलिखितेत्यादिस्थले तेनैवानुमानेन शशविषाणस्य सिद्धि र्न भवितुमर्हति। तेन वसुधाधर्मिकतल्लेखनमेव साध्यते। एवञ्च शशविषाणस्य प्रमाणान्तरेणासिद्धत्वात् उक्तदोषः स्यादेव। एवं प्रकृतेऽपि अनुभूतिरनुभूतिव्यवहारहेतुप्रकाशोऽनुभूतित्वादित्यादिना सिद्धस्यापि अनुभूतिव्यवहारहेतुप्रकाशस्यानुभूत्या सहाभेदः साध्यत इति नाप्रसिद्धविशेषणता। यथा पृथ्वीतरस्यो भिद्यते गन्धवत्त्वाद् इत्यादौ प्रसिद्धस्यापि इतरभेदस्य पृथिव्या सहाभिसम्बन्धः साध्यते। अतः साध्ये साध्यतावच्छेदकप्रमाणाभाव एव साध्याप्रसिद्धिः।

"मैवम्, घटादेरिव व्यावहारिकप्रमाणसिद्धवेद्यतापादने अपि स्वप्रकाशत्वासिद्धेरिति मूलम्।" "न हि घटादेरिवानुभूतेरपि वेद्यत्वं प्रत्यक्षादिप्रमाणसिद्धमिति मन्तुमुचितम्[1]।"

अयम्भावः—परैर्ज्ञानं वेद्यं वस्तुत्वाद् घटवदिति अनुमानेन प्रतिपक्ष उक्तः। तत्र सिद्धान्तिना साध्यमानवेद्यत्वस्य वास्तविकत्वे दृष्टान्तासिद्धिः, अवास्तविकत्वे व्यावहारिकत्वे वा सिद्धसाधनमिति प्रत्युक्ते मैवमित्यादिना प्रतिवादी समाधत्ते व्यावहारिकवेद्यतापादनेऽपि स्वप्रकाशविरोधः। एतदेव वादिसम्मतं नयनप्रसादिन्यामुपपादितम्।

१. न० प्र० पृ० १४।

अत्रेदमालोचनीयं यद् व्यावहारिक वेद्यतासत्त्वे स्वप्रकाशस्य हानिः कुतः ? अत्रेदमभिधीयते ज्ञाने व्यावहारिकवेद्यत्वस्य सत्त्वेऽपि स्वप्रकाशत्वहानिर्नेत्युच्यते यदि, तदा तुल्ययुक्त्या घटादेरपि व्यावहारिकवेद्यतया स्वप्रकाशत्वस्याविरोधात् स्वप्रकाशता स्यात् ।

किञ्चानुभूतेर्व्यावहारिकवेद्यत्वसिद्धिरेव कथं स्याद् यदि घटादेरिव प्रत्यक्षसिद्धैव वेद्यता, तदा वेद्यत्वाद् घटादिरिव जडा संवित् स्यात् । एवञ्च यथा न्यायमते वेद्यया अपि संविदा अर्थस्य प्रकाशनं जायते, तथा स्वमतेऽपि सम्भवति । तथा च तन्मते अप्रकाशमानसंविदो अर्थप्रकाशने यानि दूषणानि अनन्तरक्षणे संशयजिज्ञासोदयादीनि जगदान्ध्यप्रसङ्गादीनि, अनवस्थादीनि च, तानि सर्वाण्यपि स्वमते अपि आपतन्ति । अतो व्यावहारिकवेद्यत्वसाधनमपि न युक्तमिति भावः ।

न च यदि संविद् अप्रकाशमाना स्यात्, तदा घटादेस्तया प्रकाशो न स्याद् इति घटादिप्रतीरयन्यथानुपपत्त्या संविदः स्वप्रकाशत्वमभ्युपेयमिति वाच्यम्, संविदो घटादेरिव प्रत्यक्षसिद्धवेद्यतास्वीकारे तद्वद् अनभूतेरपि जडत्वाद् जडया जडस्य प्रकाशनायोगात् तादृशानुपपत्तिप्रदानायोगाद् व्यावहारिकवेद्यत्वस्वीकारे च घटादेरविशेषाद् अनुभूतेरपि जडत्वात् तयैवार्थप्रथनसिद्धो नैयायिकमतसाम्यात् तत् पक्षोक्तदूषणानि वेदान्तमतेऽपि सम्भवन्ति । न्यायमते च घटादेरिवानुभूते र्न वेद्यता, तथा हि भासकत्वासमानाधिकरणवेद्यत्वं घटादेः, अनुभूतेस्तु भासकत्वसमानाधिकरणं वेद्यत्वम् । घटो न प्रकाशते प्रकाश्यते, अनुभूतिस्तु घटादिकं प्रकाशते, स्वयं चानुव्यवसायेन प्रकाश्यत इत्यनुभवात् ।

घटादेरिव वेद्यतास्वीकारे वेदान्तमते घटानुभूत्योरुभयोरपि न कश्चिद् भेद इति अनुभूतेरपि जडत्वापत्तिः स्यात्, घटादेर्वा स्वप्रकाशत्वापत्तिः स्यात् । अतो व्यावहारिकवेद्यत्वमनुभूतेरयुक्तमेवेति पूर्वपक्षस्याशयः ।

सिद्धान्ते तु घटादेरिवानुभूतेर्नास्ति वेद्यता । घटादेः फलव्याप्यत्वमनुभूतेस्तु वृत्तिव्याप्यत्वम् । वृत्तिव्याप्यत्वस्वीकारे च न तत्र स्वप्रकाशताहानिः । फलव्याप्यत्वरूपवेद्यत्वस्वीकारे चोक्तदूषणानि स्युरिति भावः ।

॥ इति स्वप्रकाशे प्रमाणनिरूपणे पूर्वपक्षः ॥

●

# अथ स्वप्रकाशे प्रमाणनिरूपणे उत्तरपक्षः

"अन्ततः स्वस्मिन्नेवाभावाद् आत्माश्रय प्रसङ्गात्[1]"।

अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वरूपस्वयंप्रकाशलक्षणस्य सम्भवेऽपि अनुभूतौ धर्मिणि तत् साधनाय प्रमाणं वक्तव्यम्। तत्र "न[2] हि द्रष्टुर्दृष्टेर्विपरिलोपो दृश्यते[3]", "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादि श्रुतिप्रमाणस्य सत्वेन ज्ञानात्मनोरभेदस्य सिद्धत्वाद् ज्ञानस्यापि स्वप्रकाशत्वं सिद्धमेव; तथापि श्रुत्यर्थे विवदमानान् प्रति श्रुत्यर्थमेवानुमानेनानुसन्धत्ते। तथा हि अनुभूतिः स्वयंप्रकाशा, अनुभूतित्वात् यन्नैवम्, तन्नैवम्, यथा घट इति केवलव्यतिरेक्यनुमानम्।

ननु अत्रानुमाने स्वप्रकाशत्वं साध्यम्। तच्चावेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वरूपमुक्तमेव। तत् प्रसिद्धमप्रसिद्ध वेति। आद्ये सिद्धसाधनता केवलव्यतिरेकित्वव्याकोपश्च। द्वितीये अप्रसिद्धविशेषणतेत्युभयथा दोषः।

न चापरोक्षव्यवहारयोग्यत्वांशस्य प्रसिद्धत्वाद् नायं दोष इति वाच्यम्, अवेद्यत्वांशस्याप्रसिद्धत्वाद् विशेषणाभावप्रयुक्तविशिष्टाभावात्। वेद्यत्वस्य च केवलान्वयित्वाद् अवेद्यत्वस्याभावात्। न चावेद्यत्वशब्देन फलाव्याप्यत्वमस्माभिः स्वीकृतमिति वाच्यम्, तादृशस्यावेद्यत्वस्य खपुष्पायमाणत्वात्। प्रसिद्धावपि पूर्वोक्तदोषाणां तादवस्थ्याद् इति चेत्, न, प्रसिद्धत्वाप्रसिद्धत्वयोरुभयोः पक्षयोर्दोषसद्भावा( स एव पन्था आश्रयितव्यो येन सिद्धसाधनता, केवलव्यतिरेकिताव्याकोपः, अप्रसिद्धविशेषणतेति दोषत्रयस्य निरासः स्यात्। स च पन्थाः सामान्यतः साध्यस्य प्रसिद्धिरेव। सामान्यतः साध्यप्रसिद्धिश्च अनिर्धारितधर्मिविशेषतया भवति। एवञ्च सामान्यतः धर्मप्रसिद्धौ न सिद्धसाधनता, विशेषधर्मिणि तस्य साध्यमानत्वात्, नाप्यप्रसिद्धविशेषणता तस्योक्तरूपेण प्रसिद्धत्वात्, न च केवलव्यतिरेकिताभङ्गो विशेषे साध्यमानत्वाद् इति।

तथा चावेद्यत्वप्रसिद्धौ अनुमानप्रयोगः। वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात्, शुक्लतावत्।

ननु धर्मत्वमस्तु किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं मास्तु इति विपक्षे बाधकस्तर्कः कः? यथा पर्वतो वह्निमान् धूमादित्यत्र विपक्षे यदि धूमो वह्निव्यभिचारी स्यात्, वह्निजन्यो न स्यादिति बाधकस्तर्कः, मन्यते च परैरभिधेयत्वादिषु धर्मत्वमत्यन्ताभावप्रतियोगित्वाभावञ्चेति न च कश्चिद् दोषो भवतीति चेत्, उच्यते,

---

१. न० प्र० पृ० २२; २. बृ० ४।३।३०; ३. बृ० ४।३।६।

एवं हि वादी प्रष्टव्यो वेद्यत्वे वेद्यत्वमस्ति न वेति। नाद्यः, आत्माश्रयात्। नास्ति चेत् तन्निष्ठात्यन्ताभावप्रतियोगित्वमेवागतम्। एवञ्च वेद्यत्वे यदि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं न स्यात्, तदा तत् स्वस्मिन्नपि स्यात्, तथा चात्माश्रयदोषः स्यात्। अन्यथा तद्दोषस्य दत्तजलाञ्जलित्वापत्तिः स्यादिति विपक्षे बाधकस्तर्कः।

अथवा वेद्यत्वं यदि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि न स्यात्, तदानुभूतावपि स्यात्, तथा चानवस्थादिप्रसक्तिरिति विपक्षे बाधकस्तर्कः।

तथा चोक्तं मूले तत्रैव—'यद्विपर्ययः असमीहितप्रसक्तिस्तत् क्वचिन्मानयोग्यमिति सामान्यव्याप्तिः'[1] प्रकृते प्रयोगः, वेद्यत्वमनुभवनिष्ठप्रामाणिकात्यन्ताभावप्रतियोगितर्कादिबाधितत्वात्, यदेवम्, तदेवम्, यथा शुक्तिरजतादि। एवञ्चानेन अनवस्थारूपविपक्षबाधकतर्केण सामान्यतो वेद्यत्वाभावे प्रमाणे सत्यपि विशेषप्रमाणजिज्ञासायामुक्तव्यतिरेकानुमानप्रमाणस्योपन्यास इति नाप्रसिद्धविशेषणता।

अत एव नैयायिकैरपि इच्छादीनाम् अष्टद्रव्यव्यतिरिक्तद्रव्याश्रयता साध्यते। तथा हि, इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रयास्तेष्वनुपपद्यमानत्वे सति गुणत्वात्, यन्नैवम्, तन्नैवम्, यथा गन्धादिरिति।

उक्तञ्च नयनप्रसादिन्याम्—'तथा हि इच्छादयो गुणा अनित्यत्वे सति अस्मदादेरचाक्षुषप्रत्यक्षत्वाद् गन्धवदित्यादिना गुणत्वे स्थिते गुणत्वापरजातिमत्तया नियतैकद्रव्यव्यवच्छेदकतया च विशेषगुणत्वे सिद्धे सतीच्छादयः क्वचिदाश्रिता गुणत्वाद् रूपादिवदिति सामान्यतो दृष्टानुमानेन अनिर्धारिते कस्मिंश्चिदाश्रये सिद्धे, न तावत् स्पर्शवद्विशेषगुणा अप्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्। नापि दिक्कालमनसां विशेषगुणत्वादित्यादिना अष्टद्रव्याश्रयत्वानुपपत्तौ सिद्धायामाच्छादयः अष्टद्रव्यव्यतिरिक्तद्रव्याश्रिताः, तेष्वनुपपद्यमानत्वे सति गुणत्वात्, यन्नैवम्, तन्नैवम्, यथा गन्धादिरिति केवलव्यतिरेकिणैव सिद्धिः'[2]।

ननु नयनप्रसादिन्यामिच्छादीनां गुणत्वोपपत्तौ अनित्यत्वे सत्यस्मदाद्यचाक्षुषप्रत्यक्षत्वादिति अनुमानमुपात्तम्। इदञ्च कार्यवायौ व्यभिचरितम्। वायोः कार्यस्यानित्यत्वाद् अचाक्षुषत्वाच्चेति। किञ्च यदि अनित्यत्वविशिष्टास्मादाद्यचाक्षुषप्रत्यक्षत्वं गुणलक्षणञ्चेद् रूपादावव्याप्तिः। किञ्च द्व्यणुके परमाणुक्रियायाञ्च व्यभिचार इति चेत्, न, इच्छादयो गुणाः, द्रव्यकर्मान्यत्वसमानाधिकरणसत्तावत्त्वाद् यदेवं तदेवं यथा गन्धादीति अनुमानाकारे उक्तस्य तात्पर्यम्। एवञ्चोक्तस्थलेषु न दोषः। अथवा कार्यवायुद्व्यणुकपरमाणुक्रियाभिन्नत्वे सतीति हेतौ देयम्।

१. चि० पृ० २२; २. चि० पृ० २३।

वस्तुततोऽचाक्षुषत्वादित्यस्य स्पर्शरहितत्वादित्यर्थः, तेन न क्वापि दोषः। न रूपादावव्याप्तिः। अत एव गुणलक्षणखण्डनावसरे 'तत्त्वप्रदीपिकायां सामान्यवान् स्पर्शरहितो द्रव्याश्रयः कर्मातिरिक्तो गुणः इत्यपि न[1]" इति प्रतीके तत्रैव नयनप्रसादिन्यामुक्तम्—"कर्मातिरिक्त इत्युक्ते द्रव्येऽतिव्याप्तिस्तदर्थं द्रव्याश्रय इत्युक्तम्। तथापि कार्यद्रव्यव्यावृत्तिस्तदर्थं स्पर्शरहित इत्युक्तमिति[1]।"

अथवा अचाक्षुषप्रत्यक्षत्वादित्यस्यायमर्थः। न चाक्षुषमचाक्षुषम्, यज्ज्ञानं घ्राणजादिप्रत्यक्षं तद् विषयत्वात्। चाक्षुषातिरिक्तप्रत्यक्षविषयत्वादित्यर्थः। एवञ्च वायोरप्रत्यक्षत्वात् चाक्षुषातिरिक्तप्रत्यक्षविषयत्वं नास्त्येवेति न व्यभिचारः। चाक्षुषातिरिक्तज्ञानविषयत्वादित्युक्तौ तु व्यभिचारस्तदवस्थ एव। अप्रत्यक्षविषयत्वादित्युक्तौ तु गन्धादिदृष्टान्ते हेतोरसिद्धिः। नन्वेवमपि घटादौ व्यभिचारः, तस्याप्यनित्यत्वात् चाक्षुषातिरिक्तस्पर्शप्रत्यक्षविषयत्वाद् इति चेत्, न, चाक्षुषातिरिक्तप्रत्यक्षमात्रविषयत्वादित्यस्य विवक्षितत्वात्। एवञ्च घटादेः स्पार्शनप्रत्यक्षविषयत्वेऽपि चाक्षुषप्रत्यक्षस्यापि विषयत्वान्न व्यभिचार इति दिक्।

॥ इति स्वप्रकाशप्रमाणनिरूपणे उत्तरपक्षः ॥

---

१. तत्त्वप्र० ३०६।

# अथ महाविद्यानुमानेन साध्याप्रसिद्धिवारणम्

केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानबलाद् अन्वयव्यतिरेकिसाध्यविशेषं वाद्यभिमतं साधयन् महाविद्येति उच्यते, तस्य च महाविद्यात्वमसिद्धयादिसकलदोषरहितत्वम्। महत्त्वञ्च अल्पेन महार्थसाधकत्वम्। अत्र चानुभूतेरवेद्यत्वप्रसिद्धौ महाविद्यानुमानमुपन्यस्तं मूले। अयं घट एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात् पटवत्। नयनप्रसादिन्याञ्चान्यदपि प्रदर्शितम्। तथा हि वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगिवृत्तिधर्माधिकरणं मेयत्वादिति। तत्र प्रथमं मूलोक्तानुमाने मीमांसापेक्षिता। तथा हि दृष्टान्ते घटे एतद्घटान्यत्वविशिष्टवेद्यत्वाधिकरणत्वमस्तीति एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणभेदरूपसाध्यं गतम्। एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं एतद्घटस्तस्य भेदः पट इति दृष्टान्ते समन्वयः। पक्षे च वेद्यत्वाधिकरणत्वेऽपि एतद्घटान्यत्वविशिष्टवेद्यत्वस्यानधिकरणत्वमेवास्तीति तद्भेदो नास्ति। अतस्तत् समन्वयाय अकामेनापि एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणः कश्चित् पदार्थः स्वीकर्त्तव्यो यद्भेद एतद्घटे पक्षे समागच्छेदिति सिद्धमवेद्यत्वम्। एवञ्च महाविद्यानुमानसाध्यस्य पक्षसमन्वयान्यथानुपपत्त्या सिद्धं नः समीहितम्।

अथ पदकृत्यम्—घट एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्य इत्युक्ते सति घटान्तरमपि एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणान्यः स्यादित्यर्थान्तरतापत्तिः, अतो अयमिति पदम्। तथा च एतत् पदेन अयमिति निर्दिष्ट एव घटो ग्राह्यो न घटान्तरमिति अर्थान्तरानवकाशः। विशेषधर्मिनिर्धारणाय सिद्धसाधनतापरिहाराय च घट इत्युक्तम्। तथा हि केवलमयमित्युक्ते सति मठादेरपि एतत् पदेन ग्रहणात् तत्र पक्षे दृष्टान्ते च पटे साध्यसिद्धौ सिद्धसाधनता स्यात्। घट इत्युक्तौ चैतस्मिन् घट एव एतद् घटान्यत्वविशिष्टवेद्यत्वानधिकरणभेदः साध्यत इति न दोषः। एतस्य घटस्य वेद्यत्वाधिकरणत्वेऽपि एतद्घटान्यत्वविशिष्टवेद्यत्वाभावात्। अतोऽयं घट इत्युक्तम्।

घटान्यत्वे सति वेद्यत्वानधिकरणान्य इत्युक्ते एतदिति पदाभावे सति सिद्धसाधनं स्यात्। तथा हि एतदिति पदाभावे घटत्वावच्छिन्नान्यत्वविशिष्टवेद्यत्वानधिकरणभेदः साध्यः स्यात्, तथा च सर्वघटेषु य एवायमिति पदेन परामृष्टः, तत्र सिद्धसाधनता स्यात्। अत एतदिति पदम्। तेन चैतद् घटव्यक्तिरेव ग्रहीतुं शक्यते, न घटमात्रमिति बोध्यम्। एतस्य घटस्य वेद्यत्वाधिकरणत्वेऽपि स्वान्यत्व-

विशिष्टवेद्यत्वानधिकरणत्वान्न सिद्धसाधनता। साध्यकोटावपि घटपदं सिद्धसाधनताव्यावृत्त्यर्थमेव। अयं घटो वेद्यत्वानधिकरणान्य इत्युक्ते एतद्घटान्यत्वाभावे चाप्रसिद्धविशेषणता स्यात्। अस्मादनुमानात् पूर्वमद्यावधि अवेद्यत्वस्याप्रसिद्धेः। अनेनैव प्रसिद्धौ च अन्योन्याश्रयः स्यात्। एतद्घटान्यत्वपददाने तु तद्विशिष्टवेद्यत्वस्य पटादौ प्रसिद्धिरस्त्येवेति न दोषः।

अयं घट एतद्घटान्यत्वानधिकरणान्य इत्युक्ते वेद्यत्वपदाभावे च बाधः स्यात्। अयं घट एतद्घटान्यत्वाधिकरणं यदि स्यात्, तदा अयं घटो न स्यात्। ननु अयं घट एतद्घटान्यत्वविशिष्टवेद्यत्वाधिकरणः पदार्थत्वात् पटवदिति इत्येवोच्यताम्, किं वेद्यत्वानधिकरणान्येत्यनेनेति चेत्, न, बाधात्। तथा हि एतस्मिन्नेव घटे एतद्घटान्यत्वविशिष्टवेद्यत्वाधिकरणत्वायोगात्। न च वेद्यत्वानधिकरणान्य इत्युक्ते अपि बाधः कथं नेति वाच्यम्, तत्र तादृशवेद्यत्वानधिकरणभेदस्य साध्यत्वात्। तथा च अन्यत्र तादृशवेद्यत्वानधिकरणत्वमन्यथानुपपत्त्या प्रसाध्य तद्भेदः पक्षे साधयितुं शक्यते। तादृशवेद्यत्वाधिकरण इत्युक्ते च न तथा कर्तुं शक्यते। तादृशवेद्यत्वाधिकरणस्य पटादौ सिद्धत्वात् पक्षे च बाधादिति बाधदोषो दुरुद्धरः स्यादिति भङ्गिमयोक्तम्—वेद्यत्वानधिकरणान्य इति।

किञ्चावेद्यत्वप्रसिद्धये चानुमानप्रयोगः, तथोक्तौ च नावेद्यत्वस्य प्रसिद्धिः स्यात्। ननु कथं पदार्थत्वरूपकेवलान्वयिना हेतुना तत् साध्यते एतद् घट एव पदार्थत्वस्य सत्त्वात्। उक्तसाध्यस्य चाभावादिति चेत्, न, तद्दोषनिर्वर्हणायैव अवेद्यत्वस्य प्रसिद्धिः क्रियते।

नन्वेवं स्थिते अन्यत्रैतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणस्य प्रसिद्धिः मन्यताम्, बाधदोषाद् अनुमानमेव निरस्यताम् इति कुतो नानुमानमेव दुष्टं मन्यते। नास्ति चावेद्यत्वं क्वापि प्रसिद्धम्ः, वेद्यत्वस्य केवलान्वयित्वाद्।

किञ्चानेनानुमानेन नावेद्यत्वं साध्यते; अपि तु तस्य प्रसिद्धिः क्रियते। एवञ्च प्रसिद्धौ सत्यामनुमानं प्रसक्तं स्यात्, प्रसक्ते चानुमाने प्रसिद्धिरित्यन्योन्याश्रयं इति चेत्, अत्रोच्यते, अनेनानुमानेन एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणस्य सामान्यतः प्रसिद्धिः क्रियते। विशेषेण चानुमानेन पूर्वोक्तेनानुभूतौ अवेद्यत्वं साध्यत एवेति बाधानवकाशः। सामान्यतोऽवेद्यत्वस्य प्रसिद्धिरस्तीति विशेषतश्चानुमानेनावेद्यत्वसिद्धौ वेद्यत्वानधिकरणत्वाभावात् तदन्यत्वस्यापि पक्षे अभावाद् बाधानवकाशः। अवेद्यत्वस्यानवस्थान्यथानुपपत्त्या अनुभूत्यादौ प्रसिद्धत्वात्।

वेद्यत्वं क्वचिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् शौक्ल्यवदिति पूर्वोक्तानुमानेन सामान्यतो वेद्यत्वानधिकरणस्य प्रसिद्धत्वात् तद्भेदस्य चैतस्मिन्

घटे सत्त्वात् कुतो बाधः। अत एव नान्योन्याश्रयोऽन्यतोऽनुमानेन। वेद्यत्वस्य प्रसिद्धत्वात्।

किञ्चानुमानकाल एव साध्यकोटिविमर्शे अवेद्यत्वस्य प्रसिद्धिं कृत्वाऽनुमानं प्रवर्तत इति नान्योन्याश्रय इति।

ननु अयं घटः एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात् पटवदिति महाविद्यानुमाने 'अयं घटः' एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यत्वानधिकरणः पदार्थत्वादिति सत्प्रतिपक्षः। पूर्वानुमानेन एतद्घटे एवैतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणभेदाधिकरणत्वं साध्यते। द्वितीयेन च तत्रैव एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणभेदानधिकरणत्वमिति विरुद्धसाध्यकानुमानाद् युक्तैव सत्प्रतिपक्षता। न च सत्प्रतिपक्षानुमाने दृष्टान्तासिद्धिः पटादौ व्यभिचारश्चेति। तथाहि पटादौ पदार्थत्वरूपहेतुसद्भावेऽपि एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणभेदस्यैव सत्त्वात्। एवञ्चैतद्घटातिरिक्ते क्वापि साध्यस्याभावाद् दृष्टान्तासिद्धिरपि बोध्येति वाच्यम्, पदार्थत्वादित्यस्यैतद्घटत्वादित्यर्थात्। अनुमानस्य च केवलव्यतिरेकित्वाद् न व्यभिचारादिदोष इति चेत्, न, श्रुत्या अनवस्थादोषाच्च अनुभूतेरवेद्यत्वावगमस्यानुकूलतर्कसद्भावात् सत्प्रतिपक्षस्य हीनबलत्वात्।

द्वितीयञ्च महाविद्यानुमानं तत्रैवनयनप्रसादिन्यामुक्तम् तदपि विवेचनीयं भवति। तथा हि वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगिवृत्तिधर्माधिकरणं मेयत्वाद् घटादिवदिति अनुमानम्। अत्र स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वानधिकरणो योऽत्यन्ताभावप्रतियोगिवृत्तिधर्मस्तदधिकरणत्वं साध्यम्। स्वं वेद्यत्वम्, वृत्तित्वमाधेयत्वम्। दृष्टान्ते घटे समन्वश्चेत्थम्। अत्यन्ताभावप्रतियोगी घटस्तद्वृत्तिधर्मो घटत्वं तदधिकरणं घटो घटत्वधर्मे च स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वानधिकरणताप्यस्त्येव। तथा हि स्वं वेद्यत्वं तन्निरूपितवृत्तित्वमाधेयत्वं घटत्वे नास्ति, वेद्यत्वे घटत्वस्याभावात्। अपि तु घटत्वनिरूपिताधेयतानधिकरणत्वमेवास्ति। एवं स्वं वेद्यत्वम्, तदितरो घटादिस्तन्निरूपिताधेयताधिकरणता यद्यपि घटत्वे वर्तते; तथापि स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वाधिकरणताया विशिष्टाया विशेषणाभावप्रयुक्तविशिष्टाभावविधया अभावात् स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वानधिकरणः। अत्यन्ताभावप्रतियोगिवृत्तिधर्मश्च घटत्वं तदधिकरणता घट इति दृष्टान्ते समन्वयः।

पक्षे च घटत्वधर्ममादाय न समन्वयः; अपितु वेद्यत्वत्वधर्ममादाय। तथाहि स्वं वेद्यत्वम्, तन्निरूपिताधेयत्वस्य वेद्यत्वत्वे सत्त्वेऽपि स्वं वेद्यत्वं तदितरो घटत्वादिस्तन्निरूपिताधेयत्वस्य वेद्यत्वत्वे असत्वाद् विशेष्याभावप्रयुक्तविशिष्टाभावविधया स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वाधिकरणताया विशिष्टाया वेद्यत्वत्वे असत्वात्

तादृशो धर्मो वेद्यत्वत्वम्। स च धर्मोऽत्यन्ताभावप्रतियोगिवृत्तिर्नास्ति, वेद्यत्वस्याभावाभावात् तस्य केवलान्वयित्वात्। यदि च वेद्यत्वस्य क्वचिदपि अभावः स्यात्, तदा वेद्यत्वत्वमत्यन्ताभावप्रतियोगिवृत्तिधर्मः स्यात्। अतस्तदर्थं पक्षसमन्वयाय वेद्यत्वाधिकरणताभावः क्वचिदप्यवश्यं स्वीकर्तव्यो यत् प्रतियोगिवेद्यत्वं स्यात् तद्वृत्तिधर्मत्वञ्च वेद्यत्वत्वे समागच्छेत्। एवमवेद्यत्वस्य प्रसिद्धिः।

अथ पदकृत्यम्—अत्रानुमाने वेद्यत्वे तावद् धर्माधिकरणत्वमनुमेयम्। धर्मे च विशेषणद्वयमुपात्तम्, स्ववृत्तित्वविशिष्टस्वेतरवृत्तित्वानधिकरणत्वमत्यन्ताभावप्रतियोगिवृत्तित्वञ्चेति। पूर्वविशेषे स्वेतरवृत्तित्वानधिकरणता स्ववृत्तित्वविशिष्टा ग्राह्या, वैशिष्ट्यञ्च सामानाधिकरण्येन।

तत्र स्ववृत्तित्वविशेणाभावे दृष्टान्ते समन्वयो न स्यात्। घटत्वे स्वेतरघटनिरूपिताधेयतानधिकरणत्वाभावात्। स्वेतरवृत्तित्वविशेषणाभावे च स्ववृत्तित्वानधिकरणप्रतियोगिवृत्तिधर्माधिकरणत्वमित्येव साध्यं स्यात्। तथा च पक्षे साध्यसमन्वयो न स्यात्। तथाहि वेद्यत्वत्वे स्वनिरूपिताधेयताधिकरणतैवास्तीति विशिष्टैवानधिकरणता वाच्या, पृथक् पृथग् अनधिकरणतापेक्षायाञ्च पक्षे दृष्टान्ते च क्वापि समन्वयो न स्यात्। पक्षे वेद्यत्वे प्रथमभागस्याभावाद् दृष्टान्ते घटे च द्वितीयभागस्यासत्वादिति बोध्यम्। स्वस्वेतरवृत्तिरित्यत्र स्वञ्च स्वेतरञ्चेति द्वन्द्वे द्वन्द्वान्ते श्रूयमाणस्य वृत्तिपदस्योभयत्रान्वयः। अत्यन्ताभावप्रतियोगिवृत्तित्वञ्च धर्मे विशेषम्, तदभावे स्वस्वेतरवृत्तित्वानधिकरणो यो धर्मः, तदधिकरणत्वं साध्यं स्यात्, तथा च वेद्यत्वत्वादिधर्ममादाय अर्थान्तरता स्यात्, तत् सत्वे तु तद्धर्मस्यात्यन्ताभावप्रतियोगिवृत्तित्वाभावाद् न दोषावकाशः।

नन्वभावप्रतियोगीत्येवोच्यताम्, अत्यन्ताभावनिवेशस्य किं फलमिति चेत्, न, अन्योन्याभावस्यापि ग्रहणप्रसङ्गात् तद्ग्रहणे च वेद्यत्वं न घट इत्यभावीयप्रतियोगिवेद्यत्वं भवत्येव। तद्वृत्तिधर्मो वेद्यत्वत्वमिति अर्थान्तरतापत्तिः। अवेद्यत्वप्रसिद्धिश्च न स्यात्। अत्यन्ताभावग्रहणे च वेद्यत्वस्य केवलान्वयित्वात् तत्राप्यन्ताभावप्रतियोगिता आपन्ना सती साध्यसमन्वयाय वेद्यत्वानधिकरणतां क्वचित् प्रसाध्य पर्यवसन्ना भवति।

स्वस्वेतरवृत्तित्वानधिकरणत्वानिवेशे च घटत्वधर्ममादाय बाधः स्यात्, तस्य पक्षेऽसत्वात्। न चावेद्यत्वस्य धर्ममादाय पक्षे घटत्वमादाय च दृष्टान्ते समन्वये कुतो बाधः? तथाहि घटे अत्यन्ताभावप्रतियोगिवृत्तिधर्मघटत्वाधिकरणत्वमस्त्येवेति समन्वयः। पक्षे च वेद्यत्वत्वमादाय अवेद्यत्वप्रसिद्ध्या समन्वय इति वाच्यम् केवलमत्यन्ताभावप्रतियोगिवृत्तित्वमात्रग्रहणे वेद्यत्वत्वस्य ग्रहीतुमशक्यत्वात्। तस्यात्यन्ताभावप्रतियोगिवृत्तित्वाभावात्। वेद्यत्वस्य केवलान्वयित्वात्। स्वस्वेतरवृत्तित्वग्रहणे च वेद्यत्वत्वं ग्रहीतुं शक्येत।

न च स्वस्वेतरवृत्तित्वानधिकरणत्वे अपि वेद्यत्वस्यात्यन्ताभावप्रतियोगिवृत्तित्वात् कथं तस्य ग्रहणमिति वाच्यम्, साध्यस्य प्रथमांशेन वेद्यत्वत्वस्य ग्रहणे द्वितीयांशेन तद्ग्रहणान्यथानुपपत्त्या वेद्यत्वस्यात्यन्ताभावः क्वचित् सिद्ध इत्युपक्षेपाद् लक्षणसमन्वयादिति पदकृत्यम्।

एवञ्च अनुभूतिः स्वयंप्रकाशा, अनुभूतित्वादित्यत्र नाप्रसिद्धविशेषणत्वापत्तिर्दोषः। अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वस्य साध्यस्योक्तरीत्या प्रसिद्धत्वात्। अत्रावेद्यत्वघटकवेद्यत्वं फलव्याप्यत्वमिति पूर्वमेवोक्तम्।

यदा च स्वप्रकाशशब्देन चिदविषयत्वं गृह्यते, तदा वेद्यत्वं चिद्विषयत्वमेव बोध्यम्। तच्च ब्रह्मणि नास्ति, घटादौ चास्तीति न बाधादिदोषः।

॥ इति साध्याप्रसिद्धिदोषनिरासः॥



# अथानुमाने हेत्वसिद्धिनिरासः

"ननु किमिदमनुभूतित्वं नाम[1]"?

अयं भावः—साध्याप्रसिद्धिर्दोषस्तावत् परिहृतः। इदानीं विशेष्याप्रसिद्धिमाशङ्क्य निवार्यते। तत्र अनुभूतिः स्वयं प्रकाशा अनुभूतित्वाद् इति अनुमाने पक्षकोटिप्रविष्टाया अनुभूतेः वादिप्रतिवादिनोः प्रसिद्धत्वात् सामान्यतो न विशेष्याप्रसिद्धिः। इदानीं हेतुविचारः प्रक्रान्तः। तथा हि किमिदमनुभूतित्वं नामेति? जातिरुपाधिर्वा। नाद्यः, सिद्धान्ते अनुभूतेरात्मत्वाद् एकत्वाङ्गीकाराद् व्यक्तेरभेदाज्जातित्वप्रतिबन्धात्। तथा चोक्तं द्रव्यकिरणावल्यामुदयनाचार्यैः—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥

अस्यायमभिप्रायः—व्यक्तेः स्वाश्रयस्याभेदो भेदाभावः। स्वाश्रयव्यक्तेरैक्यमित्यर्थः।

तत्राश्रये एकत्वञ्च सजातीयद्वितीयराहित्यम्। तच्च स्वजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपम्। साजात्यञ्च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्वरूपेण। समन्वयश्चेत्थम्—आकाशमस्ति इत्यादि प्रयोगे आकाशोत्तरैकवचनस्योक्तार्थः। तथा च स्वं तिङ्, तत्समभिव्याहृतपदार्थः सत्ता, तत् संसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकञ्चाकाशत्वम्, तद्वत्त्वम् आकाशे, इति स्वसजातीय आकाश एव, नान्यः। अतस्तन्निष्ठभेदीयप्रतियोगी घटादिः, न तु आकाश एव, तत्प्रतियोगितावच्छेदकं घटादिनिष्ठैकत्वादिकम्, अनवच्छेदकञ्चाकाशगतैकत्वमिति समन्वयः। एवमेवात्र घटोऽस्ति, पशुना यजेतेत्यादावपि समन्वयः कार्यः, कृतश्चान्यत्र इतीह न कृतः।

अथवा व्यक्तेरभेद इत्यस्य आश्रयनिष्ठभेदाभाव इत्यर्थः। भेदपदेन स्वाश्रयप्रतियोगिकभेदस्य विवक्षितत्वात्। तथा च स्वाश्रयनिष्ठस्वाश्रयप्रतियोगिभेदाभाव एव स्वनिष्ठजातित्वे बाधकमिति। न च आकाशत्वाश्रयेऽपि आकाशघटोभयं नेति उभयाभावमादाय स्वाश्रयेऽपि स्वाश्रयभेदसत्वात् कुतो जातिबाधकतेति वाच्यम्, स्वाश्रयनिष्ठप्रतियोगिताया व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन विशेषणीयत्वात्। तथा च स्वाश्रयनिष्ठो व्यासज्यवृत्तिधर्मानवच्छिन्नस्वाश्रयनिष्ठप्रतियोगि-

ताकभेदसामान्याभावः स्वनिष्ठजातित्वे बाधकम्। व्यासज्यवृत्तिधर्मश्चात्रोभयत्वादिकः। अथवा स्वाश्रयनिष्ठो यः स्वाश्रयत्वधर्मप्रतियोगिकपर्याप्त्यनुयोगिताकप्रतियोगिताकभेदसामान्याभावोऽत्र स्वनिष्ठजातित्वे बाधकमिति।

ननु व्यक्तेरभेदस्य पूर्वोक्तरूपस्य जातित्वबाधकत्वे किं मानम्? इति चेत्, न, जातिकल्पिकाया बुद्धेस्तत्राभावात्। नानाव्यक्तिष्वनुगतधीरेव जातिसाधिका, सैव सामान्यप्रख्याशब्देनोच्यते। अत एव सरूपसूत्रे महाभाष्यकारैः प्रख्याविशेषाद् जातिः साधिता। उक्तञ्च महाभाष्ये पस्पशाह्निके तद्भिन्नेष्वभिन्नं तच्छिन्नेष्वच्छिन्नं सामान्यभूतं जातिरिति। एवञ्च नानाघटादिव्यक्तिषु अनुगमाय एकप्रकारकबुद्धेरुपपत्तये घटत्वादिजातिः कल्प्यते। एकस्मिन् व्यक्तौ चैकप्रकारकबुद्धिस्तद्व्यक्तित्वमादायैवोपपद्यते, तत्र तदतिरिक्तजातिकल्पने प्रमाणाभावः।

एवञ्च सति व्यक्तेरभेद इत्यस्य व्यक्तेस्तादात्म्यमित्यर्थ एव युक्तः। तच्च स्ववृत्त्यसाधारणो धर्मः, असाधारण्यञ्च एकमात्रवृत्तिधर्मस्तद्व्यक्तित्वादिरूपः। तद्व्यक्तित्वञ्च भेदविशिष्टान्यत्वम्, वैशिष्ट्यञ्च स्वसामानाधिकरण्य-स्वप्रतियोगिवृत्तित्वोभयसम्बन्धेनेति। तथा चाकाशं न घट इत्याकारकभेदे स्वं भेदः, तत् सामानाधिकरण्यं घटत्वे स्वप्रतियोगिवृत्तित्वमपि, इत्युभयसम्बन्धेन भेदविशिष्टं घटत्वादिकं तदन्यत्वं तद्व्यक्तित्वे इति समन्वयः। न च स्वस्मिन्नेव स्वस्य भेदं ग्रहीतुं शक्यते, येन भेदविशिष्टं तदेव स्यात्, अत उक्तसम्बन्धेन भेदविशिष्ट तदितरत्—तदन्यत्वं तद्व्यक्तित्वे इति बोध्यम्।

अत्र स्वप्रतियोगिवृत्तित्वमात्रनिवेशे च भेदीयप्रतियोगितायास्तद्व्यक्तावपि सत्वात् तद्वृत्तित्वं तद्व्यक्तित्वे। स्वं नीलघटव्यक्तिभेदः, तत्प्रतियोगिनीलघटव्यक्तिः, तत्र तद्व्यक्तित्वस्य सत्वेऽपि नीलघटव्यक्तिभेदसामानाधिकरण्यं तद्व्यक्तित्वे नास्ति। नीलघटव्यक्तिभेदवति पटे नीलघटव्यक्तित्वस्याभावात्। उभयसम्बन्धनिवेशबलाच्च भेदविशिष्टं तद्व्यक्तित्वं विना सर्वं घटत्वादिकं धर्मजातं भविष्यति, तदन्यत्वं तद्व्यक्तित्वे इति। एवं स्थले तद्व्यक्तित्वेनैवाव्यवहारसम्भवाद् जातिर्न कल्प्यत इति भावः। अतो व्यक्तेरभेदस्य जातिबाधकत्वमुच्यते।

ननु नित्यत्वे सत्यनेकसमवेतत्वस्य जातित्वाद् अनेकसमवेतत्वाभावाद् जातिलक्षणमेव नाकशत्वे प्रसवतमिति किमिति बाधकमुच्यते, इति चेत्, न, प्राचां मते निःसामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वस्य जातिलक्षणस्य सत्वात्। इदञ्चाकाशत्वे प्रसवतमिति तन्मतेनैव व्यक्तेरभेदस्य बाधकत्वमुच्यते। तत्र रूपादावतिव्याप्तिवारणाय प्रथमसत्यन्तम्। विशेषेतिव्याप्तिवारणाय द्वितीयसत्यन्तम्। रूपध्वंसादावतिव्याप्तिवारणाय विशेष्यदलम्। सर्वं दिनकरीरामरुद्रीव्याख्याने मुक्तावल्यां स्पष्टम्[1]।

१. पृ० ५७।

अथवा अनेन जातिबाधकसंग्रहेण लक्षणोपकार एव क्रियत इति। नाना-व्यक्तिसमेतत्वाभाव एव व्यक्तेरभेद इत्यनेन प्रतिपाद्यत इति नव्यमतेऽपि साम-ञ्जस्यम्। तुल्यत्वादीनां व्याख्यानं तु मुक्तावल्यां दिनकरीव्याख्याने कृतमेवेति इह न वितन्यते। तत्रैव जिज्ञासुभिर्द्रष्टव्यम्।

अतोऽनुभूतेरेकत्वात् सजातीयद्वितीयराहित्याद्वा नानुभूतित्वं जातिः। न द्वितीयः, उपाधिरूपं वेति अननुगतत्वादेव अनुगतो हि उपाधिर्भवति। जातित्वे उपाधित्वे वा तस्याद्वैतविरोधः स्यादेव, जातित्वे तस्य नित्यत्वात्, उपाधित्वे अनुभूतेः पृथक्सिद्धत्वादिति चेन्, अत्रोच्यते—कल्पितव्यक्तिभेदनिष्ठस्य चन्द्रत्व-सामान्यस्येव अनुभूतिसामान्यस्याप्यभ्युपगमे सिद्धान्ताविरोधात्। कल्पितस्यापि प्रतिबिम्बादिवत् साधकत्वात्।

अयं भावः—अनुभूतेः परमार्थत एकत्वादपि व्यवहारतो घटपटादिवृत्ति-व्यवच्छेदाद् भेदो व्यावहारिकोऽस्त्येव, अन्यथा भेदव्यवहारविलोपापत्तेः। यथा एकस्यापि आकाशस्योपाधिभेदाद् घटाकाशादिव्यवहारः। यथा वा कल्पितभेदेन भिन्नास्वनेकव्यक्तिषु चन्द्रत्वं जातिरिति। नन्वेवं परमते अकल्पितस्य सामान्यस्य स्वमते च कल्पितस्येति स्थितौ परमते पुनर्हेत्वसिद्धिस्तदवस्थैवेति चेत्, न, कल्पितत्वाकल्पितत्वरहितस्यानुभूतित्वस्योभयमतसिद्धत्वात्। अन्यथा पर्वतो वह्निमान् धूमादित्यादौ व्याप्तिग्रहस्थलमहानसीयधूमस्य पर्वते भावाद् हेत्वसिद्धिः स्यात्, अतः सामान्यधूमवह्न्योर्व्याप्तिर्गृह्यते। तथात्रापि कल्पितत्वाकल्पितत्व-विशेषरहितानुभूतित्वसामान्यमेव हेतुः, स चोभयमते प्रसिद्ध इति न स्वरूपासिद्धिः।

न च कल्पितव्यक्तिनानात्वानुगतैकाकारप्रतीतिर्न जाति कल्पने प्रमाणमिति वाच्यम्, जातिकल्पने अनुगत प्रतीतेरेव प्रयोजकत्वात्। तत्र कल्पितत्वाकल्पितत्वयो-रप्रयोजकत्वात्। अन्यथा शुक्तिरजते रजतत्वप्रतीतिर्न स्यात्, न स्याच्च तद्ग्रहण-प्रवृत्तिः, तदभिलपनप्रवृत्ती रजतमिति। न च जातेर्नित्यत्वे अनुभूतित्वस्यापि नित्यत्वाद् अद्वैतविरोध इति वाच्यम्, सिद्धान्ते ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वा-नित्यत्वाभ्युपगमात्, जातिनित्यत्वे च प्रमाणाभावात्। प्रख्याविशेषाच्च जातिसिद्धिः। तस्य व्यक्त्यपेक्षया नित्यत्वव्यवहारः। यदुक्तं तद्भिन्नेष्वभिन्नं तच्छिन्नेष्वच्छिन्नमित्यादि महाभाष्ये। तत्रैव 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिक-व्याख्यावसरे महाभाष्ये भगवत्पतञ्जलिना आपेक्षिकनित्यत्वानित्यत्वमादायैवाकृति-रनित्या, द्रव्यं नित्यं द्रव्यमनित्यमाकृतिर्नित्येत्यादि व्युत्पादितम्।

ननु यदि कल्पितभेदमादायापि जातिः कल्प्यते, चेद् आकाशत्वादिकस्यापि जातित्वे बाधकाभावाद् व्यक्तेरभेद इत्यस्य जातिबाधकस्यानवकाशता प्रसज्येतेति चेत्, न, तेन रूपेणाकाशत्वस्यापि जातित्वे न दोषः। व्यक्तेरभेद इत्यस्य च तद्-

व्यक्तित्वादिकमेवोदाहरणम्। यत्र कल्पितोऽपि भेदो नास्ति, तद् उदाहरणम्। अतोऽनुभूतित्वस्य जातित्वे न क्षतिः। अनुभूतित्वस्योपाधित्वेऽपि न दोषः। परमार्थतोऽनुभूतेः पक्षीकरणे अनुभूतित्वमुपाधिरिति न प्रकृतानुमाने हेत्वसिद्धिः।

ननु अनुभूतिः स्वयं प्रकाशा, अनुभूतित्वाद् इत्यनुमाने पक्षतावच्छेदकस्य अनुभूतित्वस्य हेतोश्चैक्यप्रसङ्गः। तथा चोद्देश्यतावच्छेदकविधेययोरैक्येन उपनयवाक्याच्छाब्दबोधो न स्यात्। तथा हि तथा चायमिति उपनयवाक्याद् हेतुमान् पक्ष इति वाक्यं सम्पन्नं भवति। प्रकृते च अनुभूतित्ववती अनुभूतिरिति स्यात्, तस्य चानुभूतिरनुभूतिरिति तात्पर्यम्।

एवञ्च घटो घट इतिवत् शाब्दबोधानुपपत्तिः। न च नव्यमते विधेयांशे अधिकावगाहिनः शाब्दबोधस्योपगमेन पक्षतावच्छेदकहेत्वोरैक्येऽपि साध्यव्याप्यानुभूतित्ववती अनुभूतिरिति उपनयवाक्यस्य शाब्दबोधानापत्तिर्नैवास्तीति वाच्यम्, दृष्टान्तादेवोदाहरणवाक्याद् व्याप्तिलाभात् पुनरुपनयवाक्ये व्याप्तिप्रवेशे पुनरुक्त्या उपनयवाक्यं हेतुमान् पक्ष इत्येवं रूपमेवेति तन्मते दोषः स्यादेवेति चेत्, न, पक्षतावच्छेदकहेत्वोरैक्याभावात्। तत्र कल्पिताकल्पितविशेषरहितसामान्यस्य हेतुत्वात्। अकल्पितस्यानुभूतेः पारमार्थिकस्य निधर्मकस्य पक्षत्वात्। तत्र निरवच्छिन्नैव पक्षता भासतां नाम, को दोषः? अनुभूतेः स्वयं प्रकाशत्वाद् व्यापकत्वाद् निरवच्छिन्नत्वाच्च। अत एवोद्देश्यतावच्छेदककालावच्छिन्नत्वं विधेये भासत इति उत्पत्तिकालीनो घटो गन्धवान् इति वाक्यप्रामाण्यान्यथानुपपत्त्या स्वीकृतस्यापि न्यायस्य द्व्यणुकमीश्वरकृतिजन्यमित्यादौ ईश्वरस्य निरवच्छिन्नत्वाद् औत्सर्गिकत्वं स्वीक्रियते। प्रतिपादितञ्चैतद् अद्वैतसिद्धिव्याख्यानभूतलघुचन्द्रिकायां तद्व्याख्यानभूतविट्ठलेशोपाध्यायव्याख्यायाञ्चादावेव।

अथवा सिद्धान्ते उपनयावयवस्यैवास्वीकारान्न दोषः। उक्तञ्च वेदान्तपरिभाषायाम्—"न्यायो नाम अवयवसमुदायः, अवयवाश्च त्रय एव प्रतिज्ञाहेतूदाहरणरूपा; न तु पञ्चावयवरूपा अवयवत्रयेणैव व्याप्तिपक्षधर्मतयोरुपदर्शनसम्भवेनाधिकावयवद्वयस्य व्यर्थत्वात्[1]"। तत्रैव शिखामणौ—"किमुपनयस्य व्याप्तेः प्रदर्शनं प्रयोजनमुत पक्षधर्मताया आहो व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। नान्त्यः, लिङ्गपरामर्शकारणत्वस्य निराकृतत्वेन व्याप्तिविशिष्टपक्षधर्मताप्रतिपादनस्य व्यर्थत्वात्। आद्यद्वितीयौ दूषयति—अवयवत्रयेणेति।

नन्वेवमप्यबाधितत्वासत्प्रतिपक्षितत्वयोः प्रतिज्ञयानुपदर्शितात्वत् तत्प्रदर्शनाय निगमनमिति चेत्, न, तावन्निगमनमनुमिति प्रतिबन्धकबाधज्ञानविधूननाय, अनुमित्युपयोगिज्ञानस्यैवावयवप्रयोजनत्वात्। अन्यथा तत् प्रतिबन्धककामिनीजिज्ञा-

---

१. पृ० २१४।

सादिनिरासायावयवान्तराभ्युपगमापत्तेः। नापि तदुपयोगिज्ञानाय, बाधाभावज्ञानस्यानुमितिकरणत्वं मानाभावात्। बाधज्ञानप्रतिबन्धकत्वस्य तदभावकारणत्वेनैवोपपत्तेः। किञ्च न निगमनमनुमित्युपयोगिज्ञानजनकं साध्याभावप्रमाबाध इति पक्षे तदभावस्य पदवाक्यार्थभिन्नतया निगमनाप्रतिपाद्यत्वात्। साध्याभावो बाध इति पक्षे च तदभावस्य साध्यरूपतया तज्ज्ञानस्य साध्यनिश्चयपर्यवसन्नत्वेनानुमित्यहेतुत्वात्; अन्यथा अनुमितिवैयर्थ्यात्। किञ्च निगमनस्य साध्यनिर्देशकतया साध्यलक्षणबाधाभावज्ञापकत्वे प्रतिज्ञाया अपि साध्यप्रतिपादकत्वे निगमनवैयर्थ्यात्[1]।

इति उपनयनिगमनरूपावयवस्वीकाराभावात् पक्षतावच्छेदकहेत्वोरैक्येऽपि उक्तस्थले दोषाभावात्।

॥ इति हेत्वसिद्धिनिरासः॥



---

१. शि० म० पृ० २१५।

# व्याप्यत्वासिद्धिनिरासः

"न च व्याप्यत्वासिद्धिः सोपाधिकस्यैव तथात्वात्", "केवलव्यतिरेकिणि चोपाधेरसम्भवात्[1]", "एषा हि हेत्वाभासानां स्थितिः"[2]।

अयं भावः—व्याप्यत्वासिद्धिर्हेत्वाभासानामन्यतमा स्थितिः। तत्र व्याप्यत्वासिद्धिर्नाम व्याप्यत्वे सति पक्षधर्मतया सिद्धत्वाभाववत्त्वम्। व्याप्यो नाम व्याप्त्याश्रयो व्याप्यत्वञ्च व्याप्तिरिति। सिद्धिश्च पक्षधर्मतया व्याप्यस्य प्रमितत्वम्। तद्विपरीतमसिद्धत्वम्। एवञ्च व्याप्तेरसिद्धौ व्याप्यत्वासिद्धिरभिधीयते। असिद्धिस्त्रिधा—आश्रयासिद्धिः, स्वरूपासिद्धिः, व्याप्यत्वासिद्धिरिति। तत्र पक्षतावच्छेदकाभाववत् पक्षकत्वम् आश्रयासिद्धिः। यथा काञ्चनमयपर्वतो वह्निमान् इति। अत्र काञ्चनमयत्वविशिष्टपर्वतत्वं पक्षतावच्छेदकत्वेनाभिमतं पाषाणीयपर्वते काञ्चनमयत्वात्मकविशेषणाभावाद् विशेषणाभावप्रयुक्तविशिष्टाभावात् काञ्चनमयत्वविशिष्टपर्वतत्वाभावोऽस्ति। अत्र वह्निव्याप्यधूमवत्काञ्चनमयपर्वत इति परामर्शप्रतिबन्धः फलम्।

हेत्वभाववत्पक्षकत्वं स्वरूपासिद्धिः। यथा—ह्रदो द्रव्यं धूमात्। अत्रापि परामर्शप्रतिबन्धः फलम्, परामर्शश्चात्र द्रव्यत्वव्याप्यवान् ह्रद इति।

साध्याप्रसिद्धिः साधनाप्रसिद्धिश्चेति द्वौ दोषौ व्याप्यत्वासिद्धिमध्ये अन्तर्भवतः। साध्याप्रसिद्धिः साध्यतावच्छेदकाभाववत्साध्यत्वम्। साधनाप्रसिद्धिर्हेतुतावच्छेदकाभाववद्हेतुत्वम्, पर्वतः काञ्चनमयवह्निमान् धूमात्। पर्वतो वह्निमान् काञ्चनमयधूमात्, इत्युदाहरणं क्रमेण। तत्र व्याप्यत्वासिद्धिर्नाम सोपाधिको हेतुः, यथा पर्वतो धूमवान् वह्नेरिति। अत्रार्द्रेन्धनसंयोगोपाधिः। सोपाधिकः सम्बन्धो व्याप्यत्वासिद्धिः निरूपाधिकसम्बन्धस्यैव व्याप्तित्वात्। एवञ्चोक्तस्थले स्वव्यभिचरितत्वसम्बन्धेन सोपाधिकत्वाद् वह्निमत्वं व्याप्यत्वासिद्धम्। उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनम्। यथा वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचरितत्वाद् इत्यनुमानाकारस्तेन वह्निर्धूमाभाववद्वृत्तिरिति व्यभिचारज्ञानेन धूमाभाववदवृत्तिर्वह्निरिति व्याप्तिप्रतिबन्धः फलम्। उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकत्वस्वरूपः। एतदेवोपाधेः फलम्। अत एव नयनप्रसादिन्यां व्याप्तेरसिद्धिर्व्याप्यत्वासिद्धिरिति प्रोक्तम्। तथाहि एषा हि हेत्वाभासानां स्थितिः। व्याप्यत्वे सति पक्षधर्मतया प्रमितत्वं सिद्धत्वं तद्विपरीतमसिद्धत्वम्। तत्र व्याप्तेरसिद्धौ व्याप्यत्वासिद्धिरित्यभिधीयते।

---

1. चि० २६; 2. नयन प्र० पृ० २६।

पक्षधर्मत्वासिद्धिस्तु त्रिधा—तत्राश्रयस्वरूपासिद्धौ आश्रयासिद्धिः। तद्विशेषणा पक्षसत्वाप्रसिद्ध्या तु असिद्धसाधनम्। इमामपि द्विविधां केचिदभिदधति। साध्याकारा प्रसिद्ध्या साध्यस्वरूपासिद्ध्या चेति। प्रथमाऽसिद्धसाधनताभिधाना, द्वितीया त्वप्रसिद्धविशेषणम्। एतत् तु केवलपक्षदूषणतयैव वृद्धव्यवहारे प्रसिद्धम्, हेतुस्वरूपासिद्धौ तु स्वरूपासिद्धिरिति। तत्र व्याप्यत्वासिद्धिर्नाम सोपाधिकः सम्बन्धः। निरूपाधिकसम्बन्धस्य व्याप्तित्वात्, सोपाधिकत्वे च निरूपाधिकसम्बन्धवैधुर्यादिति[1]। अत्र तद्विशेषणस्य=आश्रयविशेषणस्य पक्षसत्वाप्रसिद्ध्या इतिच्छेदः। अतोऽसिद्धसाधनमित्येव युक्तः पाठो न तु सिद्धसाधनमिति। अन्यस्य चाभिप्रायः पूर्वमुक्त एव।

एवञ्चोपाधेर्व्याप्तिप्रतिबन्धविधया साध्यापहारः कृत्यमिति तत्रैवोक्तम्। इदमिदानीं विचार्यं यत् केवलव्यतिरेकिणि उपाधिः सम्भवति न वेति। एतदेव प्रक्रान्तम्। उपाधिर्हि साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति पूर्वमेवोक्तम्। स चान्वयव्यतिरेकी कश्चिद्धर्मः। यथा धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगोपाधिः। तत्र समन्वयः। तत्र तत्रार्द्रेन्धनसंयोगो महानसादौ यत्र यत्र धूमसद्भावः। तप्तायोगोलके च वह्निसद्भावे अपि आर्द्रेन्धनसंयोगाभाव इति। साध्यव्यापकत्वं साधनाव्यापकत्वमागतम् उपाधौ। स्वसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वं व्यापकत्वम्। स्वं धूमः, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं व्याप्यत्वम्। स्वं वह्निरिति। तत्र साधनाव्यापकोपाधिरित्येवोक्तौ शब्दो नित्यो कृतकत्वादित्यत्र सामान्यवत्त्वे सति बाह्येन्द्रियग्राह्यत्वमुपाधिः स्यात्, एतदर्थं साध्यव्यापक इत्युक्तम्। अन्यथा कृतकत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं सामान्यवत्वविशिष्टबाह्येन्द्रियग्राह्यत्वस्य धर्मादौ सत्त्वात् साधनाव्यापकत्वस्य सत्वात् उपाधित्वं स्यादेव। साध्यव्यापकांशनिवेशे चानित्यत्वव्यापकत्व तस्य नास्ति, अनित्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वाभावो धर्मादावेव सामान्यवत्वविशिष्टबाह्येन्द्रियग्राह्यत्वस्यास्तीति नोपाधिता।

साध्यव्यापकत्वमुपाधित्वमित्युक्तौ तु शब्दो अनित्यः, सामान्यवत्त्वे सति बाह्येन्द्रियग्राह्यत्वादित्यत्र कृतकत्वमुपाधिः स्यात्, तदर्थं साधनाव्यापकत्वं तस्योक्तम्।

अत्रानुमाने सामान्यवत्वे सतीत्येवोक्तौ परमाण्वादौ व्यभिचारः। केवलविशेष्यदलोक्तौ तु अभावप्रत्यक्षवादिमते अभावे व्यभिचार इति बोध्यम्। उपाधेश्च साध्यव्यभिचारानुमानं प्रयोजनमिति पूर्वमेवोक्तमुपपादितञ्चेति।

---

१. न० पृ० २६।

ननु घटो गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ द्रव्यत्वस्योपाधित्वं न स्यात्, तस्य साधनरूपजातेरव्यापकत्वेऽपि साध्याव्यापकत्वाद् विशिष्टसत्ताशुद्धसत्तयोरभेदमाश्रित्य शुद्धसत्ताया एव व्यापकत्वाद् द्रव्यत्वस्य च तद्व्यापकत्वाभावात्। तथैवात्रानुमाने गुणकर्मान्यत्वविशिष्टसत्तापि उपाधिः, तत्रापि लक्षणव्याप्तेरुक्तरीत्यैव। एवमेव घटः सयोगी, गुणकर्मान्यत्वविशिष्टसत्वाद् इत्यादौ च द्रव्यत्वस्योपाधित्वं स्यादिति उपाधिलक्षणातिव्याप्तिः। तथा हि साध्यरूपसंयोगव्यापकत्वात् साधनरूपविशिष्टसत्तायाश्चाव्यापकत्वाद् विशिष्टसत्ताशुद्धसत्तयोरभेदात्। अत उपाधेरुक्तलक्षणम् अव्याप्त्यतिव्याप्तिभ्यां दोषाभ्यां दुष्टमेवेति चेत्, न, साध्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नव्यापकत्वे सति साधनतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नाव्यापकत्वमुपाधित्वमिति स्वीकारात्। उक्तस्थले च साध्यतावच्छेदकं साधनतावच्छेदकञ्च क्रमेण गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्ना विशिष्टसत्तैव, न शुद्धसत्तेति तमादाय न दोषः। व्याप्यव्यापकभावश्चैकप्रकारकैकसम्बन्धेन बोध्यः, तेन द्रव्यत्वत्वेन समवायसम्बन्धेन च वह्निं प्रति व्यापकस्य द्रव्यत्वस्य द्वित्वादिना संयोगादिसम्बन्धेन च धूमं प्रति अव्यापकत्वे अपि वह्निमान् धूमादित्यादौ द्रव्यत्वे नातिव्याप्तिः। निरूपितञ्चैतद् मुक्तावल्यां दिनकर्याम्[1]।

एवंविध उपाधिश्चान्वयव्यतिरेकी कश्चिद्धर्मः। तत् सत्वे तत् सत्तेति अन्वयः, तदभावे तदभाव इति व्यतिरेकः। यथा धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः। यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनसंयोग इत्यन्वयः। यत्रार्द्रेन्धनसंयोगाभावस्तत्र धूमाभाव इति व्यतिरेकः।

अथवा साध्यव्यापकत्वमन्वयः, साधनाव्यापकत्वं व्यतिरेकः। एवञ्च विभिन्ननिरूपितव्यापकत्वाव्यापकत्वयोरेकस्मिन् धर्मे यत्र सत्वम्, सोऽन्वयव्यतिरेकीत्युच्यते।

केवलव्यतिरेकिणि चोपाधेर्न सम्भवः, सपक्षाभावात्। पक्षव्यतिरिक्तस्थले उपाधिः साध्येन अन्वयी न स्यात्। पक्षस्य सन्दिग्धसाध्यवत्त्वात् साध्यस्य निश्चयाभावात् तत्रापि स नान्वयी। तत्र साध्यस्य निश्चये सति पक्षत्वसम्भवेऽपि उपाधेः प्रयोगः साध्यापहाररूपप्रयोजनाभावाद् व्यर्थ एव, 'भुक्तवन्तं प्रति मा भुङ्क्था' इतिवत्।

ननु प्रत्यक्षेण सिद्धमपि वस्तु अनुमानेन बुभुत्सन्ते तर्करसिका इति अभियुक्तोक्तेः। सिषाधयिषाविरहविशिष्टसिद्धेरभावः पक्षता, न तु सन्दिग्धसाध्यवत्तेति। तथा च निश्चितसाध्येऽपि पक्षत्वात्, तत्र साध्यस्य सिद्धावपि उपाधिसद्भावे पश्चात् साध्यनिश्चयस्यापहारे अप्रामाण्यं स्यादेवेति तत्रैव साध्येनोपाधिः सप्रयोजनो अन्वयी भवेदिति चेत्, न, उक्तरीत्या पक्षे उपाधिसद्भावे

१. पृ० ४६३।

तस्य साधनाव्यापकत्वाभावो दुर्वारः स्यात्। न च धूमवान् वह्नेरित्यादौ पक्षे पर्वते आर्द्रेन्धनसंयोगरूपोपाधिः साध्येन धूमेनान्वयी अस्त्येवेति वाच्यम्, तथा स्वीकाराभावात्। तथाहि पक्षे धूमस्य संशये सिद्धौ वा न तत्र तेनोपाधेर्व्याप्य-व्यापकभावो गृह्यते, अपि तु महानसादौ एव। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्व-मुपाधेः साधनाव्यापकत्वम्, पक्षस्य च साधनवत्वात्। अतोऽन्वयित्वाभावात् साधनव्यापकत्वाच्च केवलव्यतिरेकिणि नोपाधिः सम्भवीति भावः।

"न च साध्यसद्भावे मा भूदुपाधिः साध्याभावे कश्चिदुपाधिर्भविष्यति"[1]। अस्यायं भावः—केवलव्यतिरेकिणि पक्षे उपाधिसत्त्वे साधनाव्यापकत्व-मन्यत्र च सपक्षाभावात् साध्याभावात् साध्यसद्भावे उपाधिर्न सम्भवति। इदानीं वादी पुनः साध्याभावे उपाधिं शङ्कते। ननु केवलव्यतिरेकव्याप्तौ यत्र साध्याभावस्तत्र हेत्वभाव इत्येवंरूपे अभावान्वयिनि तत्रोपाधिसम्भावना भविष्यति। प्रकृते अनुभूतिः स्वयंप्रकाशा, अनुभूतित्वात्, यन्नैवं तन्नैवम्, यथा घटः इत्यादौ यत्र स्वप्रकाशत्वाभावस्तत्रानुभूतित्वाभाव इति अभावान्वयव्याप्तिः। अत्र कश्चिदुपाधिः स्यादिति शंकितोपाधित्वादपि हेतोर्दुष्टत्वे अनुमितिरवरुद्धेवेति चेत्, मैवम्, उपाधेः साध्यव्यापकत्वात्। व्यापकाभावेन व्याप्याभावस्यावश्यकत्वाद् उपाधिव्यभिचारेण साध्यव्यभिचारो वाच्यः। एवञ्च साध्याभावेन गमकेन उपाधिरेष्टव्यः। साध्यं नास्ति चेत् तत्रावश्यमेवोपाधिना भवितव्यम्। अन्यथा उपाधिसद्भावे साध्यं स्यात्। गमकत्वं व्यापकत्वम्, यत्रोपाधिस्तत्र साध्याभाव इति साध्याभावस्य उपाधिव्यापकता सिद्धा। एवं स्थितौ उपाधि-सद्भावे साध्यं यदि पक्षे स्यात्, तदा साधनव्याकत्वम्। यदि चान्यत्र स्यात्, तदा केवलव्यतिरेकित्वव्याकोपः। साध्याभावस्य उपाधिव्यापकत्वं न सम्भवतीति भावः। यदि च साध्याभावस्य व्याप्यत्वमुपाधेश्च व्यापकत्वम्। यत्र साध्याभावः तत्रोपाधिरिति। एवञ्च प्रकृतानुमाने स्वप्रकाशत्व साध्यम्, तदभावश्च वेद्यत्वम्। तत्रोपाधिर्वक्तव्यः। एवञ्चानुभूतिः स्वप्रकाशत्वाभाववती वेद्या वा, वस्तुत्वात्, इत्यनुमानेनैव साध्याभावो वक्तव्यः। तत्र वस्तुत्वस्य उपाधित्वं न सम्भवति, तस्य केवलान्वयित्वात् साधनाव्यापकत्वाभावात्। अतः साध्याभावस्य व्यापकत्वे व्याप्यत्वे वा नोपाधिः सम्भवति।

अयमत्र निष्कर्षः—साध्याभावस्य व्यापकत्वम्, उपाधेर्व्याप्यत्वमुतोपाधे-र्व्यापकत्वं साध्याभावस्य व्याप्यत्वमिति। साध्यव्यापकत्वमुपाधेः सम्मतम्। साध्याभावे कश्चिदुपाधिर्भविष्यतीत्यस्य साध्याभावव्याप्यत्वं व्यापकत्वं वोपाधेरिति कल्पद्वयेऽपि दोषः। तत्र प्रथमकल्पे उपाधिसद्भावेऽपि साध्यम् आपतेत्। यदि पक्षे तदा साधनव्यापकत्वं यदि अन्यत्र, केवलव्यतिरेकित्वभङ्गः।

द्वितीये साध्याभावस्य प्रकृते वेद्यत्वस्य गमकत्वेन वस्तुत्वमुपाधिर्न सम्भवति, साधनव्यापकत्वात् तस्य केवलान्वयित्वात्।

१. चि० पृ० २६।

अथवा साध्याभावे कश्चिदुपाधिर्भविष्यतीत्यस्य अयमर्थः—व्यतिरेकव्याप्ति-प्रतिफलितानुमाने कश्चिदुपाधिः । तथाहि प्रकृते यत्र स्वप्रकाशत्वाभावः, तत्रानुभूतित्वाभाव इति व्याप्तिः। अनुमितिश्चात्र घटः अनुभूतित्वाभाववान्, स्वप्रकाशत्वाभावात्।

अत्रानुमाने कश्चिदुपाधिर्भविष्यतीति मूलाभिप्रायः। तथा चात्र साध्याभाव एव हेतुः, साधनाभावश्च साध्य इति शङ्काग्रन्थः। उत्तरन्तु, उक्तानुमाने हेतुस्थलीय-साध्याभावस्य आशङ्क्यमानोपाधिर्व्याप्यो व्यापको वेति उभयपक्षे दोषदानात् प्रदत्तं मूले। उपपादितञ्चैतत्। यदि स्वप्रकाशत्वाभावस्य उपाधिर्व्याप्य एव, न व्यापकस्तर्हि उपाधिसद्भावे साध्यं वाच्यम्। एवञ्च घटादौ यदि उपाधिसद्भावे साध्यं स्यात् तर्हि उपाधेः साधनाव्यापकत्वाद् उपाधित्वमेव न स्यात्। यदि चान्यत्र तर्हि केवलव्यतिरेकभङ्गप्रसङ्गः। उपाधेर्व्यापकत्वपक्षे च वस्तुत्वादेः कवेलान्व-यित्वात्, साधनव्यापकत्वाद् उपाधित्वमेव न सम्भवति।

अथवा साध्याभावे कश्चिदुपाधिर्भविष्यतीत्यस्यायं भावः—उपाधिर्हि साध्यस्य प्रयोजको भवति, यथा धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगो धूमस्य। स श्यामो मैत्रातनयत्वादित्यादौ शाकपाकजन्यत्वं श्यामत्वस्य। प्रकृते च वस्तुत्वरूपो-पाधिर्न साध्यस्य स्वयंप्रकाशस्य प्रयोजको घटादौ वस्तुत्वस्य सत्वेऽपि स्वप्रकाशत्वा-भावात्। अतः साध्यसद्भावे इत्यस्य साध्य सद्भावे प्रयुज्यमाने नोपाधिः सम्भवती-त्यर्थः। एवञ्च वादी साध्याभावप्रयोजकतयोपाधिमनुसन्दधाति वस्तुत्वादिकम्। तथा हि उपाधिना हि साध्याभावः क्रियते, साध्याभावश्चोपाधिकृत्यमस्त्येव। प्रकृते वस्तुत्वादिकं साध्याभावस्य स्वप्रकाशव्यतिरेकस्य वेद्यत्वस्य प्रयोजक-साधकं वास्ति। अनुभूतिर्वेद्या, वस्तुत्वाद् घटवदिति वादिनोऽनुमानात्। एवञ्च साध्याभावस्य गमकत्वेनेत्यस्य प्रयोजकत्वेनेति मूलार्थः। तथा च साध्याभावस्य प्रयोजकतया साधकतया अनुभूतिः स्वयंप्रकाशा अनुभूतित्वादित्यत्र वस्तुत्वादिक-मुपाधिः स्यादिति वादिन आशयः। स च न सम्भवति, वस्तुत्वस्य केवलान्वयित्वात् साधानव्यापकत्वात्। अतः साध्याभावे नोपाधिः सम्भवतीति भावः। एवञ्च सर्वकेवलव्यतिरेकिणि पक्षनिष्ठतयाशङ्क्यमानः सर्वोपाधेः साधनव्यापकत्वाद् नोपाधित्वसम्भावना। अत एव साध्याभावसमव्याप्तः कश्चिदुपाधिर्वेद्यत्वसमव्याप्तः वस्तुत्वादिर्भविष्यतीति अपास्तम्, साधनव्यापकत्वाद् वस्तुत्वादेः।

एवञ्च साध्याभावे यदि उपाधिः सम्भवति, तर्हि स व्याप्यो व्यापको समव्याप्तो वेति पक्षत्रयेऽपि दोष इति दिक्।

॥ इति प्रकृतानुमाने व्याप्यत्वासिद्धिनिरासः ॥

# प्रकृतानुमाने बाधनिरासः

"ननु घटज्ञानवानहं ज्ञातो घट इति प्रत्यक्षेणैवानुभूतेर्वेद्यत्वप्रतीतेः कालापदिष्टतेति[1]"। "घटविशेषितज्ञानावग्राहि वा ज्ञानविशेषितघटावग्राहिवोभथाऽपि ज्ञानग्राह्यमेवेत्यर्थः। अत्र तावदेवंविधशब्दप्रयोगस्य विषयस्फुरणेन भवितव्यम्। तत्तु यथायथं ज्ञानस्य स्वरूपस्फुरणेन घटस्य तु तेनैव स्फुरणेनेत्येवं स्फुरणेऽपि सम्भवत्येवायं व्यवहार इति नायं ज्ञानस्य वेद्यत्वापादनक्षमः[2]"।

अयं भावः—घटज्ञानवानहमिति ज्ञाने घटस्य ज्ञानविशेषणत्वाद् घटविषयकं ज्ञानं मे जातमित्यर्थः। तथा च घटविषयकज्ञानं मे जातमिति ज्ञानविषयता घटे घट विषयकज्ञाने अपि वर्तत एवेति प्रत्यक्षमेव ज्ञानस्य वेद्यता समागता।

किं वा ज्ञातो घट इति ज्ञानेऽपि अनुभूतेर्वेद्यत्वं प्रत्यक्षमेव। तथा हि ज्ञातो घट इत्यस्य ज्ञानविशिष्टो घट इत्यर्थः। ज्ञातो घट इति ज्ञानस्य विषयता ज्ञाने घटे चेति वेद्यत्वं ज्ञानस्य, इत्युभयथा ज्ञानस्य वेद्यत्वे सम्पद्यमाने प्रत्यक्षबाधतोऽनुभूतिः स्वयंप्रकाशा अनुभूतित्वाद् इत्यनुमानेन स्वप्रकाशत्वसिद्धिर्न स्यात्। पक्षे साध्याभावसिद्धिर्बाधः।

न च घटज्ञानवानहं ज्ञातो घट इत्यादौ घटस्यैव विषयत्वं न तज्ज्ञानस्यापि इति वाच्यम्, उभयविधव्यवहारान्यथानुपपत्त्या घटस्य तज्ज्ञानस्य विषयत्वस्वीकारात् तयोरेव तत्र स्फुरणादिति चेत्। अत्रोच्यते, सत्यं व्यवहारप्रयोजकं स्फुरणमेव। न हि अस्फुरितो ज्ञानस्य विषयो भवति; किन्तु यः स्फुरितः, स ज्ञानस्य विषय एवेति न नियमः, स्वतः स्फुरणस्यापि स्वीकारात्। यथा घटस्यान्यप्रकाशप्रकाशितत्वाद् घटः प्रकाशत इति। सूर्यस्य तु स्वतः प्रकाशत्वात् सूर्यः प्रकाशत इति व्यवहारो भवति। तथा ज्ञानस्य न ज्ञानान्तरेण प्रकाश्यत्वं फलाभावाद् युक्तेरभावाद् व्यवहारस्य स्वतः स्फुरणाद युपपत्तेः। एवञ्च ज्ञानस्य वेद्यत्वस्वीकारोऽयुक्तः।

विदितो घट इत्यादौ च घटस्यैव विषयत्वमवसीयते, न तु तज्ज्ञानस्यापि विदितत्वस्य घटविशेषणात्। न च विदित इति पदं वेदने समन्वयमर्हति, घटेनैव तस्यान्वयात्।

किञ्च तादृशव्यवहारस्य अनुभूतिविषयतैव नास्ति येन ज्ञानस्य वेद्यत्वमापद्येत; अपितु अनुभूतिविषयता घटस्यैवेत्यभिप्रायः।

---

१. चि० पृ० ३२; २. नयनप्र० पृ० ३२।

किञ्च ज्ञानस्य वेद्यत्वं किं स्वेनानुव्यवसायादिना वेति ? नाद्यः, अपसिद्धान्तापत्तेः। नैयायिकैर्द्वितीयेनानुव्यवसायेन प्रथमस्य व्यवसायस्य ग्रहणं स्वीक्रियते, न तु स्वेनैव स्वस्य। अन्यथा स्वस्मिन्नेव कर्मकर्तृभावस्वीकारापत्तेः सौगतमतप्रवेशः।

न द्वितीयः, अनुव्यवसायकाले प्रथमज्ञानस्य नष्टत्वाद् ग्राह्याभावाद् अनुव्यवसायस्य ग्राहकत्वायोगात्। "एतदेवोक्तं मूले" अपि च प्रत्यक्षतायामपि तत् प्रत्यक्षेणैव तदनुभाव्यत्वस्याप्रत्यक्षीकरणान्न प्रत्यक्षविरोधिता।

अयं भावः—घट ज्ञाने प्रत्यक्षत्वं वेद्यत्वञ्चेति धर्मद्वयं स्वीकार्यम्। तत्र प्रत्यक्षत्वमनुव्यवसायेन गृह्यते, न तु तत् प्रत्यक्षेण व्यवसायेनैव। वेद्यत्वमपि न तेनैव व्यवसायरूपप्रत्यक्षेण गृह्यते। अतो घटज्ञाने ज्ञानस्य प्रत्यक्षत्वेऽपि तद्गतवेद्यत्वस्य प्रत्यक्षत्वाभावाद् नैव वेद्यता। नन्वनुव्यवसायेनैव घटज्ञानगतप्रत्यक्षत्वमिव तद्गतवेद्यत्वस्यापि ग्रहणं स्यात्। एतावतापि ज्ञाने वेद्यत्वापत्तिरेवेति चेत्, न, ज्ञानगतं वेद्यत्वं किं निरूपितमिति प्रश्ने अनुव्यवसायनिरूपितमित्युत्तरं स्यात्। तथा च उक्तवेद्यत्वस्यानुव्यवसायेन विशेषितत्वाद् अनुव्यवसायविशेषितव्यवसायगतवेद्यत्वस्य यदि अनुव्यवसायेनैव ग्रहणञ्चेत् नागृहीतविशेषणा बुद्धिरिति न्यायेन वेद्यत्वविशेषणकोटिप्रविष्टानुव्यवसायस्यापि ग्रहणापत्तेः। तथा च सौगतमतप्रवेशः।

न च कथमनुव्यवसायेन स्वविशेषितवेद्यत्वग्रहणं, वेद्यत्वमेव केवलं गृह्यताम्, किं विशेषणग्रहणेनेति वाच्यम्, तन्मात्रग्रहणासम्भवात्। वेद्यत्वं विषयत्वम्। तथा च ज्ञाने विषयत्वं किं निरूपितमिति कृत्वा अनुव्यवसायविशिष्टत्वं समागतमेव। अन्यथा अविशेषितवेद्यत्वग्रहणे वेद्यत्वसामान्याद् घटज्ञानगतवेद्यत्वस्यापि ग्रहणापत्तेः। अतो घटज्ञानयोर्वेद्यत्वभेदाय अवश्यमेव वेद्यत्वे विशेषणमाश्रयितव्यम्। घटे व्यवसायविशिष्टत्वं तज्ज्ञाने चानुव्यवसायविशिष्टत्वमिति। अतो ज्ञानस्यावेद्यत्वमेव सिद्धं भवति।

॥ इति बाधदोषनिरासः ॥



## केवलव्यतिरेकिणानुभूतेः स्वप्रकाशत्वसाधनम्

उक्तवृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वाभावापराधेन नाप्रामाणिकतापि, केवलव्यतिरेकात्[1]।

ननु वृत्तिव्याप्यत्वमात्रान्न प्रामाणिकत्वमपि तु स्फुरणव्याप्यतया घटादौ तथा दर्शनात्[2]।

अयं भावः, अनुभूतिः स्वयंप्रकाशा अनुभूतित्वाद् इत्यनुमाने न कोऽपि विशेषतो दोषः। तथापि घटः स्वप्रकाशो घटत्वाद् यन्नैवं तन्नैवम् यथा पट इत्यनुमानाभासवत् तदपि अनुमानाभास एवेति यानि दूषणानि अत्र सन्ति, तानि तत्रापि सन्तु इति चेत्, न, लौकिकोऽलौकिको वा घटः पक्षीक्रियते। नाद्यः, प्रत्यक्षविरोधात्। पृथुबुध्नोदराकारस्य घटशब्दवाच्यस्य स्पर्शरूपादिमतश्चक्षुस्त्वक्प्रमाणसिद्धत्वेन सम्मतस्य स्वप्रकाशत्वायोगात्। धर्मिग्राहकप्रत्यक्षादिप्रमाणबाधात्। न द्वितीयः, तथाविधस्य घटस्याप्रसिद्धत्वाद् आश्रयासिद्धेः।

ननु तथाप्यनुभूतिः प्रसिद्धा, अप्रसिद्धा वा पक्षीक्रियते। प्रसिद्धा चेत् प्रमाणवेद्यत्वमेवागतम्, अप्रसिद्धा चेद् आश्रयासिद्धिरिति चेत्, न, घटादिवद् अनुभूतेः प्रमाणसिद्धत्वेऽपि वेद्यत्वानभ्युपगमात्। तथाहि प्रमाणजन्यस्फुरणाश्रयतया स्फुरणकर्मतया स्फुरणव्याप्यतया वा घटस्य विषयत्वं स्वीक्रियते। स्फुरणं फलम् तच्चेन्द्रियसन्निकर्षाज्जायमानविषयाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यम्। फलति बाह्यविषयाकारवृत्तौ प्रतिबिम्बितं भवतीति फलम् पचाद्यच्। व्याप्यत्वस्य च तादात्म्यसम्बन्धरूपत्वम्। व्युपसर्गपूर्वकात् सम्बन्धसामान्यार्थकस्याप्लृधातोर्भेदसहिष्णुतादात्म्यरूपसम्बन्धविशेषार्थकत्वात्। तदुत्तरकृत्यप्रत्ययस्य च चैत्रेण ग्रामः प्राप्त इत्यादाविव अनुयोगित्वार्थकत्वात्। एवञ्च फलव्याप्त्वयमित्यस्य तादृशचैतन्यतादात्म्यानुयोगित्वमर्थः, तच्च घटादौ। निरूपितञ्चैतद् अद्वैतसिद्धिचन्द्रिकाविट्ठलेशोपाध्यायीव्याख्याने[3] तथाविधं फलव्याप्यत्वं घटादौ सम्भवति, नानुभूतौ, इन्द्रियसन्निकर्षाभावात्। अपि तु प्रमाणजन्यान्तःकरणवृत्तिव्याप्यतैव तत्र स्वीक्रियते। तत्र व्याप्यत्वं नाम आकाराख्यविषयता स्वरूपसम्बन्धविशेषः।

इदमत्र तत्त्वम्—प्रमाणप्रवृत्तिमात्रान् नानुभवकर्मत्वम्, अनुभूतेः, येनास्वप्रकाशता स्यात्। प्रमाणैस्तु वृत्तिरेव जन्यते, सा चान्तःकरणपरिणाम एव। एवं

---

१. चि० ३५; २. न० ३५; ३. पृ० २३४।

वृत्तिविषयतामात्रान् नास्वप्रकाशतापत्तिः। वृत्तेः प्रकाशरूपत्वाभावात् तद्व्याप्यत्वेऽपि प्रकाशाप्रकाश्यत्वाद् ज्ञानेऽपराधीनप्रकाशत्वाद् न स्वप्रकाशत्वहानिः। वृत्त्या तु स्वतःप्रकाशस्य ज्ञानस्य स्वरूपप्रकाशाभिव्याप्तिमात्रं आवरणभङ्गरूपं क्रियते, न तु तस्य प्रकाश एव क्रियते। अतोऽनुभूतेर्वृत्तिव्याप्यत्वेऽपि नाप्रमाणिकता, नापि अस्वप्रकाशतेति सिद्धम्।

ननु वृत्तिव्याप्यत्वान् न प्रामाणिकत्वम्, अपि तु फलव्याप्यत्वमात्राद् घटादौ तथा दर्शनाद् इति चेत्, न, केवलव्यतिरेकाभावात्।

अत्रेदमालोच्यते—यत्र स्फुरणव्याप्यत्वम् तत्र प्रामाणिकत्वम्, यथा घटे इत्यन्वयः, यत्र च स्फुरणं व्याप्यत्वं नास्ति, तत्र प्रामाणिकत्वमपि नास्तीति व्यतिरेकः। एतादृशस्य व्यतिरेकस्य प्रकृतेऽभावात्। धर्मादौ फलव्याप्यत्वाभावेऽपि प्रामाणिकत्वस्वीकारात्। न हि सम्भवदन्वयव्यतिरेकयोरन्वयमात्रादेव हेतुहेतुमद्भावनिश्चयो भवति, अतिप्रसङ्गात्। एवञ्चानुभूतेः फलाव्याप्यत्वेऽपि नाप्रामाणिकता। फलव्याप्यत्वप्रामाणिकत्वयोर्व्यतिरेकाभावात् कार्यकारणाभावासिद्धेः।

अत्रेदं बोध्यम्—सर्वत्रैवायं ग्रन्थ उपर्युक्तरीत्या पाठ्यते; किन्तु नेदं युक्तं प्रतिभाति व्यतिरेके व्याप्याभावस्यैव व्यापकत्वात्। यत्र यत्र धूमस्तत्र वह्निरिति अन्वयः, यत्र वह्नेरभावः, तत्र धूमाभाव इति व्यतिरेको न तु यत्र धूमाभावः, तत्र वह्न्यभाव इति तप्तायोगोलके व्यभिचारात्। एवञ्च प्रकृतेऽपि यत्र फलव्याप्यत्वं तत्र प्रामाणिकत्वमिति अन्वयः, यत्र प्रामाणिकत्वाभावः, तत्र फलव्याप्यत्वाभाव इत्येवंरूपो व्यतिरेकः स्यात्, न तु यत्र फलव्याप्यत्वाभावः, तत्र प्रामाणिकत्वाभाव इति। एवञ्च यत्र प्रामाणिकत्वाभावः, तत्र फलव्याप्यत्वाभाव इति व्यतिरेकोऽपि सम्भवत्येव, अलीके तथासम्भवात्। तादृशव्यतिरेकस्यैव युक्तता व्यतिरेके व्यापकाभावेन व्याप्याभावस्य साधनात्। प्रकृते च फलव्याप्यत्वस्य व्याप्यत्वं प्रामाणिकत्वस्य च व्यापकत्वमिति। एवञ्चान्वयव्यतिरेकयोरुभयोरपि सम्भवात् केवलव्यतिरेकपदं केवलव्यतिरेक्यनुमानपरम्। तच्च न सम्भवतीति ग्रन्थाभिप्राय इति व्याख्येयम्।

तथात्रानुमानम्—विमतं प्रामाणिकत्वाभाववत् स्फुरणव्याप्यत्वाभावाद् यन्नैवम्, तन्नैवम्, यथा अलीकम्। अत्र यत्र यत्र प्रामाणिकत्वाभावाभावः, तत्र तत्र फलव्याप्यत्वाभावाभाव इति व्यतिरेकव्याप्तेरसम्भवः, धर्मादौ तथा असम्भवादिति।

इदञ्चानुमानं न केवलान्वयि, नापि अन्वयव्यतिरेकि, यत्र स्फुरणव्याप्यत्वाभावस्तत्र प्रमाणिकत्वाभाव इति अन्वयव्याप्तेरसम्भवाद् धर्मादौ व्यभिचारात्। अतः केवलव्यतिरेक्येवानुमानम्। तेनैव पूर्वपक्षिणा स्फुरणव्याप्यत्वाभावेन

प्रामाणिकत्वाभावः साधयितुं शक्यते, नान्येन। तदपि न सम्भवति, व्यतिरेकव्याप्तेरसम्भवादिति मूलग्रन्थतात्पर्यम्। अत एवाग्रे उक्तं मूले—"अतीतानागतयोः स्फुरणविरहिणोरुक्तव्याप्ययोर्भाट्टैः प्रामाणिकत्वाभ्युपगमात्।

एवञ्च घटः प्रामाणिकः, फलव्याप्यत्वादित्यादौ अन्वयव्यतिरेकिणोरुभयोः सम्भवेऽपि प्रकृते केवलव्यतिरेकिणि एवोपयोगात् तस्यापि केवलव्यतिरेकव्याप्तेरभावान्न सम्भव इति भावः।

वस्तुतस्तु यत्र फलव्याप्यत्वम्, तत्र प्रामाणिकत्वमित्यन्वयः, यत्र फलव्याप्यत्वाभावस्तत्र प्रामाणिकत्वाभाव इति व्यतिरेकः, स च न सम्भवति, धर्मादौ तथादृष्टत्वाद् इत्येवं व्यतिरेकव्याप्तेरभावप्रतिपादनपरो ग्रन्थो नेयः। न च हेत्वभावेन साध्याभावः कुतः साध्यत इति वाच्यम्, "तथा च वैधर्म्यात्" इति न्यायसूत्रभाष्ये आत्मा नित्यः, उत्पत्त्यभावादिति प्रयोगे यत्रोत्पत्तिभावः, तत्रानित्यत्वं यत्रोत्पत्त्यभावः, तत्र नित्यत्वमिति हेत्वभावेनापि साध्याभावः साधितः। तथैव प्रकृतेऽपि बोध्यम्।

ननु समव्याप्तयोस्तावद् उत्पत्तिरहितत्वस्य नित्यत्वस्य च भवेन्नाम हेत्वभावेन साध्याभावनिश्चयः। व्याप्यत्वे सति व्यापकत्वं समव्याप्तत्वम्। यथा प्रमेयत्वे सति अभिधेयत्वं प्रमेयत्वाभावे अभिधेयत्वाभाव इत्यादौ न कश्चिद् दोषः। घटः प्रमेयः, अभिधेयत्वादित्यादौ तथा दृष्टत्वात्। यद्यपि अत्र केवलान्वयिनि अनुमाने व्यतिरेको न सम्भवति; तथापि सम्भावनिकमादाय दृष्टान्तता योज्या। अन्यथा अभिधेयत्वप्रमेयत्वयोः समव्याप्तता न सिध्येत्। आत्मा नित्यः, उत्पत्तिरहितत्वात्। आत्मा उत्पत्तिरहितो नित्यत्वादित्युभयविधप्रयोगः सम्भवति।

प्रकृते तु फलव्याप्यत्वप्रामाणिकत्वयोर्न समव्याप्तिरिति कथं हेत्वभावेन साध्याभावः साधयितुं शक्यते। एवञ्च यत्र फलव्याप्यत्वाभावः, तत्र प्रामाणिकत्वाभाव इति व्यतिरेको ग्रहीतुं न शक्यत इति चेत्, न, मूलस्य समव्याप्त्यभावे एव तात्पर्यात्। अथवा केवलव्यतिरेक्यनुमाने तात्पर्यमिति पूर्वमेवोक्तम्।

अथवा कार्यकारणभावोऽत्र बोध्यते प्रयोज्यप्रयोजकभावो वा। तथा अन्वयव्यतिरेकाभ्यां तस्य निर्णयो भवति। व्यतिरेको अभावः। तत् सत्त्वे तत् सत्तेति अन्वयः। तदभावे तदभाव इति व्यतिरेकः। यथा दण्डादिसत्त्वे घटसत्ता, दण्डाद्यभावे घटाभाव इति। नहि घटाभावे दण्डाभाव इति व्यतिरेको गृह्यते। एवमेवात्रापि फलव्याप्यत्वं न प्रामाणिकत्वस्य जनकं प्रयोजकं वा सम्भवति। तत् सत्वे तत्सत्तायाः सम्भवेऽपि तदभावे फलव्याप्यत्वाभावे प्रमाणिकत्वाभाव इति व्यतिरेकस्याभावात्। अतः प्रामाणिकत्वे फलव्याप्यत्वं न तन्त्रमिति ग्रन्थाशयः। अयमेवाशयो नयनप्रसादिन्यामुपवर्णित इति दिक्।

॥ इति केवलव्यतिरेकिणानुभूतेः स्वप्रकाशत्वसाधनम् ॥

# अथान्वयव्यतिरेकिणा स्वप्रकाशत्वसाधनम्

"त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वात्, मदीयज्ञानवत्[१]"।

अत्र त्वज्ज्ञानं पक्षः। तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावः साध्यम्। ज्ञानत्वं हेतुः। मदीयज्ञाने दृष्टान्ते हेतोः सद्भावात् त्वदपरोक्षव्यवहारयोग्यत्वाभावात् तद्विशिष्टवेद्यत्वस्याप्यभावोऽस्त्येव। पक्षे च त्वज्ज्ञाने तवापरोक्षव्यवहारयोग्यत्वस्य सत्त्वाद् वेद्यत्वस्य चासत्वाद् विशिष्टस्यासद्भावात् समन्वयः।

अत्र पक्षे त्वत्पदाभावेऽन्यस्य ज्ञानमादाय तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वानधिकरणत्वस्य साधनाद् अर्थान्तरता। तथैव साध्यकोटौ तवपदाभावे अपि अर्थान्तरता। तथाहि त्वज्ज्ञाने परकीयापरोक्षव्यवहारयोग्यत्वाभावात् तद्विशिष्टवेद्यत्वाभावस्य सत्त्वात्।

त्वज्ज्ञानं वेद्यं न भवतीत्येतावदुक्तौ चाप्रसिद्धविशेषणता वेद्यत्वस्य सर्वत्र सत्त्वात्। तथापरोक्षव्यवहारयोग्यत्वनिवेशाच्च परमाण्वादौ प्रसिद्धिरस्त्येव।

यत्र ज्ञानत्वं तत्र तवापरोक्षव्यवहारयोग्यविशिष्टवेद्यत्वाभावः, त्वज्ज्ञाने च विशेष्याभावमादायान्यत्र च विशेषणाभावमादाय। यत्र च तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावो नास्ति अलीकादौ, तत्र ज्ञानत्वाभाव इति अन्वयव्यतिरेकिता।

नन्वत्र ममापरोक्षव्यवहारायोग्यत्वमुपाधिः। तथा हि दृष्टान्ते मदीयज्ञाने ममापरोक्षव्यवहारायोग्यत्वस्य सत्त्वात् साध्यव्यापकता। पक्षे च त्वज्ज्ञाने उपाधेरभावात् साधनाव्यापकतेति चेत्, न, अतथात्वात्। तथाहि उपाधिना हि स्वव्यतिरेकेण साध्याभावः साध्यते। साध्यञ्च हेतुव्यापकं भवति, तस्यापि व्यापकत्वाद् उपाधेः, व्यापकाभावात् पक्षे व्याप्यस्य साध्यस्याभावः साध्यते। साध्योपाध्योर्व्याप्यव्यापकभावसम्बन्धः। एतत् सिद्धये च तदभावयोरपि व्याप्यव्यापकभावसम्बन्धः स्वीकार्यः। उपाधिः साध्यस्य व्यापको भवति। उपाध्यभावश्च साध्याभावस्य व्याप्यो भवतीति विवेकः। एवञ्च उपाध्यभावात् साध्याभावानुमाने प्रकृते या व्याप्तिः, यत्र ममापरोक्षव्यवहारायोग्यत्वाभावः, तत्र तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभाव इति, अथवा यत्र ममापरोक्षव्यवहारयोग्यत्वम्, तत्र तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वम्। अत्र तव मम पदवाच्य एक एव।

अत्र व्याप्तौ ज्ञानेतरत्वस्यैवोपाधित्वात्। तथाहि त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वानधिकरणत्वाभाववत् ममापरोक्षव्यवहारायोग्यत्वाभावात्

इति व्यतिरेकानुमाने ज्ञानेतरत्वमुपाधिः। पक्षे ज्ञानेतरत्वस्याभावात् साधनाव्यापकत्वात्। दृष्टान्ते घटादौ ज्ञानेतरत्वस्य सत्त्वात् साध्यस्य तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभावस्य सत्वात् साध्यव्यापकतेति। एवञ्च हेतोः सोपाधिकत्वाद् व्याप्यत्वासिद्धेः। अत्रापि ज्ञानेतरत्वाभावेन उक्तसाध्याभावः साध्यते। एवञ्च पक्षे ज्ञानेतरत्वरूपोपाध्यभावात् तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभावस्यापि अभावात् तादृशवेद्यत्वाभावस्यैव सत्त्वात्। सिद्धं नः स्वप्रकाशत्वं समीहितमिति ममापरोक्षव्यवहारायोग्यत्वरूपोपाधेरकिञ्चित्करत्वात्।

एतदेव नयनप्रसादिन्यामुक्तम्—"उपाधिं वदतोपाधिव्यतिरेकेण साध्यव्यतिरेको अनुमातव्यः, सर्वोपाधीनामेवं स्वभावात्। युक्तञ्चैतत् साध्योपाध्योर्व्याप्यव्यापकभावार्थं तदभावयोरपि व्याप्यव्यापकभावनियमात्। तत उपाध्यभावसाध्याभावयोर्निरुपाधिकः सम्बन्धो वक्तव्यः। तस्मादभावयोरपि उपाधिर्निविशमानो दूषयत्येव प्रथमोपाधिमित्यभिसन्धाय तद्व्यतिरेकयोरयमुपाधिरुपन्यस्तः[1]"।

पूर्वोपाधिदूषणञ्चानेन साध्याव्यापकत्वापादनेन। तथाहि ज्ञानेतरत्वरूपोपाधिना ममापरोक्षव्यवहारयोग्यत्वाभावरूपहेतुः सोपाधिको भवति। एवञ्च न तेन उपाधिव्यतिरेकेण साध्यव्यतिरेको वक्तुं शक्यते। अतः पूर्वोपाधिस्वव्यतिरेकेण साध्याभावसाधको यतो न भवति, अतः उपाधेः साध्याव्यापकत्वमेवागतम्।

"ननु यथा ज्ञानत्वव्यतिरेकस्य ज्ञानेतरत्वस्योपाधित्वं ब्रूषे, एवं ममापरोक्षव्यवहारयोग्यत्वादित्यस्य हेतोर्व्यतिरेकस्य ममापरोक्षव्यवहारायोग्यत्वस्योपाधित्वं परेणापि सुवचमिति षण्डमैथुनायितं चक्रकापत्तिश्चेति[2]"।

अयं भावः—त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभाववद् ज्ञानत्वाद् मदीयज्ञानवदित्यत्र परेण ममापरोक्षव्यवहारायोग्यत्वमुपाधिर्दत्तः। उपाधौ मम=नैयायिकस्येत्यर्थः। तत्र च उपाध्यभावसाध्याभावयोर्व्याप्तौ यत्र ममापरोक्षव्यवहारायोग्यत्वाभावस्तत्र तत्र तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभाव इत्यत्र ज्ञानेतरत्वमुपाधिः सिद्धान्तिना प्रदत्तः, तेन पूर्वोपाधेर्वैयर्थ्यं सिद्धम्।

तत्र मूलानुमानीयज्ञानत्वादिति हेतोर्व्यतिरेकः, ज्ञानेतरत्वमुपाधिर्यथा सिद्धान्तिना प्रदत्तः। तथैव त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभाववद् ममापरोक्षव्यहारायोग्यत्वाभावादित्यत्र हेतोर्व्यतिरेकः, ममापरोक्षव्यवहारायोग्यत्वमुपाधिः परेण प्रदत्तोऽपि युक्तः स्यादिति शङ्काग्रन्थः।

उत्तरयति षण्डमैथुनायितमिति। अयं भावः—यदि ममापरोक्षव्यवहारायोग्यत्वस्यापि उपाधित्वं तदा तद्व्यतिरेकव्याप्तौ ज्ञानेतरत्वस्योपाधित्वं स्यात्। एवञ्च साध्यासिद्धेर्निष्फलतानुमानस्य स्यात्। उपाधिबाधकज्ञानेतरत्वस्य सत्त्वादिति। अपि च चक्रकापत्तिः। तथाहि सिद्धान्तिसाध्यं तवापरोक्षव्यवहारयोग्यत्वविशिष्ट-

१. नयन० पृ० ३७; २. न० प्र० ३७।

वेद्यत्वाभावः, अत्र हेतुर्ज्ञानत्वम्, प्रतिवादिसाध्यश्च तवापरोक्षव्यवहारयोग्यत्वविशिष्ट-वेद्यत्वाभावाभावः, अत्र हेतुर्ममापरोक्षव्यवहारायोग्यत्वाभावः। उपाधिश्चात्र सिद्धान्तिना ज्ञानेतरत्वं प्रदत्तः। ज्ञानेतरत्वव्यतिरेके प्रतिवादिसम्मतसाध्य-व्यतिरेकनिश्चये सिद्धान्तिसम्मतसाध्यमेव पर्यवस्यति। ज्ञानेतरत्वव्यतिरेकोऽपि ज्ञानत्वमेव। एवञ्च ज्ञानेतरत्वे तदैवोपाधित्वं यदा तद् व्यतिरेकः प्रतिवादि-सम्मतसाध्यव्यतिरेकं सिद्धान्तिसम्मतसाध्यं वा साधयेत्। ज्ञानेतरत्वस्योपाधित्वे सिद्धे सति सिद्धान्तिसम्मतसाध्यव्यतिरेकस्यासाधनात्। ममापरोक्षव्यवहारायो-ग्यत्वस्यानुपाधित्वं स्यात्। तस्यानुपाधित्वे च ज्ञानत्वस्य प्रथमानुमानहेतोः सिद्धान्तिसम्मतस्य हेतुत्वमिति भवत्येव चक्रकापत्तिः।

ननु कथं ज्ञानत्वस्य हेतुत्वनिर्णयममापरोक्षव्यवहारायोग्यत्वस्यानुपाधित्वं हेतुः। यावता कार्येण कारणेन चान्वयव्यतिरेकाभ्यामेव कारणत्वग्रहो भवतीति चेत्, न, हेतुत्वनिर्णये दोषनिरासस्यापि अपेक्षितत्वात्। ज्ञानत्वरूपहेतोर्निरुपाधिकता अवश्यं वाच्या। अन्यथा व्याप्यत्वासिद्धिदोषाद् अनुमानमप्रयोजकं स्यात्। उपाधि-श्चोक्तरूप एव। तत्रानुपाधित्वसिद्धिमन्तरा नोक्तहेतोर्हेतुत्वमिति भावः।

किञ्च त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्वाभावाभाववद् ममापरोक्षव्यवहारायोग्यत्वाभावादित्यत्र हेतोर्व्यर्थविशेषणतादोषः। तथाहि केवलवेद्यत्वमेव साधनीयम्, तेन हेतुना, तच्च प्रसिद्धमेवेति ममापरोक्षेत्यस्य विशेषणस्य नास्ति सार्थक्यम्, व्यर्थविशेषणता च स्वसमानाधिकरणव्याप्यताव-च्छेदकान्तरघटितत्वरूपम्। मम ज्ञानं मम व्यवहारयोग्यत्वाद् वेद्यमित्येव सिद्धान्ति-साध्यव्यतिरेकसाधकमनुमानं स्यात्। अतोऽपरोक्षेत्यादि व्यर्थमेव। एवञ्च अहेतुरेवायं ममापरोक्षव्यवहारायोग्यत्वाभावः। अतो न तद् व्यतिरेकस्योपाधित्वं वक्तुं शक्यते। तथा चोक्तोपाधेरनुपाधित्वे न ज्ञानेतरत्वस्योपाधित्वं हेतुः, अपितु व्यर्थ विशेषणत्वादेवाहेतुत्वमस्याहेतुत्वादेवोपाधित्वाभाव इति नयनप्रसादिनीकाराशयः।

ननु कथं व्यर्थविशेषणघटितहेतुरुपात्त इति चेत्, न, इयमपि काचन सरणिरेव यदुक्तं मानमनोहरकारेण वादिवागीश्वरेणात्मप्रकरणे विवादाध्यासितं बोधाधारजन्यं कार्यत्वात् चेष्टादिवद् इत्यनुमानं व्यर्थविशेषणेनापि शरीरिजन्यत्व-व्यतिरेकेण विवादाध्यासितं बोधाधारजन्यं न भवति, शरीर्यजन्यत्वादिति सत् प्रतिपक्ष्यते स्म इत्यादि निरूपितं नयनप्रसादिन्यां तत्रैव।

अयमत्र निष्कर्षः—मूलकारमतेन ज्ञानेतरत्वोपाधिना परप्रदत्ते उपाधौ अनुपाधित्वमुक्तम्, प्रथमानुमानसाध्याभावसाधकत्वात्। नयनप्रसादिनीकारमते च तदुपाध्यभावस्य सिद्धान्तिसम्मतसाध्याभावसाधने हेतुत्वमेव नास्ति, व्यर्थविशेषण-त्वान् न तु सोपाधिकत्वाद्, तथा सति उक्तरीत्या चक्रकापत्तिश्चेति दिक्॥

॥ इति अन्वयव्यतिरेकिणा स्वप्रकाशत्वसाधनम् ॥

## स्वप्रकाशत्वे नयनप्रसादिन्यामुक्तं महाविद्यानुमानम्

विमतं ज्ञानमेतज्ज्ञानविज्ञानविषयत्वे सति वेद्यत्वरहितज्ञानविषयः पदविषयत्वाद् घटवदिति महाविद्यानुमानम्[1]।

अत्र ज्ञानं पक्षः। एतत् पदेन तदेव गृह्यते, ज्ञानपदेन तज्ज्ञानं गृह्यते, विज्ञानपदेन च ज्ञानविषयकज्ञानस्यानुव्यवसायरूपं ज्ञानमुच्यते।

इदञ्च एतज्ज्ञानविज्ञानविषयत्वं वेद्यत्वे विशेषणम्। तथा च ज्ञानविषयकज्ञानविषयकानुव्यवसायरूपविषयत्वविशिष्टं यद् वेद्यत्वं तदभाववद् यज्ज्ञानं तद्विषयत्वं साध्यम्। पदविषयत्वादिति हेतुः। तथा च दृष्टान्ते समन्वयः।

घटे वेद्यत्वसहितज्ञानविषयत्वमपि वर्तत एवेति वेद्यत्वविशिष्टं यत् घटज्ञानं तद्विषयत्वं घटेऽस्तीति।

किन्तु; घटज्ञाने ज्ञानविषयकज्ञानविषयकज्ञाननिरूपितविषयत्वं नास्ति, तच्च ज्ञानविषयकज्ञाने वर्तते। अतो घटज्ञाने स्वविषयकानुव्यवसायनिरूपितवेद्यत्वस्य सत्त्वेऽपि ज्ञानविषयकज्ञानविषयकज्ञानवेद्यत्वं नास्त्येवेति घटज्ञानमेतज्ज्ञानविज्ञानविषयत्वविशिष्टवेद्यत्वरहितत्वविशिष्टं जातम, तद्विषयत्वं घटे। तत्रैतज्ज्ञानविषयत्व-वेद्यत्वयोः सम्बन्धः सामानाधिकरण्येन बोध्यः।

**ज्ञानरूपपक्षे च साध्यसमन्वयो यथा—**

ज्ञाने स्वविषयकज्ञानविषयत्वं वर्तत एवेति वेद्यत्वरहितं ज्ञानं किञ्चिदन्यत् स्वीकार्यं यद् विषयत्वं पक्षे समन्वीयात्।

अयं भावः—वेद्यत्वरहितज्ञानविषयत्वं साध्यम्। तत्र घटे समन्वयार्थं सत्यन्तं विशेषणमुपात्तम्। तस्य घटज्ञानेऽभावाद् विशेषणाभावप्रयुक्तविशिष्टाभावात्। पक्षे च ज्ञाने यस्य ज्ञानस्य विषयता तस्मिन् तदनुव्यवसायज्ञाननिरूपितवेद्यत्वं वर्तत एवेति वेद्यत्वरहितज्ञानविषयत्वं ज्ञाने नास्ति। अतो ज्ञानविषयकज्ञानविषयकज्ञानविषयत्वविशिष्टवेद्यत्वरहितं किञ्चिज्ज्ञानं स्वीकर्तव्यं यस्य विषयता ज्ञानरूपे पक्षे भवेदिति। इयं विषयता फलाव्याप्या ग्राह्या। वेद्यत्वरहितज्ञानविषयत्वमात्रोक्तौ तु बाधः स्यात्, ज्ञानविषयत्वमात्रोक्तौ तु सिद्धसाधनम्। एतज्ज्ञानविज्ञानविषयत्वमात्रोक्तौ तु दृष्टान्ते सम्भव इति बोध्यम्। अत्र महाविद्यादिभिरपीत्यत्र आदिपदेनापरं महाविद्यानुमानमुह्यम्।

॥ इति महाविद्याविमर्शः ॥

---

१, नयनप्रसादिनी—पृ० ३८।

## ज्ञानात्मनोरभेदसाधनम्

चिद्रूपत्वादकर्मत्वात् स्वयंज्योतिरिति श्रुतेः।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः[1]॥

"यद्यपि विज्ञानस्वप्रकाशतयैव तद्रूपस्यात्मनः स्वप्रकाशता सिद्धा, तथापि तद्रूपतायामेव विवादात् तत् समर्थनार्थम् अधिकयुक्तिप्रदर्शनार्थञ्च वादान्तरारम्भः[2]"।

तत्र प्राभाकराः—"घटमहं जानामि" इत्यादिषु घटादिज्ञानं कर्मतया घटं विषयतया स्वरूपमाश्रयतया चात्मानमपि विषयीकरोति। एवञ्च ज्ञाने ज्ञातृज्ञेय-ज्ञानानां सदैव भानं भवति। एतदेव त्रिपुटीभानमुच्यते। ज्ञानग्राहकानुव्यवसायस्या-वश्यकता नास्ति। उक्तरीत्या ज्ञानस्य स्वतःप्रकाशत्वात्। अत्र स्वतः प्रकाशत्वं स्वविषयत्वरूपम्, अथवा स्वव्यवहारे सजातीयपरानपेक्षत्वरूपम्। आत्मा च न ज्ञानकर्म, अपि तु ज्ञानाश्रयः। आश्रयतयैव ज्ञानगम्यः। अतो न स्वप्रकाशः। ज्ञानस्यैव चैतन्यं नात्मनः। तदाश्रयत्वाद् आत्मनोऽपि चैतन्यप्रतीतिरिति। तत्र घटो विषयः, अहमर्थं आत्मा, ज्ञाधात्वर्थो ज्ञानमिति। यथा प्रदीपः स्वं स्वाश्रयं घटादिकञ्च प्रकाशयति, एवमेव ज्ञानमपीति। भाट्टाश्च 'अयं घटः' इति ज्ञाने सति घटादौ ज्ञातता जायते, तया च घटज्ञानं गृह्यते।

तथा चानुमानम्—इयं ज्ञातता घटत्ववति घटत्वप्रकारकज्ञानजन्या, घटवृत्तिघटत्वप्रकारकज्ञाततात्वाद् या यद्वृत्तिज्ञातता यत् प्रकारिका सा तद्वद् विशेष्यकतःप्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञातता। एवञ्च ज्ञातता प्रत्यक्षा सती ज्ञानग्राहिकेति भावः। एतन्मतेऽपि ज्ञानात्मनोर्भेद एव।

रामानुजीयास्तु—अहमर्थं एवात्मा। तस्य नित्यस्वभावो ज्ञानम्। तदपि नित्यं स्वप्रकाशम्। अत्र स्वप्रकाशत्वम्, संविददूरत्वरूपम्। संविददूरत्वोपलक्षितधर्मः प्रकाशः यथोक्तं सिद्धित्रये—

भवत्वनुभवादूरं दूरादन्यद् विरोधि वा।
तद्भावश्च प्रकाशत्वं किमत्र बहुजल्प्यते[3]॥

एवञ्च संविददूरत्वं संविन्नैरन्तर्यमेव, तच्च संविद्तद्विषयतदाश्रयेषु समानमेव। तत्र पृथक् सिद्धयोः संविद्घटयोर्नैरन्तर्यं संयोगः। अपृथक्सिद्धयोः संविदात्मनोश्च समवायः। स्वस्यैव स्वापेक्षया अभेद इति तत्त्वम्। तथा च प्रकाशते

---

१. तत्त्वप्रदीपिका—पृ० ३६; २. न० प्र० पृ० ३६; ३. पृ० २०६।

इत्यस्य संविद् धात्वर्थः, नैरन्तर्यं प्रत्ययार्थं इति फलति। एवञ्च तादृशसंविद्धर्मं आत्मा। उक्तञ्च तत्रैव—

अतो यथोक्तनीत्यात्मा स्वतश्चैतन्यविग्रहः।
ज्ञानस्वभाव एवान्यत् कारणैः प्रतिपाद्यते[1]॥
स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः।
नैवं सुखादिबोधस्तु स्वरूपोपाधिरात्मनः॥

एवञ्च ज्ञानाभिन्नस्वरूपनिरूपकधर्मक आत्मपदार्थो ज्ञानवत्वेनैवोपलभ्यमानत्वाद् बोधोपाधिमत्वमात्मनः। विषयसम्बन्धकादाचित्कत्वाद् विषयोपरक्तज्ञानस्य कदाचित्कत्वप्रतीतावपि ज्ञानस्वरूपं नित्यम्। अतो न ज्ञानमागन्तुकम्। सुखादयः कामादयश्च नात्मगुणाः। ज्ञाननित्यत्वे आत्मगुणत्वे च प्रमाणम्। "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्याद्याः श्रुतय एव।

अयमर्थः—आत्मस्वभावभूतायाश्चितेर्बाह्याभ्यन्तरविषयविशेषसम्बन्धप्रकारप्राप्तदृष्टिघ्रातिरसयतिवक्तिश्रुतिमितिस्पृष्टिविज्ञातिव्यपदेशभेदायाः स्वात्मावभासिन्याः संसारापवर्गयोर्न जातुचिद् विपरिलोपो विद्यते[2]।

अयं भावः—ज्ञानं द्विविधम्, धर्मभूतं धर्मिभूतञ्चेति। धर्मी आत्मा, धर्मो ज्ञानम्। तेन ज्ञानेन धर्मेणायुतसिद्धसम्बन्ध आत्मनः। चैतन्यमुभयत्रापि। आत्मनः प्रकाशत्वं नागन्तुकं ज्ञानप्रयुक्तम्, तस्य स्वप्रकाशत्वात्। प्रदीपो यथा स्वगुणज्योतिषा नित्ययुक्तो न कदाचिदपि प्रभां विनोपलभ्यते, तथैव नित्यगुणज्ञानव्यतिरेकेण नात्मन उपलब्धिरस्ति। चेतनं ज्ञानं तत्स्वभाव एव, न तु तद्रूपं ज्ञानमेवात्मा। नात्मा जडो न वा ज्ञानमागन्तुकमिति।

न्यायमते च ज्ञानाधिकरणमात्मा, न तु ज्ञानरूपम्। चैतन्यं ज्ञानस्यैव, न तु तस्य। आत्मा जडः। ज्ञानाश्रयत्वाच्चैतन्यप्रतीतिः। ज्ञानमपि न स्वतःप्रकाशः, अनुव्यवसायग्राह्यं तत्। एवञ्चात्मनश्चिद्रूपत्वेऽस्ति विवादः।

तत्रोच्यते, आत्मा संविद्रूपः, संवित्कर्मतामन्तरेणापरोक्षत्वाद् इति प्राभाकरं प्रत्यनुमानम्। नन्वत्रापरोक्षत्वं किमपरोक्षज्ञानविषयत्वम्, अपरोक्षज्ञानत्वं वा, नाद्यः साधनवैकल्यात्। आत्मनोऽपरोक्षज्ञानविषयत्वाभावात् नान्त्यः, अपरोक्षज्ञानत्वासिद्धेः। अपरोक्षत्वादित्येवोक्तौ घटादेरपि संविद्रूपतापत्तिः। अतः संवित्कर्मतामन्तरेणेत्युक्तिः। तावदुक्तौ त्वतीतादावपि दोषः स्यादित्युभयमुपात्तम्।

---

१. सिद्धित्रय० पृ० २०६; २. तत्रैव—पृ० २१७।

नैयायिकं प्रति—घटतज्ज्ञानयोः सम्बन्ध आत्मनिष्ठः, ज्ञाननिष्ठत्वात् पदविषयत्ववद् इत्यनुमानम्। अत्र घटतज्ज्ञानयोः सम्बन्धः, आत्मनिष्ठ इति। घटस्य आत्मत्वं बाधितम्, अतो ज्ञानस्यैवात्मत्वं पर्यवस्यति। सम्बन्धस्य सम्बन्धिमात्रनिष्ठत्वात्।

सम्बन्धश्च सिद्धान्ते आध्यासिक एव, न तु विषयविषयिभाव इत्यनुपदमेव स्फुटीभविष्यति।

ननु नैयायिकैरपि ज्ञानात्मनोः सम्बन्धो नात्मवृत्तिर्ज्ञानवृत्तित्वात् सत्तावदित्यनुमानेन ज्ञानात्मनोरन्यतरस्यानात्मत्वं सिध्यतीति वक्तुं शक्यते, इति चेत्, न, ज्ञानात्मनोरभेदवादमते तयोः सम्बन्धस्यैवाभावात्। न चाभेद एव सम्बन्ध इति वाच्यम्, अभेदस्य सम्बन्धत्वायोगात्। 'नीलो घटः' इत्यादौ सम्बन्धस्याभेदस्य स्वीकारे सर्वथाभेदे 'घटो घटः' इतिवच्छाब्दबोधानापत्तेः। तस्माद् भेदाभेदघटिततादात्म्यमेवाभेदसम्बन्धो ग्रहीतव्यः।

ननु "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुत्या द्रष्टुरात्मनो दृष्टेर्ज्ञानस्य साक्षादेव समवायादिसम्बन्धो बोध्यते। षष्ठ्याः सम्बन्धवाचकत्वादिति चेत्, न, समवायस्य खण्डितत्वात्। किञ्च स सम्बन्धः केनावगम्येत। उभयोरन्योन्यवार्तानभिज्ञयोः सम्बन्धावगाहित्वं न सम्भवति। यदि ज्ञानात्मनोरुभयोश्चैतन्यम्, तदा परस्परनिरपेक्षत्वात् किं कृतः सम्बन्धः स्यात्। एवञ्चोभयोः सम्बन्ध एवानुपपन्नः।

द्रष्टुर्दृष्टेरित्यादौ तु सामानाधिकरण्याद् अभेद एवात्मज्ञानयोर्बोध्यते श्रुत्या। तत्र 'राहोः शिरः' इतिवत् षष्ठी सूपपन्ना। न चाभेदे पुंल्लिङ्गनिर्देशोऽनुपपन्न इति वाच्यम्, श्रुतिवाक्ये लिङ्गव्यत्ययस्यापि सम्भवात्। यथोक्तम्—

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन[1]॥

आत्मरूपमेव ज्ञानम्, अथवा ज्ञानरूपमेवात्मा न, तस्य विपरिलोप इति श्रुतितात्पर्यम्।

आत्मनो ज्ञानत्वञ्चार्थप्रकाशत्वमेव। मुक्तावर्थाभावेऽपि तत्र तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थसम्बन्धेनानपायात्। एवञ्चार्थेन संसृष्ट आत्मा अनुभव इति तत् संसर्गरहितश्च आत्मेति गीयते। अर्थसंसर्गकृता एव तज्ज्ञानकदाचित्कत्वोपपत्तिः।

अत आत्मनो ज्ञानरूपत्वे न किञ्चिद् बाधकम्। अहमर्थो नात्मा, तथा हि अध्यासभामत्यामुक्तम्[2]—"भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत,

१. सिद्धान्तकौमुदी; २. भामती—पृ० २८।

न त्वेतदस्ति। तथाहि समस्तोपाध्यवच्छिन्नानन्तानन्दचैतन्यैकरससमुदासीनमेकमद्वितीयमात्मतत्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते। न चैतानि उपक्रमपरामर्शोपसंहारैः क्रियासमभिव्याहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणापि उपचरितार्थानि कर्तुम्। अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाहो दर्शनीयाऽहो दर्शनीयेति। न न्यूनत्वं प्रागेवोपचरितत्वमिति। अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन् कथमात्मतत्त्वगोचरः ? कथं वानुपप्लवः ?"। अतः अन्तःकरणावच्छिन्नचैतन्यमेवाहमर्थः, न तु शुद्धबुद्धमुक्तस्वरूपं प्रत्यक्तत्त्वमिति।

उक्तञ्च सिद्धान्तबिन्दावपि[1]—"नन्विदङ्कारास्पदेभ्योऽनात्मभ्यो विवेकेनाहङ्कारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति, दुःखञ्चानुभवति। तेन ज्ञाततज्ज्ञापकत्वात् निष्प्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चेत्, न, चिद्भास्यत्वेन लक्षणेन इदङ्कारास्पदानामपि देहेन्द्रियमनसां प्रतिभासतोऽहङ्कारास्पदत्वेन तदविवेकात्। तेन विशुद्धेप्यात्मनि दुःखित्वाद्यभिमानात्"। नन्वहमर्थस्यानात्मत्वे अहं ब्रह्मास्मीत्यनुभववाक्येन अहमर्थस्य ब्रह्मणा सहाभेदबोधो विरुध्येत, इति चेत्, न, तत्र अन्तःकरणविशिष्टचैतन्यस्य अहमर्थस्य विशेष्यांशमादाय ब्रह्मणाभेदबोधस्य तात्पर्यावधारणात्। विशेषणांशसत्त्वे च अहमर्थस्य च न ब्रह्मभाव इति उक्तविशेषणविशिष्टस्य चैतन्यस्य ब्रह्मत्वमनवगतम्, तया श्रुत्या च तदवगम्यत इति अज्ञातज्ञापकत्वमपि तस्याः श्रुतेः सम्भवतीति

अत एव सिद्धान्तबिन्दौ—तत्त्वंपदार्थशोधनप्रसङ्गे[2] "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति" इत्याद्याः श्रुतयस्तत्पदवाच्यस्यार्थस्य समर्पिकाः। सत्यं ज्ञानमनन्तमित्यादयस्तु लक्ष्यार्थस्य। एवं जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयः,। तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वञ्चापरं चैषमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तञ्चेत्याद्यया त्वंपदवाच्यार्थस्य समर्पिकाः। योऽयं विज्ञानमयः प्राणेषु हृदन्तर्ज्योतिः पुरुषः, न दृष्टेर्द्रष्टारं पश्येदित्यादयस्तु लक्ष्यार्थस्य। तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोर्जीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्त्या लक्षणया स्मरणोपपत्तिः।"

विवरणेऽपि[3] तावद् अहमर्थस्यानात्मत्वमात्मनश्च ज्ञानरूपत्वं प्रतिवादिखण्डनपूर्वकं स्पष्टमेवोक्तम्, तथाहि—"विचारे सति अहङ्कारस्यानात्मत्वमेव पर्यवस्यति। आत्मनोऽनुभवरूपत्वात्। तथाहि इदं तावद्भवान् प्रष्टव्यः। किमात्मैव चित्प्रकाशः, उतानुभवोऽपि, अथवाऽनुभव एवेति ? आद्ये जडप्रकाशोऽयमनुभवः, किं चक्षुरादिवदप्रकाशमानो विश्वमभिव्यनक्ति आहोस्विदालोकवत् सजातीयप्रकाशान्तरनिरपेक्षतया प्रकाशमान एव विषयाभिव्यञ्जकः, नाद्यः, चक्षुषः स्वाति-

१. सि० बि० पृ० १०; २. तत्रैव—पृ० २६; ३. विवरण पृ० १९४।

रिक्तानुभवजनकत्वात्। अनुभवस्य चातथात्वात्। द्वितीये स्वातिरिक्तानुभवमनपेक्ष्य स्फुरणमित्येतस्य चित्प्रकाशलक्षणस्य सत्वेनानुभवश्चित्प्रकाश एव भवेत्, तस्माद् आलोकवत् सजातीयानपेक्षस्यानुभवस्य चित्प्रकाशत्वयुक्तम्, जडप्रकाशत्वे जगदान्ध्यप्रसङ्गात्।

नाप्यनुभव एव चित्प्रकाश इति तृतीयः पक्षः। आत्मैव चित् प्रकाश इति बलादङ्गीकार्यत्वात्, आत्मानुभवयोरभेदात्। तथाहि—सोऽयमनुभव आत्मगुण इति तार्किकाः प्राभाकराश्चाहुः। आत्मस्वरूपत्वाद् द्रव्यमिति सांख्या अर्थादाचक्षते। तथा परिणामक्रियाफलत्वात् क्रियाफलयोरैक्यविवक्षया कर्मेति भाट्टाः। तत्र कर्मत्वे गमनादिक्रियावत् प्रकाशत्वं फलत्वञ्चायुक्तम्। द्रव्यत्वेऽप्यणुपरिणामश्चेत् खद्योतवत् वस्त्वेव देशं परिमितमेव स्फोरयेत्। महत्परिमाणत्वे तद्रूपस्यात्मनोऽपि सर्वत्रावभासप्रसङ्गः। अथ तदाश्रय आत्मा; तथापि स एव दोषः। मध्यमपरिमाणत्वे सावयवत्वेनावयवपरतन्त्रत्वाद् आत्मपरतन्त्रता न स्यात्।

अथ घटस्य भूतलपरतन्त्रतावदात्मपरतन्त्रता स्यात्। एवमपि प्रदीपप्रकाशयोरिवात्मचैतन्ययोरभेद एवाङ्गीकार्यः, प्रदीपेन प्रकाशितमितिवन्मयावगतमितिव्यवहारदर्शनात्। आत्मचैतन्ययोर्भेदे व्यवहारोऽयं काष्ठेन प्रकाशितमितिवदुपचरितस्यात्। गुणत्वपक्षे प्रदीपगतभास्वररूपवदाश्रयजन्मव्यतिरेकेण जन्मासम्भवाद् नित्यतयाऽऽत्मन्यव्यभिचारबलाद् अर्थत आत्मैवानुभवः स्यात्। अनुभवाधीनसिद्धिक आत्मा कथमनुभव इति चेत्, न, तथा सति घटवदनात्मत्वप्रसङ्गात्।

अतो नाहमर्थ आत्मा; अपि तु ज्ञानरूपमेव सः। किञ्च घटज्ञानं पटज्ञानमित्यादौ विषयस्य व्यवच्छेदेऽपि सर्वत्र तद्भासकं ज्ञानमनुवर्तत एव। एवं सुषुप्तावप्यन्तःकरणस्य लयात् तद्वृत्तिविरहेऽपि अज्ञान-तद्वृत्त्योरवभासकं चैतन्यमनुवर्तत एव। अन्यथा 'सुखमहमस्वाप्सं न किञ्चदवेदिषम्' इति सुप्तोत्थितस्य परामर्शो नोपपद्येत। तथाहि ज्ञानस्य तत्राभावाद् आत्मनश्च जडत्वाद् तदज्ञानभासकं न किञ्चत् स्यात्, अस्माकं त्वात्मनः स्वप्रकाशत्वाद् ज्ञानरूपत्वाद् 'अत्रायं पुरुषः स्वयं ज्योतिः,' इति श्रुत्या न किञ्चिद्बाधकम्। अत एवोक्तश्रुतौ अत्रेति पदमुपात्तम्, जाग्रत्काले च सूर्यादिज्योतिः सत्वात् तत्र चाभावाद् आत्मनः स्वयं ज्योतिष्ट्वं स्पष्टमिति तद्भावः।

ज्ञानस्योत्पत्तिविनाशौ च तदवच्छेदकवृत्तिमादाय सुतरामुपपन्नौ। अतः सुषुप्तिरपि आत्मनो ज्ञानरूपत्वे स्वप्रकाशत्वे च मानम्।

सुषुप्तौ हि सर्वसुखदुःखात्मकप्रपञ्चरहित आत्मा भवति। सर्वप्रपञ्चापादकस्यान्तःकरणस्य विलयात्। एवञ्च तस्मिन् काले सूक्ष्माज्ञानस्य भासकः स्वयं ज्ञानरूप आत्मा केवलोऽनुवर्तते। यथोक्तम्—"यदा वै पुरुषः स्वपिति, नाम सता

सोम्य तदा सम्पन्नो भवति। तद्यथा प्रियया भार्यया सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरमिति सता ब्रह्मणा सम्पन्न एकीभूतः।

यथा मनोहरणसमर्थया कामिन्याः सक्यक्परिलिप्तः कामुकः सम्भोग-सुखमनुभवन् नान्यत् बाह्यमान्तरं वा वस्तु जानाति, तल्लीनत्वात्। तथैव जलचन्द्रादिवद् अनेककार्यकारणादिषु प्रविष्टः क्षेत्रज्ञः पुरुष उपाधिविप्रलयात् प्राज्ञेन अविद्यासाक्षिणा ब्रह्मणाऽत्यन्तमेकीभूतः सन् बाह्यं मेयादिः, आन्तरश्च मातृत्वादिरूप न जानाति। वस्तुतः एक एवात्मा उपाधिना तु ब्रह्मणा विभक्त इव भाति। उपाधिभेदापगमे च स एव स्वरूपेऽवस्थित इति भावः।

न चात्मचैतन्यस्य सुषुप्तावभाव एव वाच्यः, सर्वव्यवहारशून्यत्वाद् इति वाच्यम्, पुनरनुत्थानापत्तेः।

किञ्च अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति। यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात्, न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येदित्यादि-श्रुतिभ्य आत्मचैतन्यस्य न सुषुप्तौ शून्यता[1]।

अयं भावः—सुषुप्तात्मनो मीयन्ते इति मात्रा विषयाः, तैरसम्बन्धो भवति। अयं त्वविनाशीति यत् किञ्चत् प्रसिद्धम्, तत् तत्र सुषुप्तो न पश्यति, न स्वयं ज्योतिष्ट्वाभावात्; किन्तु स्वयं प्रकाशत्वात् पश्यन्नपि चाक्षुषादिप्रमाण-व्यापाराभावान्न पश्यतीवेति। नहि ज्ञानस्वरूपस्यात्मनो विपरिलोपो भवतीति श्रुत्यर्थः। अत एवोक्तं सिद्धान्तबिन्दौ द्वितीयश्लोके—

न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात् तदेकोऽविशिष्टः शिवः केवलोऽहम्[2]॥

एतत् सर्वं तत्रैव व्याख्यायां स्पष्टम्।

किञ्च "सत्यं ज्ञानमनन्तं ब्रह्म" प्रज्ञानं ब्रह्मेत्याद्याः श्रुतय आत्मनो ज्ञानरूपत्वे प्रमाणम्। न चेमा उपचरितार्था असकृदुक्तत्वात्।

किञ्च एकविज्ञाने सर्वविज्ञानप्रतिज्ञापि नोपपद्यते, अधिष्ठानस्य ज्ञान-रूपत्वाभावात्। प्रपञ्चस्याज्ञानकल्पितत्वाद् ज्ञानेनैव तन्निर्वर्तनात्।

---

१. सिद्धान्तबिन्दुः—पृ० ३०५;  २. तत्रैव—पृ० ३०२।

ज्ञोऽत एव[1] इति सूत्रेऽपि आत्मनो ज्ञानरूपत्वं प्रतिपादितम्। तथाहि आत्मा किं न्यायमत इवागन्तुकचैतन्यः, किं वा नित्यचैतन्य इति संशये अभिधीयते नित्यचैतन्योऽयमात्मा। परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम् "विज्ञानमानन्दम्", "सत्यं ज्ञानमनन्तं ब्रह्म[3]", "अनन्तरोऽवाह्यकृत्स्नः प्रज्ञानघन एव[4]" इत्यादिषु श्रुतिषु। तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति।

एवञ्चात्मनश्चिद्रूपत्वं तावन्निश्चितम्। चिद्रूपत्वाच्च स्वप्रकाशत्वं सिद्धम्। ज्ञानं नात्मा, गुणत्वाद् अनित्यत्वादित्याद्यमनुमानमपि वेदान्तमते न युक्तम्, ज्ञानस्य नित्यत्वद्रव्यत्वाभ्युपगमादिति।

॥ इति ज्ञानात्मनोरभेदसिद्धिः ॥



१. बृ० उ० २।३।१८;
२. तत्रैव—३।९।२८।
३. तै० उ० २।१।१;
४. व० ३।५।१३।

## ज्ञानज्ञेययोः सम्बन्धविचारः

ज्ञानज्ञेययोर्विषयविषयिभावो न कश्चिद्भावरूपः[1]। अयं भावः ज्ञानज्ञेययोः सम्बन्धो विषयविषयिभावः। तत्र विषयो घटादिः, विषयि च ज्ञानं न्यायमते स्वीक्रियते; किन्तु विषयत्वस्यैवानिरूपणान्न तादृशः सम्बन्धः सम्भवति। तथा हि का नाम विषयता तन्निरूपणमूलैव तन्निरूपिता ज्ञानेऽपि विषयित्वकथा। तत्र ज्ञानजन्यफलाधारत्वं विषयत्वम्, यस्यां संविदि योऽर्थोऽवभासते, स तद् विषय इति वा, ज्ञानाकारार्पको हेतुर्विषय इति वा, ज्ञानकर्मत्वं वेत्यादि लक्षणानां मूल एव खण्डितत्वात्। खण्डनप्रकारश्च तत एव द्रष्टव्यः[2]।

किञ्च सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो विशिष्टबुद्धिनियामकश्च, इति पातञ्जलानुसारेण विषयविषयिभावस्य द्विष्ठत्वासम्भवः। तथाहि विषयविषयिभावो नाम विषयता विषयिता चेति तत्र प्रत्येकं न सम्बन्धत्वम्, विषयतायाः विषयेष्वेव सत्वाद् विषयितायाश्च विषयिष्वेव सत्वात्। न च विषयविषयिभाव एक एव सम्बन्ध इति वाच्यम्, प्रमाणाभावात् तदनिरूपणाच्च।

किञ्च सम्बन्धो द्विधा भेदोऽभेदश्चेति। तत्र ज्ञातविषययोरभेदस्यासत्वाद् विषयविषयिभावसम्बन्धो भेदसम्बन्ध एव, स चाभाव एवेति। अनेनाभिप्रायेण नयनप्रसादिन्यामुक्तम्—"कश्चिद् भावरूपः सम्बन्धः" इति।

किञ्च घटादेः स्वावच्छिन्नचैतन्ये प्रतिभासमानतया तस्य मिथ्यात्वात्, तत्रैवाभावात् तत् सम्बन्धस्याप्यभावाद् लोकप्रसिद्धविषयविषयिभावसम्बन्धस्याभावरूपत्वं सम्भवति; किन्तु नेदं न्यायमते उपपद्यते। अथवा नैयायिकैरुक्तसम्बन्धस्य भावरूपत्वे प्रतिज्ञाते सिद्धान्तिभिरुक्तोपपत्तौ तस्य भावत्वे खण्डिते पुनस्तैर्वादिभिर्मा भूत् भावसम्बन्धोऽभाव एवास्माकं विषयविषयिभावः सम्बन्ध इत्यभ्युपगमपक्षेऽस्य ग्रन्थस्य योजना कर्तव्या।

अभावरूपत्वेऽपि ज्ञानाश्रितत्वं तस्य सम्भवत्येवेत्यभावपक्षेऽपि मूलानुमानं नानुपपन्नम्। सिद्धान्ते त्वध्यासिकः सम्बन्ध इति घटज्ञानयोरध्यास एव सम्बन्धः। घटस्य ज्ञाने नामरूपात्मकेन रूपेण आरोपितत्वाद् यथा शुक्तिरजतयोरध्यासिकः सम्बन्ध इति भावः।

॥ इति ज्ञानज्ञेययोः सम्बन्धविचारः ॥

●

---

१. नयन० प्र०—पृ० ३१; २. चित्सुखी—पृ० ७६-८०।

# अथाकर्मत्वादात्मनः स्वप्रकाशत्वसाधनम्

अकर्मत्वाच्चात्मनः स्वप्रकाशत्वम्[1], द्वितीयं हेतुं विवृणोति–अकर्मत्वाच्चेति[2]।

ननु पूर्वं स्वप्रकाशलक्षणप्रसङ्गे नापि सप्तर्ममित्यत्र विषयत्वशब्देन कर्मत्वविवक्षायां गुरुमतानुसारिणामात्मन्यतिव्याप्तेरित्युक्तम्। इह चाकर्मत्व-हेतुना आत्मनः स्वप्रकाशत्वं साध्यत इति पूर्वापरविरोधः स्पष्ट एव। एवञ्च आत्मा स्वप्रकाशोऽकर्मत्वाद् इत्यत्रानुमाने हेतुर्व्यभिचारी प्राभाकरात्मनि तस्य सत्वात्, स्वसम्मतस्वप्रकाशत्वरूपसाध्यस्य चाभावादिति चेत्, न, तत्र लक्षणविचारः स्वप्रकाशस्य प्रक्रान्तः, लक्षणेन च लक्ष्यान्तरस्य व्यावृत्तिः क्रियते। तच्च यथा स्वप्रकाशत्वमितरव्यावृत्तमकर्मत्वाद् इत्यनुमितिः। तत्र प्राभाकरात्मनि व्यभिचार-सम्भवः, तत्र तैरकर्मत्वेऽपि स्वप्रकाशत्वस्वीकारात्।

इहानुमाने त्वात्मनि तेनैव हेतुना सिद्धान्तसम्मतस्वप्रकाशत्वं साध्यत इति कुतो व्यभिचार इति।

अथवा—ज्ञानविशिष्टान्यत्वमकर्मत्वम्, वैशिष्ट्यञ्च स्वाश्रयत्व-भास्यत्वान्य-तरसम्बन्धेनेति गुरुचरणाः पण्डितश्रीदेवस्वरूपमिश्राः। तत्र प्रभाकरात्मा ज्ञानविशिष्ट एवेति तदन्यत्वरूपाकर्मत्वहेतोस्तत्राभावान्न व्यभिचारः। अन्यथा अकर्मत्वस्या-विषयत्वादिरूपस्य तत्र सत्वात् स्वसम्मतस्वप्रकाशत्वस्य च साध्यस्याभावाद् व्यभिचारो दुर्वारः स्यात्।

नन्वकर्मत्वमेवात्मनि कुतो यावता मानसप्रत्यक्ष आत्मेति चेत्, न, जानातेः कर्तृत्वं कर्मत्वञ्चेति एकत्रात्मनि विप्रतिषिद्धम्। परसमवेतक्रियाफलशालित्वं हि कर्मत्वम्। न चोपाधिवशाद् एकस्याप्यनेकाकारता सम्भवत्येव। यथा एक एव देवदत्तः पिता पुत्रः श्यालः श्वसुरो भवत्येवेति वाच्यम्, एवं सति कर्तृकर्मभाव-विरोधस्य विलोपापत्तिः स्यात्, सर्वत्रैवं सम्भवात्।

न चैवं सति कर्मत्वमेवास्तु, कर्तृत्वमास्तु इति वाच्यम्, जानातिना सामाना-धिकरण्यात्। ज्ञानानुकूलकृत्याश्रयतया कर्तृत्वस्य क्लृप्तत्वात्।

नन्वात्मा स्वप्रकाशोऽकर्मत्वाद् इत्यत्राकर्मत्वमस्तु, स्वप्रकाशत्वं मास्तु काऽनुपपत्तिरिति चेत्, न, आत्मा संविदतिरिक्तः संविद्रूपो वा। नाद्यः, यदि संविद् व्यतिरिक्त आत्मा, तर्हि घटादिवद् ज्ञानकर्मतयेवापरोक्षः स्यात्, न ज्ञानाश्रयतया। यद्यद् संविद् व्यतिरिक्तम्, तत् तत्तत्कर्मतयाऽपरोक्षमिति नियमात्। एवञ्चा-

१. चित्सुखी—पृ० १०; २. नयन० प्र०—४३।

द्यपक्षे आत्मनः कर्मत्वापत्तिः स्यात्। एवञ्चोक्तनियमानुपपत्तिरेव विपक्षे बाधकस्तर्कः। अतः कर्मत्वाभावो बलादेव उक्तनियमानुपपत्त्याऽऽत्मनः संविद्रूपतां स्वप्रकाशतां वा साधयतीति भावः। एतदेवोक्तं नयनप्रसादिन्याम्—'यदि संविद्व्यतिरिक्तः स्यात् तर्हि कर्मतयेवापरोक्षव्यवहारविषयः स्यात्, विषयेषु तथा व्याप्तेः। तेन कर्मत्वं व्यावर्तमानं संविद्व्यतिरिक्तत्वे सत्यपरोक्षत्वं व्यावर्तयति[1]'। ननु नायं नियमस्तथा स्वीक्रियते संविद्व्यतिरिक्तस्याप्यात्मन आश्रयतयापरोक्षत्वाङ्गीकाराद् इति चेत्, न, संवेदिता संविदाश्रयतयाऽपरोक्षो न भवति, अपरोक्षत्वात् संवेदनवद् इत्यनुमानात्। न च विपक्षे बाधकतर्काभावः, संशयादिगोचरप्रसङ्गस्यैव तत्त्वात्। न चाद्रष्टृत्वमुपाधिः, तस्य पक्षेतरतुल्यत्वात् साध्याव्यापकत्वाच्चेति। तस्मादकर्मत्वादपि आत्मनः संविद्रूपत्वं सिद्धमिति दिक्।

॥ इत्यात्मनः स्वप्रकाशत्वसाधनम् ॥

---

१. न० प्र० ० ४४।
१० न० स०

# तमसोभावरूपत्वसाधनम्

ननु तमो न भावरूपं भावेष्वनन्तर्भावात्[1]।
भावाभावातिगाविद्यातत्त्वे दृष्टान्तितं तमः ॥
वृद्धैस्तदस्य भावत्वं वादेनानेन साध्यते[2] ॥

मूले अविद्या तमो निवर्तकत्वात् ज्योतिः शब्दाभिधेयमित्याद्युपात्तम्। तत्र अविद्याया दृष्टान्तत्वेन तमस उपादानं कृतम्। तमसश्च वैशेषिकैरावश्यकतेजोऽभावरूपत्वाद् अभावरूपत्वमेव स्वीक्रियते, दार्ष्टान्तिके अज्ञानेऽप्यापद्येति वेदान्तेऽपि तमसो भावत्वसाधनं क्रियते।

ननु किमिदं भावत्वम्, न तावद् अभावभिन्नत्वम्। अभावत्वमपि भावभिन्नत्वमित्यन्योन्याश्रयता स्यात्। न च षट्पदार्थान्यतमत्वं हि भावत्वम्, गौरवात् शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात् सप्तैव पदार्था इत्यवधारणायोगात्।

किञ्च षट्सु पदार्थेषु भावपदार्था गृहीताः, अभावो वेति। नाद्यः, आत्माश्रयात्। नान्त्यः, अभावमादाय षट्त्वसंख्यापूरणे अभावस्यापि भावत्वापत्तेरिति।

किञ्च षण्णां पदार्थानां भावत्वे निर्णीत एव तदन्यतमत्वं भावत्वमिति वक्तुं शक्यते। तदेव तु भावत्वं किमित्याशङ्क्यते इति चेत्, न, अत्र समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वम्। यद्यपि समवाये समवायघटितसामानाधिकरण्येन न सत्तावत्त्वम्, स्वरूपसम्बन्धेनैव तस्य वृत्तेः। 'तथापि समवायत्वस्य संसर्गतानवच्छेदकत्वे स्वरूपत्वेन समवायस्यैव स्वरूपसम्बन्धत्वेन न तस्य समवायेन वृत्तित्वक्षतिः।

तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे।
द्रव्यान्तरं तमः कस्मादकस्मादपलप्यते[3] ॥

अत्रानुमानञ्चेत्थम्—तमो द्रव्यम्, रूपवत्त्वात्, घटादिवत्। तमो द्रव्यान्तरं नवसु अनन्तर्भूतत्वे सति द्रव्यत्वात्, यन्नैवं तन्नैवम्, यथा घटः। अनेन तमसो द्रव्यान्तरत्वं सिध्यति।

नीलरूपवत्त्वञ्च तत्र निर्बाधे जाग्रति स्फुटे इत्यनेन प्रत्यक्षसिद्धमेव भ्रमरहितमिति प्रतिपादितम्।

न च तमो रूपरहितम्, स्पर्शरहितत्वाद् नभोवदिति न द्रव्यत्वसिद्धिरिति। एवञ्च रूपवत्ता प्रतीतिस्तु भ्रमसिद्धेति वाच्यम्। निर्बाधं प्रत्यक्षतो रूपप्रतीति-

---

१. चि० पृ० ४७; २. न० प्र० पृ० ४७; ३. चि० पृ० ४९।

विरोधाद् उक्तानुमानस्य बाधितत्वात्। यावत् तमोरूपप्रतीतेर्बाधकाभावान्न भ्रमत्वं तस्य। यथा तस्यालोकनिरपेक्षचक्षुर्जन्यत्वं तथा मूले व्युत्पादितमेव। तथा हि—

चक्षुः प्रकाशनाजन्यरूपवद्वीक्षणक्षमम्।
रूपिग्राहीन्द्रियत्वेन यथैव स्पर्शनेन्द्रियम् ॥

चक्षुः, प्रकाशाजन्यरूपिद्रव्यसाक्षात्कारजनकम्, रूपिद्रव्यग्राहकेन्द्रियत्वात्, त्वगिन्द्रियवत्।

न च रूपरहितेन्द्रियत्वमुपाधिः, तस्य त्वगिन्द्रियरूपदृष्टान्ते साध्यव्यापकत्वग्रहाच्चक्षुषि पक्षे च रूपरहितेन्द्रियत्वाभावात् साधनाव्यापकत्वमपीति। एवञ्च पक्षे साध्यव्यापकरूपोपाधिः स्वव्यतिरेकात् स्वव्याप्यं साध्यमपि निवर्तयिष्यतीति वाच्यम्, तथात्वाभावात्। तथा हि उपाधिर्हि साध्यव्यापको भवति। एवञ्च यद्यत् प्रकाशाजन्यरूपिसाक्षात्कारजनकम्, तद् रूपरहितेन्द्रियमिति अन्वयव्याप्तिः। व्यतिरेकव्याप्तिस्तु—साध्याभावस्य व्यापकत्वाद् उपाध्यभावस्य च व्याप्यत्वाद् यद् रूपसहितेन्द्रियम्,तद् आलोकाजन्यरूपिसाक्षात्कारजनकं न भवति, घ्राणवदिति। अन्वयव्यतिरेकव्याप्त्या चक्षुषि उक्तसाध्याभावः साध्यते। तत्र च व्यतिरेकव्याप्तौ रूपवदग्राहकत्वस्यैवोपाधित्वात्। तथाहि यद् रूपवदिन्द्रियम्, तदालोकाजन्यरूपिसाक्षात्कारजनकत्वाभाववदिति व्यतिरेकव्याप्तिर्न सम्भवति, रूपवदग्राहकत्वस्योपाधित्वात्। उक्तव्यतिरेकव्याप्तिकानुमानञ्चेत्थम्—चक्षुः आलोकाजन्यरूपिसाक्षात्कारजनकत्वाभाववद् रूपवदिन्द्रियत्वात्, घ्राणवदिति।

तत्र रूपवदग्राहकत्वोपाधेः समन्वयश्चेत्थम्—दृष्टान्ते घ्राणे रूपवदग्राहकत्वस्य सत्त्वाद् उक्त साध्यस्य च सत्वाद् उपाधेः साध्यव्यापकत्वम्। पक्षे चक्षुषि च रूपवदिन्द्रियत्वस्य सत्वाद् रूपवदग्राहकत्वस्य चासत्वाद् रूपवद्ग्राहकत्वस्यैव सत्त्वाद् रूपवदिन्द्रियत्वरूपसाधनाव्यापकत्वमपीति बोध्यम्।

एवञ्च चक्षुषि उक्तसाध्यव्यापकस्य रूपवदग्राहकत्वस्याभावाद् व्याप्यस्योक्तसाध्यस्याप्यभावाद् रूपवदिन्द्रियत्वस्य तत्र चक्षुषि सत्त्वाद् आलोकाजन्यरूपिसाक्षात्कारजनकत्वाभावाभावस्यैव सत्त्वात्, नोक्तव्यतिरेकव्याप्तिः।

उक्त व्यतिरेकव्याप्तौ हि रूपवदिन्द्रियस्य व्याप्यत्वमालोकाजन्यरूपिसाक्षात्कारजनकत्वाभावत्वस्य च व्यापकत्वं जातमासीद्, इदानीं रूपवदग्राहकत्वरूपोपधिना च तस्य तन्निरूपितं व्यापकत्वं दुर्घटम्। अतो व्यतिरेकव्याप्त्यभावात् तत्प्रयोजकरूपरहितेन्द्रियत्वस्योपाधित्वाभावात् पूर्वानुमानेन तमसो द्रव्यान्तरत्वसिद्धिः।

अत एव नयनप्रसादिन्यामुक्तम्—"त्वगिन्द्रियस्योक्तसाध्यवत्तायां रूपरहितेन्द्रियत्वं नोपाधिस्तस्य व्यतिरेकव्याप्त्यभावेन साध्याव्यापकत्वात्"[1]।

१. न० प्र० पृ० ५५

अयं भावः—निरुपाधिकः सम्बन्ध एव हेतुसाध्ययोर्व्याप्तिः। तथा च उक्तोपाधिना या व्यतिरेकव्याप्तिः रूपवदिन्द्रियं प्रकाशाजन्यरूपिसाक्षात्कारजनकत्वाभाववद् घ्राणवदिति, तत्र रूपिद्रव्याग्राहकत्वस्योपाधित्वाद् व्याप्तेः सोपाधिकत्वान्नैव हेतोः साध्यसिद्धिप्रयोजकत्वम्।

ननु चक्षुरालोकाजन्यरूपिद्रव्यसाक्षात्कारजनकं रूपिद्रव्यग्राहकेन्द्रियत्वात्, त्वगिन्द्रियवद् इत्यनुमाने वादिभी रूपरहितेन्द्रियत्वमुपाधिर्दत्तः स एव नोपपद्यते, साध्याव्याप्तेः। तथा हि अदृष्टे, इन्द्रियसन्निकर्षे, उलूकदृष्टौ चालोकाजन्यरूपिद्रव्यसाक्षात्कारजनकत्वस्य सत्त्वात्, तत्र च रूपरहितेन्द्रियत्वस्याभावाद् न तस्योपाधितैव सम्भवतीति चेत्, न, साध्यस्य मनुष्येन्द्रियत्वविशेषितत्वात्। एवञ्चोक्तस्थले साध्यस्याप्यभावाद् नोपाधेः साध्याव्यापकतेति बोध्यम्।

किन्तु पूर्वोक्तरीत्या रूपरहितेन्द्रियत्वोपाधिप्रयुक्तव्यतिरेकव्याप्तेः रूपवदग्राहकत्वस्यैवोपाधित्वाद् असम्भवाद् व्यतिरेकासिद्धयेव तस्योपाधित्वभङ्गाद् उपाधित्वसिद्धये मनुष्येन्द्रियत्वविशेषणप्रदानायासो न कर्तव्यः। तस्मात् सिद्धं तमसो द्रव्यान्तरत्वमिति।

ननु तमःपदमालोकानभाववाचकम्, आलोकापेक्षचक्षुर्ग्राह्यवाचकत्वाद् आलोकाभावपदवदित्यनुमानेनैव तमस आलोकाभावरूपत्वे सिद्धे, दूरापास्तमेव पूर्वोक्तानुमानेन द्रव्यान्तरत्वसाधनम्। तथा हि यथा आलोकाभावपमालाकाभाववाचकम् आलोकानपेक्षचक्षुर्ग्राह्यपदार्थवाचकत्वात्, तथैव तम.पदमपि। यद्यद् आलोकानपेक्षचक्षुर्ग्राह्यवाचकम्, तद् आलोकाभाववाचकमिति व्याप्तेरिति चेत्, अत्रोच्यते, निर्भ्रान्तं स्पष्टञ्च तमसो द्रव्यान्तरत्वेन प्रतीतौ नीलत्वाच्चलत्वाच्च तमसो द्रव्यान्तरत्वे सिद्धे, अस्यानुमानस्य कालातीतता स्यात्।

किञ्च आलोकानपेक्षचक्षुर्ग्राह्यवाचकत्वमस्तु, आलोकाभाववाचकत्वं मास्तु, इति विपक्षे बाधकस्तर्कः कः? अपि चोक्तानुमाने रूपवदवाचकत्वादेरुपाधित्वस्यापि सम्भवात्।

किञ्चोक्तानुमानेन तमःपदस्य नानार्थत्वसिद्धावपि चरितार्थता। तस्य नानार्थत्वाभावे च नानार्थतापत्त्या अर्थान्तरतेति।

आलोकसंसर्गाभावः तमःपदवाच्यो न भवति, अभावत्वाद् घटाभाववदित्यादिना सत्प्रतिपक्षः।

अपि चानुपलब्धिप्रमाणगम्यो हि अभाव इति वादिमते, आलोकाभावपदे आलोकानपेक्षचक्षुर्ग्राह्यवाचकत्वरूपसाधनस्यैवाभावाद् दृष्टान्तासिद्धिः चक्षुर्ग्राह्यत्वादित्यपि बोध्यम्। एवञ्चाभावबोधकमनुमानं निरस्तं वेदितव्यम्।

किञ्च यदि तमः तेजोऽभाव एव स्यात्, तर्हि घटादिपदार्थानामावारकं न स्यात्। न हि कश्चिदप्यभावः कस्यचिदाच्छादको भवति, कस्मिंश्चिद् भूतले

विद्यमानो घटाद्यभावः पटादेर्भूतलादेर्वा आच्छादको भवतीति कस्यचित् प्रमितम्। तमस्तु आच्छादयत्येव वस्तु इति न तेजोऽभावरूपः।

अतः तमो नाभावरूपमावारकत्वाद् पटादिवदित्यनुमानेनापि तस्याभावरूपतायाः प्रत्याख्यानं भवति।

ननु वस्तुस्वभावस्य वैचित्र्याद् घटाभावस्य आवारकत्वाभावेऽपि प्रकाशाभावस्यावरकत्वमेवेति, यदापि तेजसोऽभावं उपलभ्यते, तमोरूपतयैवेति चेत्, न, तादृशकल्पने मानाभावाद्। दिवा प्रज्वलितादित्यप्रकाशे तेजोऽभावस्य क्वापि विलयापत्तेः। भवति अत्र तेजो नास्ति इति प्रतीतिर्दिवाऽपि। न च तत्र तमोऽवलोक्यते। अतः प्रकाशविरोधितमोद्रव्यान्तरमेव मन्तव्यमिति युक्ततमं प्रतिभाति। यथा अग्निजलयोर्विपरीतस्वभावत्वाद् नैकत्र समवस्थानम् तथैव तेजस्तमसोरपि वेदितव्यम्। नहि कश्चिज्जलस्य तेजोभावरूपतां तेजसो वा जलाभावरूपतां प्रतिपद्यते।

किञ्चास्मन्मतेऽभावस्याधिकरणरूपतायां तेजोऽभावस्याधिकरणरूपता न स्यात्। सा च प्रत्यक्षेण गृह्यते, तेजोऽभावस्याधिकरणे भूतलादौ नैव तमोरूपता सम्भवति, स्पष्टत एव भूतलादेस्तमसः पृथगुपलब्धेरिति।

मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्यद् मेयत्वाद् घटवदित्यनुमानेनाऽपि तमसो द्रव्यान्तरत्वसिद्धिः।

इदं महाविद्यानुमानमनेनापि तमसो द्रव्यान्तरत्वं सिध्यति। तथाहि दृष्टान्ते साध्यसमन्वयश्चेत्थम्—स्पर्शवन्तो भावाः पृथिवीजलतेजोवायुरूपास्तदवृत्तिस्तन्निष्ठाधिकरणतानिरूपिताधेयताभाववती, या वेगवति मन आदिषु वर्तमाना जातिर्मनस्त्वादिजातिस्तदन्यत्वं घटादेरस्त्येव पक्षे च मनस्त्वे तादृशजात्यन्यत्वं न सम्भवतीति तादृशी जातिः काचिदन्यावश्यमेव स्वीकार्या, सा च न पृथिवीत्वं, तस्य स्पर्शवद्वृत्तित्वात्। एवमेव जलत्वतेजस्त्ववायुत्वादयोऽपि। मनस्त्वान्या च जातिर्वेगवद्वृत्तित्वाभावाद् न ग्राह्येति मनस्त्वग्रहणे च तदन्यत्वं पक्षे बाधितम्, अतः अकामेनापि तमस्त्वं तादृशी जातिः स्वकार्येति तज्जातिमत् तमो द्रव्यान्तरमिति सिद्धम्। अत्र वेगवद्वृत्तिजात्यन्यदित्येवोक्तौ जलत्वादिजातिमादाय तदन्यत्वे साध्ये सिद्धसाधनता। स्पर्शवदवृत्त्येवोक्तौ तु दिक्त्वाद्यादाय दृष्टान्ते पक्षे च सिद्धसाधनं स्याद् अत उभयमुपात्तम्। अन्यत्पदाभावे तु दृष्टान्ते साध्यसमन्वयाभावापत्तिः स्यात्।

एवं युक्तिबलात् तमसो द्रव्यान्तरत्वं चाक्षुषत्वञ्च सिद्धम्। वस्तुतस्तु तमसः साक्षिवेद्यत्वमेव स्वीक्रियते। यदि चाक्षुषप्रत्यक्षे प्रकाशसहकार्यत्वं स्वीक्रियते, अज्ञानवत् साक्षिवेद्यत्वमस्यापि। अलं दोषमुखस्य तमसो बहुप्रपञ्चेनेति दिक्।

॥ इति तमसोभावरूपद्रव्यान्तरत्वसिद्धिः ॥

१. न० प्र० ५६।

# अथ मिथ्यात्वलक्षणे विचारः

तत्र मिथ्यात्वस्य लक्षणं सिद्धान्तभूतं स्वीकृतम्—

सर्वेषामपि भावानामाश्रयत्वेन सम्मते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ।

तथा हि पटादीनां भावानां स्वाश्रयत्वेनाभिमतास्तन्त्वादयो ये तन्निष्ठात्यन्ताभावप्रतियोगितैव तेषां मिथ्यात्वम्[1] । अत्र नयनप्रसादिनी[2]—"अयमर्थः, न तावदात्मवदेषामनाश्रितत्व कार्यत्वेन समवायिकारणाश्रितत्वात् सामान्यादीनामपि धर्मत्वात् समानमाश्रितत्वं तस्मादाश्रितानामन्यत्र प्राप्त्यभावात् प्राप्तदेशेऽपि चेद् असत्त्वमापद्यत एव, तदा बलाद् मिथ्यात्वमिति ।

ननु पटादीनामन्यत्र सत्ताया अभावात् पटावयवेष्वपि चेदभावः, तर्हि अलीकत्वमेव तेषां किं न स्यात् । एवञ्चासत्त्वेन निर्वक्तुं शक्यत्वात् सत्त्वासत्त्वाभ्यामनिर्वाच्यता पदार्थानां दृश्यानां न स्यादिति चेत्, न, पटादीनां प्रतीत्या व्यवहारसिद्धया चालीकता प्रातिभासिकता वा न तेषाम् । एवञ्च स्वाश्रयादन्यत्राभावाद् असन्त एव ते इति न वाच्यम्, स्वाश्रये प्रतीतिसिद्धत्वात् । न च प्रतीतिसिद्धत्वाद् व्यवहारसिद्धत्वाद्वा सन्त एव ते इति वाच्यम्, प्रतीतिसिद्धावपि व्यवहारसिद्धावपि परमार्थतस्तेषामसिद्धत्वाद् अधिष्ठानसत्त्वेनैव तद्व्यवहारसिद्धावनुपपत्तेरभावात् पृथक्सत्त्वकल्पनं तेषां व्यर्थमिति, न, सत्त्वेन तेषां निर्वचनमिति भवत्येव पटादीनां स्वाश्रये प्रतीतिसिद्धानां व्यावहारिकाणाञ्च सदसद्भ्यां निरूपणानर्हत्वम् । अस्यापि मिथ्यात्वलक्षणस्य हृदयभूतं सदसद्भ्यामनिर्वचयनीयत्वं रक्षितमेव ।

मिथ्याशब्दश्च अपह्नववचनोऽनिर्वचनीयतावचनश्चेति । तत्र युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमः प्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायामध्यासो मिथ्येति भवितुं युक्त इत्यत्र भाष्यकारवचने मिथ्याशब्दोऽपह्नववचनोऽसम्भववचन इति यावत् । तत्रैवाग्रे—"अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः' इत्यादौ मिथ्याशब्दोऽनिर्वचनीयतावचनः । एवञ्च प्रपञ्चमिथ्यात्वमित्यत्रापि मिथ्याशब्दो नापह्नववचनः; अपि तु अनिर्वचनीयतावचन इति । सर्वस्मिन्नेव मिथ्यात्वलक्षणेऽनिर्वाच्यत्वमन्वेषणीयम् ।

ननु स्वाश्रयत्वेनाभिमतपदेन किं गृह्यते ? यदि च स्वं पटादयः कार्याणि तदाश्रयस्तत्समवायिकारणं तन्त्वादयः तदाश्रिताः, पटादय इति, तदा स्वाश्रयतन्त्वादिषु विद्यमानपटादिपदार्थानामभावः कुतः स्यात् । अभावे च पटादीनामनुपलब्धिप्रसक्तिः । उपलभ्यन्ते च पटादयः ।

किञ्च चक्षुरादिप्रमाणैः प्रत्यक्षतो गृहीतानां घटादीनामपि यदि

अभावः स्यात्, तर्हि घटस्थितिकालेऽपि घटाभावः प्रसज्येत, आत्यन्तिको वाऽभावो घटस्य स्यात्।

किञ्च स्वाश्रयनिष्ठो योऽत्यन्ताभावः, सोऽपि प्रमात्मक एव भवद्भिर्वाच्योऽन्यथा भवदभिमतासिद्धेः। येनेन्द्रियेण या व्यक्तिर्गृह्यते, तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेणेति मते स्वाश्रयनिष्ठात्यन्ताभावस्यापि घटप्रतियोगिकस्य प्रत्यक्षेणैव ग्रहणं वाच्यम्, तच्च न सम्भवति, घटस्यापि तदभावस्याप्येकत्र प्रत्यक्षोपलब्धेर्विरोधात्। अनुपलब्धिप्रमाणगम्यत्वेऽपि अभावस्य का नामानुपलब्धिः, ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्। अनुमानजन्यातीन्द्रियाभावानुभवहेतानुमानादावतिव्याप्तिवारणाय अजन्यान्तं पदम्। अदृष्टादौ अतिव्याप्ति वारणायासाधारणेति। अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणाय अनुभवेति[1]।

एवं सति घटस्यासत्त्व एव तादृशी अनुपलब्धिः प्रसक्ता। इह तु घटस्य प्राप्तिर्भवत्येवेति कथमभावो गृह्यत इति चेत्, अत्रोच्यते, आश्रयशब्देन आधारः अधिष्ठानञ्च गृह्यते। इह चाधिष्ठानं गृह्यते। अधिष्ठानत्वञ्चाज्ञानाश्रयत्वमन्य आधार उच्यते। अत एव घटादीनां पृथिवी नैव, अधिष्ठानमपि तु आधार एव। यद्वा सामान्यतो ज्ञातत्वे सति विशेषतो ज्ञातत्वाभाववत्त्वमधिष्ठानत्त्वम्। नन्वत्र विशेषाज्ञातत्वमेव कुतो न निवेश्यत इति चेत्, न, ब्रह्मणि लक्षणाव्याप्तेः तस्य निर्विशेषत्वात्। उक्तलक्षणे तु निर्विशेषस्यापि ब्रह्मणो विशेषरूपेण ज्ञानं सम्भवत्येव। अत्र लक्षणे अलीकेऽतिव्याप्तिवारणाय सामान्यतो ज्ञातत्वम्। प्रमात्मके 'इयं शुक्तिः' इति ज्ञानेऽतिव्याप्तिपरिहाराय विशेषतोऽज्ञातत्वांशनिवेश इति बोध्यम्। एवञ्च स्वं घटस्तदाश्रयस्तदधिष्ठानं घटावच्छिन्नचैतन्यम्, तन्निष्ठोऽभावो घटस्य तत्राध्यस्तत्वात्। घटस्य उक्ताभावप्रतियोगित्वरूपमिथ्यात्वसिद्धिः। आश्रयशब्देनाधिकरणविवक्षायामपि स्वं पटः, तदाश्रयस्तन्तुसमुदायः, तत्रैव समवायेन तदुत्पत्तेः, तन्निष्ठोऽभावस्तस्य प्रतियोगित्वं पटस्येति। एवमेव तन्तुसमुदायस्यापि मिथ्यात्वोपपादनेऽन्ततोऽधिष्ठानं चैतन्यमेव केवलमवशिष्यते।

स्वाश्रयनिष्ठोऽभावश्च प्रामाणिक एव गृह्यते, न प्रातिभासिकः। प्रामाणिकत्वञ्चात्र न पारमार्थिकत्वरूपम्, अपि तु व्यावहारिकत्वमेव। तेन च नैव प्रामाणिकेनापि अभावेनाद्वैतविरोधः, परमार्थतोऽभावस्याप्यसत्त्वात्। न हि प्रमाणमात्रगम्यत्वात् सत्वमापद्यते, देहात्मादौ तथा भावाभावात्; अपि तु तात्त्विकप्रमाणगम्यत्वात्। तात्त्विकप्रमाणगम्यत्वञ्च ब्रह्मातिरिक्तस्य भावस्याभावस्य वा नैवास्ति। अत्र 'एकमेवाद्वितीयम्[2], नेह नानास्ति किञ्चन[3] [4]अतोऽन्यदार्तमित्यादिश्रुतेः'

---

१. वेदान्तपरिभाषा—पृ० ११२; २. छा० उ० ६।२।१; ३. छा० उ० ४।४।१९; ४. बृ० उ० ३।४।२।

"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जयः, मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव इत्यादि स्मृतिश्च प्रमाणम् । अतः षड्विधलिङ्गोपेतश्रुतेः परमतात्पर्यं सर्वप्रपञ्चशून्येऽद्वैते ब्रह्मण्येवेति तत्त्वावेदकत्वं श्रुतेः सिद्धम् ।

प्रतीतिबलसिद्धत्वाद् आमुक्तेरबाधितत्वाच्च प्रपञ्चस्यापि व्यावहारिकत्वं सिद्धमेव । तत्र प्रपञ्चान्तर्वर्त्तिघटादेस्तदभावस्य वा तदाश्रयनिष्ठस्य व्यावहारिकत्वमायातमेव । एवञ्च स्वाश्रये प्रतीत्या सिद्धस्यापि विद्यमानस्यापि परमार्थतोऽभाव इति मिथ्यात्वरहस्यम् । अत एव प्रत्यक्षेणापि घटतदभावयोर्ग्रहणेऽपि किं वा प्रमाणान्तरेण तदभावस्य ग्रहणेऽपि न कश्चन विरोधः । कपाले किं वा तदवच्छिन्नचैतन्ये घटः परमार्थतो नास्ति, व्यावहारसिद्धस्तु उपलभ्यत एवेति । पारमार्थिकत्वञ्च सत्त्वं चित्त्वमबाधितत्वमलीकभिन्नत्वमिति । अतो घटो मिथ्येत्यस्य स्वाश्रये घटो नोपलभ्यते इति नायमर्थः, किन्तु परमार्थतो नास्तीति । किञ्च तादृशाभावस्य पारमार्थिकत्वेऽपि नाद्वैतहानिः, "एकमेवाद्वितीयम्" इत्यादिश्रुत्या भावाद्वैतस्यैव प्रतिपादनाद् अभावसहस्रेणापि नाद्वैतक्षतिः; किन्तु स्वतन्त्रायाः श्रुतेस्तात्पर्यंस्यैवंविधसंकोचे प्रामाणाभावात् प्रथम पक्ष एव युक्तः । किञ्चाभावस्याधिकरणस्वरूपतया पारमार्थिकत्वेऽपि सर्वप्रपञ्चस्याभावस्याधिष्ठानब्रह्मरूपत्वाग्नानुपपत्तिः ।

ननु भावरूपस्य ब्रह्मणोऽधिष्ठानत्वेऽपि सर्वप्रपञ्चस्याभावरूपत्वं कथम् ? विरोधात्, भावत्वाभावत्वयोरेकत्र समावेशायोगादिति चेत्, न, भावरूपे नित्ये कूटस्थे चिदात्मनि ब्रह्मणि न तावत् प्रपञ्चः परमार्थत उत्पद्यते, उपपद्यते वाऽपि तु शुक्तौ रजतमिव रज्जौ सर्प इव विवर्तितो भातीति यथा शुक्तौ रजतं कालत्रयेऽपि नास्ति, दोषवशाच्च शुक्त्यवच्छिन्नचैतन्यनिष्ठशुक्तित्वप्रकारकाज्ञानपरिणामस्तत्र विद्यमानमिव प्रतिभाति । एवमेव सर्वप्रपञ्चोऽपि कालत्रयेऽपि ब्रह्मणि नास्ति, अनाद्यज्ञानवशाच्च तत्र विलसितं विद्यमानमिव प्रतिभातीति प्रपञ्चात्यन्ताभाव एव ब्रह्मणि श्रुत्या बोध्यते "एकमेवाद्वितीयम्", "य इह नानेव पश्यति" इत्याद्यया ।

एवञ्च प्रपञ्चाभावेनापि ब्रह्मैवास्ति केवलम्, न तत् सजातीयविजातीयस्वगतभेद इति बोध्यते ।

अत एवाद्वैतसिद्धौ श्रीमधुसूदनसरस्वतीभिः—"तत्राद्वैतसिद्धे[1] द्वैतमिथ्यात्वपूर्वकत्वात्" इत्युक्तम् । प्रतिपादितञ्चैतद् अद्वैतसिद्धेर्द्वैतमिथ्यात्वज्ञानद्वारत्वं चन्द्रिकाकृद्भिः, तट्टीकाकृतविट्ठलेशोपाध्यायैः । तेषामयमभिप्रायः—एकमेवाद्वितीयमित्यादिश्रुत्या न केवलं ब्रह्मैव बोध्यते; अपि तु द्वैताभावोपलक्षितमेव

---

१. अद्वैतसिद्धौ मङ्गलाचरणानन्तरम् ।

बोध्यते। तत्र उपलक्षणबुद्धौ विशेषणबुद्धेः कारणत्वाद् द्वैताभावस्य द्वारत्वमद्वैत-निश्चये उपपद्यते। अनेन चाद्वैतसिद्धिग्रन्थेनापि सिध्यति यद् द्वैताभाव उपलक्षण-मेव अविद्यमानत्वे सतीतरव्यावर्तकत्वमुपलक्षणत्वम्। उपलक्ष्यं ब्रह्म। तच्च उपलक्ष्यतावच्छेदकधर्मं विनैव, निर्धर्मकत्वाद् घटत्वादेः स्वरूपत उपस्थितिवत् स्वरूपत उपलक्ष्यं भवति। एवञ्च नैव भावान्तरमभावो वा ब्रह्मणि कस्यचित् सम्भवति परमार्थतः। किञ्च भावान्तरमभावो हीति मते तु प्रपञ्चाभावो नाम ब्रह्मैव, न कश्चिद् अभावो नाम पदार्थोऽस्ति। एवञ्च श्रुत्या प्रपञ्चोपशमो नाम ब्रह्मैव बोध्यते अपवादन्यायेन। अत एवाभावस्याधिष्ठानरूपत्वमुच्यते। नैव वस्तुतोऽभावोऽधिष्ठानरूपो भवति। घटाभाववद् भूतलमित्यादौ भूतलं घट इत्याद्यापत्तेः।

अत एव प्रपञ्चस्योत्पत्त्यभावादेव कालत्रये सत्त्वादेव सोपादानप्रपञ्चनिवृत्तेः सविलासाज्ञाननिवृत्तेर्वा न ध्वंसरूपत्वम्। सतो विद्यमानस्यैव प्रतियोगिनश्चरमक्षण-वियोगरूपो ध्वंसो भवति। ध्वंसस्य प्रतियोग्युत्थानापत्तिभिया नित्यत्वं स्वीक्रियते[1]। वस्तुतः प्रतियोगिनः प्रागभावस्यासत्त्वादेव न पुनरुत्थानम्। अतः प्रपञ्चध्वंसस्वीकारेऽद्वैतविरोधः स्पष्ट एव। न च ध्वंसस्यापि अभावरूपत्वाद् अधिष्ठानरूपत्वे कथमद्वैतविरोध इति वाच्यम्, ध्वंसाभावस्याधिष्ठानरूपत्वे मुद्गरपातादिभिर्निमित्तैरसमवायिकारणनाशादिना तस्य जन्यत्वं नोपपद्येत। अतो ध्वंसाभावस्य कार्यत्वाद् अधिष्ठानरूपत्वं न सम्भवति, घटध्वंसस्य कपालेषु घटस्य च भूतलादौ स्थितिरिति वैयधिकरण्यादपि।

ननु तैत्तिरीयोपनिषदि प्रध्वंसाभावस्य कार्यत्वं निषिध्यते भगवत्पादैः, तथाहि—"यद् विनष्टं तदेव नोत्पद्यत इति प्रध्वंसाभाववन्नित्यो मोक्ष आरभ्यत एवेति चेत्, न, मोक्षस्य भावरूपत्वात्। प्रध्वंसाभावोऽप्यारभ्यत इत्यभावस्य विशेषभावाद् विकल्पमात्रमेतद् भावप्रतियोगी ह्यभावः। यथा हि अभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते भिन्न इव घटभावः पटभावः इत्येवं निर्विशेषोऽपि भावाभावः क्रिया गुणयोगाद् द्रव्यादिवद् विकल्प्यते। न ह्यभाव उत्पलादिवद् विशेषणसहभावी। विशेषणवत्त्वे भाव एव स्यात्"।

अस्य भाष्यस्याम्भावः—आरभ्यस्यापि प्रध्वंसाभावस्य नित्यत्वाभ्युपगमाद् यदारभ्यते, तदनित्यमिति व्याप्तिभङ्गाद् विद्यासहितकर्मभिरारभ्यमाणोऽपि मोक्षो नित्य एवेति पूर्वपक्षाभिप्राये भगवत्पादैः प्रध्वंसाभावस्यारभ्यमाणत्वं निराक्रियते। तत्र भावः सत्ता, एकैव ब्रह्म, सत्ता यथा घटाभिर्विशेष्यते; तथैव एक एवाभावोऽपि अवच्छेदकभेदाद् भिन्न इव जायते, नश्यति च। एवञ्च क्रियायोगात् संख्यागुण-

१. तैत्तिरीयोपनिषद्भाष्ये—पृ० ३६९।

योगात् द्रव्यवद् अभावोऽपि विकल्प्यते, न तु तत्त्वतः सविशेषः। एवञ्चाभावे सविशेषता भावप्रतियोगिकत्वं जन्माश्रयत्वादिकञ्च भ्रान्तिसिद्धमेव। यदि जन्यत्वादिकं वस्तुतस्तत्र विशेषणं स्यात्, अभावस्य भावता प्रसज्येत। विशेषणं हि विशेष्यान्वयि प्रसिद्धम्। प्रतियोगिना च विशेषणेन नाभावस्य सहभावोऽस्ति। घटप्रध्वंसस्य नित्यत्वे घटस्यापि नित्यत्वप्रसङ्गात्। घटसहभावित्वे च तदभावत्वव्याघाताद् भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात्। अतोऽभावे सविशेषतादिभ्रममात्रमिति।

एवञ्च सर्वस्यापि अभावस्यैकरूपत्वात् कार्यत्वाभावाच्च प्रपञ्चप्रध्वंस एव कथं न सिद्धान्ते स्वीक्रियत इति चेत्, न, भ्रान्तिसिद्धविशेषतामादायापि तस्य भिन्नत्वात्। अत्यन्ताभावग्रहणे च न विवाद इति प्रपञ्चात्यन्ताभाव एव मन्तव्यः। एवञ्च सति नान्तो न चादिरिति गीतापि व्याख्याता भवति, तत्र अन्तो ध्वंसः। अन्यथा संसारस्यानादित्वेऽपि अन्तवत्त्वाद् नान्त इति असङ्गतं स्यात्। इदमपि अत्यन्ताभावग्रहणे प्रमाणम्।

ननु एकस्यैवाभावस्य सप्रतियोगिकत्वजन्माश्रयत्वादिविकल्पभिन्नस्य ब्रह्मतुल्ययोगक्षेमताऽङ्गीकारे द्वैतापत्तिरिति चेत्, न, भावाद्वैताभिप्रायेणैव उपर्युक्तभाष्यस्य प्रवृत्तेः।

वस्तुतो भावाद्वैत एव श्रुतेस्तात्पर्यमिति संकोचे मानाभावात् संकोचाच्च कल्पितप्रतियोगिकाभावस्याधिष्ठानानतिरेकत्वं स्वीकार्यम्। एवञ्च प्रपञ्चस्य सर्वस्यापि ब्रह्मणि कल्पितत्वात् तत् प्रतियोगिकाभावस्य ब्रह्मरूपत्वमेव। यथा शुक्तौ कल्पितरजताभावस्य शुक्तिरूपत्वे न किञ्चिद् बाधकम्। एतादृशस्थले च आरोप्याधिष्ठानयोः सामानाधिकरण्येन भवति व्यपदेशः, इयं शुक्तिरिति, तथैव दार्ष्टान्तिकेऽपि "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१), "सदेव सोम्य इदमग्र आसीत्" (छा० ६।२।१) इति यत्र च न कल्पितः प्रतियोगी, तत्र न तत्प्रतियोगिकाभावस्य अधिकरणरूपता, तथा च भूतले घटस्याकल्पितत्वाद् न घटाभावो भूतलस्वरूपमिति न भूतलं घट इत्यस्याप्यापत्तिः कल्पितप्रतियोगिकाभावस्यैवाधिष्ठानरूपत्वं स्वीक्रियते। अत एव कारणानन्यत्वं कार्यस्य सिद्धं भवति

ननु न ह्यभाव उत्पलादिवद् विशेषणसहभावीति भाष्यवचनम्। तथा च अभावस्य विशेषणसहभावाभावात् "प्रतियोगिविशेषिताऽभावः प्रतियोगिमर्यादां नातिशेते" इति व्युत्पत्तिविरोधः। विशेषणताख्यसन्निकर्षस्य च का गतिरिति चेत्, न, तत्रापि विशेषणपदेनावच्छेदकस्यैव ग्रहणाद् न कोऽपि दोषः।

एवञ्च प्रपञ्चनिवृत्तिरित्यादिस्थले अत्यन्ताभाव एव ग्रहीतव्यः। ननु ब्रह्मणि जातस्य प्रपञ्चस्यात्यन्ताभावोऽजातस्य वा नाद्यः, उत्पन्नस्य प्रपञ्चस्यात्यन्ताभावोऽनुपपन्नः। न द्वितीयः, अजातस्य चोपलब्ध्यभावापत्तेः। किञ्च प्रसिद्धप्रति-

यौगिकात्यन्ताभावस्यैव प्रामाणिकत्वं स्वीकर्तव्यम्। अन्यथा असत्प्रतियोगिकाभावोऽपि प्रामाणिकः स्यात्। तथा च प्रपञ्चस्यानुत्पत्तौ अप्रसिद्धत्वात् कथं तत् प्रतियोगिकाभावो गृह्येत ?

किञ्च वेदप्रतिपादितसृष्टिप्रक्रियावाक्यान्यपि व्यर्थानि स्युः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुरिति" श्रुतिः ( तै० २।१ ), "अप एव ससर्जादौ" (मनु० २) इति स्मृतिः। एवञ्चाजातवादे अनेके दोषाः सम्भवन्ति। जातवादेऽपि उत्पन्नस्य प्रपञ्चस्य ज्ञानमात्रेण निवृत्त्यनुपपत्तेः। न हि उत्पन्ना घटा ज्ञानसहस्रेणापि निवर्तन्त इति चेत्, अत्रोच्यते, "नाभाव उपलब्धेः" (ब्र० सू० २।२।२८) "वैधर्म्याच्च न स्वप्नादिवत्[1]" ( ब्र० सू० २।२।२९) इति सूत्रद्वयभाष्येण बाह्यार्थस्योपलभ्यमानत्वाद् अत्यन्ताभावः प्रतिषिध्यते, तथा च वैधर्म्याच्च न स्वप्नादिवत् प्रातिभासिकत्वम्। वैधर्म्यञ्च बाधाबाधौ। एवञ्च प्रातिभासिकभिन्नो व्यावहारिकः प्रपञ्च उपलभ्यमानत्वात् स्वीकार्य एव। स च ज्ञानपरिणाम आकाशादिक्रमेण उत्पन्न इति स्वीकार्यम्, सृष्टिप्रतिपादकश्रुतिवाक्यवैयर्थ्यान्यथानुपपत्त्या अनाद्यज्ञानोपादानकत्वाच्च प्रपञ्चस्य ज्ञानात् समूलनिवृत्तिरपि सुतरां सिध्यति। यथा शुक्त्यवच्छिन्नचैतन्यनिष्ठाविद्याविलासरूपरजतस्य "इयं शुक्तिः" इति ज्ञानेन निवृत्तिरुपपद्यते, तथैव ब्रह्मज्ञानात् प्रपञ्चबाधः सम्भवति। उत्पत्तिरत्राध्यारोप एव गृह्यते; न तु द्व्यणुकादिक्रमेण घटारम्भः। एवञ्चात्र पक्षे न किञ्चिदपि बाधकम्।

अजातवादस्यायमभिप्रायः—जातेनापि प्रपञ्चेन न किञ्चिद् ब्रह्मणि विक्रिया न वा तदतिरिक्तत्वं वा कार्यस्य स्वीक्रियते। एवञ्च जातोऽपि ज्ञाननिवर्तत्वान् मिथ्यात्वाद् अजात इवेति अजातवादरहस्यम्।

अत एव भगवत्पादैरध्यासभाष्ये उक्तम्—"तत्रैवं सति यत्र यदध्यासः, तत् कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न सम्बध्यते। तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि[2]"।

अतः स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्यत्र अत्यन्ताभावः प्रामाणिक एव व्यावहारिकः पारमार्थिको वा गृह्यत इत्यत्र नानुपपत्तिः। स्वाश्रय इत्यनेन स्वाश्रयत्वेनाभिमतेत्यर्थः, तेन स्वाश्रयत्वस्य तन्निष्ठाभावप्रतियोगित्वेन न विरोधः। वियदधिकरणाद्युक्तन्यायेन तेषामपि कार्यत्वमस्त्येव[3]।

अयम्भावः—आश्रितानां पृथिव्यादीनाम् एवं लक्षणमिथ्यात्वेऽपि निराश्रयणपरमाण्वाकाशादीनां कथं मिथ्यात्वं स्वाश्रयस्यैवाभावात्। आश्रयशब्देन चोपादानं

---

१. ब्र० सू० २।२।२९; २. ब्र० सू० भाष्यम्, पृ० १०२; ३. नयनप्र० पृ० ६७।

बोध्यते, परमाण्वाकाशादीनाञ्चाकार्यत्वाद् तदुपादानमेव न सम्भवति इति प्रश्ने समुत्पन्ने वियदधिकरणावतारो नयनप्रसादिन्यां क्रियते।

सिद्धान्ते तावद् ब्रह्मातिरिक्तस्य सर्वस्यापि कार्यत्वाद् आकाशादीनामनाश्रितत्वं न सम्भवति।

ननु अविद्याया अनादिभावत्वात् कार्यत्वं न सम्भवतीति सिद्धान्ते स्वीक्रियत इति कथं ब्रह्मव्यतिरिक्तस्य सर्वस्य कार्यत्वमुच्यत, इति चेत्, न, कार्यत्वादित्यस्य कल्पितत्वादित्यर्थः। एवञ्चारोपितत्वमविद्याया अपि अस्त्येवेति। यद्वा कार्या बुद्धिः, "कार्याविपरिणामात्" इति वार्त्तिके कार्या बुद्धिरिति महाभाष्यात्। कार्या अस्यास्तीति कार्यः बुद्धिविषयः। एवञ्च कार्यत्वमित्यस्य बुद्धिविषयत्वमर्थः। तच्च ब्रह्मातिरिक्तस्य सर्वस्याप्यस्तीति न किञ्चिदनुपपन्नम्।

वियदधिकरणस्यायम्भावः—न वियदश्रुतेः[1] इति सूत्रेण अश्रुतत्वाद् वेदानुक्तत्वाद् वियदाकाशं नोत्पद्यत इति पूर्वपक्षय्य "अस्ति[2] तु" इत्यस्मिन् सूत्रे भगवत्पादैः श्रुतिप्रमाणेनाकाशस्यापि उत्पत्तिः समर्थ्यते। तद्यथा तैत्तिरीयोपनिषदि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद् वा एतस्मादात्मन आकाशः संभूतः[3]' इति प्रोक्तम्। ननु वियदुत्पत्तिवादिनोयं श्रुतिर्गौणी भवितुमर्हति, यथोक्तं सूत्रेणैव गौण्यसम्भवात्[4] कारणसामग्र्यसम्भवाद् आकाशस्योत्पत्तिर्न भविष्यति। न हि समवाय्यसमवायिनिमित्तकारणानि कानिचित् सम्भवन्ति तदुत्पत्तौ।

किञ्च पूर्वोत्तरकालयोरुत्पत्तिरविशेषान्नैव जलादिवत्तस्योत्पत्तिः सम्भाव्या। एवञ्च 'आकाशं कुरु', 'आकाशो जातः' इत्येवंजातीयको गौणः प्रयोगो भवति। यथा च घटाकाशः करकाकाशं इत्येवं जातीयको भेदव्यपदेशो भवति, तथैव आकाशस्यापि उत्पत्तिर्गौणीति मन्तव्यम्। गुणादागता गौणी, यथा शौर्यादि गुणयोगाद् माणवकोऽपि सिंह उच्यते, एवमेव प्रकृतेऽपि निरवयवस्य तस्य उत्पत्तेरसम्भवात्। किं वा शब्दस्योत्पत्तियोगाद् आकाश उत्पन्न इति व्यवहारः, शिखो ध्वस्त इतिवत्। अत एव न्यायसिद्धान्तमुक्तावलीग्रन्थे 'द्यावा भूमी जनयन् देव एको विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादौ ईश्वरस्य जगत् कर्तृत्वोदाहरणे आकाशस्य उत्पद्यमानशब्दगुणयोगात् तन्निष्ठजन्यतानिरूपितजनकत्वमीश्वरे सिध्यति, अन्यथा नित्याकाशवादिनैयायिकानामिदमुदाहरणमसङ्गतं स्यात्।

किञ्च 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिवाक्यं नोत्पत्तिबोधकम्; अपि तु क्रमबोधकम्, तत्र पञ्चम्या अवधित्वमानन्तर्यं वार्थः। एवञ्च आत्माकाशवायुतेजोजलपृथिवीनां क्रमः। उत्पत्तिस्तु वाय्वादीनां तत्तत् परमाणुभ्य इति को दोषः? आकाशस्य नित्यत्वं वेदेनैव प्रतिपाद्यते "वायुञ्चान्तरिक्षञ्चैत-

१. ब्र० सू० २।३।१; २. तत्रैव—२।३।२; ३. तै० २।१।
४. ब्र० सू० २।३।३।

दमृतम्[1]" आकाशवत् सर्वगतश्च नित्यः[2]। स्मृतिरपि 'यथाकाशः स्थितो नित्यं वायुः सर्वत्रगो महान्' इति। एवञ्चाकाशस्य नित्यत्वे एकमेवाद्वितीयमित्यादि श्रुतिरपि स्वकार्यापेक्षया एकत्वप्रतिपादिनी न विरुध्यत इति सर्वमुपपादितं भगवत्पादैराकाशानुत्पत्तिप्रतिपादके पूर्वपक्षे स्याच्चैकस्य ब्रह्मशब्दवादिति[3] सूत्रे। तस्माद् आकाशस्य नोत्पत्तिः सम्भाव्या। एवमेव परमाण्वादेरपि निरवयवत्वाद् उत्पत्तिर्न सम्भवति इति चेत्, अत्रोच्यते—"प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः"[4] अस्मिन् सूत्रे भगवत्पादैः श्रुतिप्रमाणाद् आकाशस्य कार्यत्वं साधितम्। तथाहि यदि आकाशस्य ब्रह्मकार्यत्वं न स्वीक्रियेत, तर्हि प्रतिज्ञाया हानिरुपरोधः स्यात्। का नाम प्रतिज्ञा ? एक विज्ञानेन सर्वं विज्ञातं भवतीति। येनाश्रुतं श्रुतं भवत्यमतं मतम् अविज्ञातं विज्ञातम्[5], 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वं विदितम्[6]' 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति[7]' इत्येवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते।

यदि च समस्तस्य प्रपञ्चस्य ब्रह्मणो व्यतिरेकः स्यात्, तदाऽसौ प्रतिज्ञा हीयेत, अव्यतिरेकाच्च प्रतिज्ञा उपपद्येत। अव्यतिरेकश्च शब्देभ्यः श्रुतिवाक्येभ्योऽवगम्यते। तथा च येनाश्रुत श्रुत भवतीति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैर्वाक्यैः सा प्रतिज्ञा समर्थ्यते।

यथा च मृदि विज्ञातायां सकलमेव घटशरावादि मृज्जातं विज्ञातं मृत्तिकैवैतदिति, तथैव ब्रह्मणि ज्ञाते सति सकल एव तत्प्रपञ्चो ज्ञायते, प्रकृतिविकृतिन्यायात्। यदि च आकाशो नित्यो ब्रह्मव्यतिरिक्तस्तर्हि ब्रह्मणि विज्ञाते सति तस्य विज्ञानं न स्यात्। नहि घटे विज्ञाते सति तद्भिन्नस्तदविकारः पटो ज्ञायते।

ननु प्रकृतिविकारभाव एव सा प्रतिज्ञा नेतव्या। एवञ्च यो ब्रह्मविवर्तः, स विज्ञाते ब्रह्मणि विज्ञायत इति आकाशादयस्तु न तथा। किञ्च प्रधानमल्लनिर्वहणन्यायेन प्रधाने ब्रह्मणि ज्ञाते सति सर्वज्ञातमिव भवतीति व्यतिरेकेऽपि प्रतिज्ञा समञ्जसा इति।

किञ्च चिदचिदोर्ब्रह्मणः शरीरत्वात् शरीरशरीरिभावकल्पनेऽपि इयं प्रतिज्ञा उपपद्यते। ज्ञाते देवदत्तादौ तस्य शरीरं विज्ञातमेवेति चेत्, न, श्रुत्यैवाखिलस्य प्रपञ्चस्य ब्रह्मकार्यत्वं प्रतिपाद्यतेऽनेकधाऽनेकत्र च "सर्वं खलु इदं ब्रह्म तज्जलान्[8]" इत्यादौ साक्षादेव सर्वस्य वस्तु जातस्य ब्रह्मजत्वं श्रूयते। "तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः[9]" इत्यत्र चाकाशस्यापि ब्रह्मभवत्वं श्रूयते।

---

१. बृ० २।३।३; २. छा० ३।४।३; ३. ब्र० सू० २।३।५; ४. तत्रैव—२।३।६।
५. छा० ६।१।१; ७. बृ० ४।५।६; ७. तत्रैव१।१।३; ८. छा० ३।४।१।
९. तै० २।१।

किञ्च सामान्येनेयं प्रतिज्ञा प्रवृत्ता न संकोचमर्हति प्रमाणाभावात्। प्रधानमल्लनिर्बर्हणन्यायोऽपि अत्र न सम्भवति, मृदादिदृष्टान्तद्वारा आकाशादेरपि ब्रह्मकार्यत्वस्य स्पष्टं प्रतिपादितत्वात्। नैव वस्तुत आकाशादेः ब्रह्मणो भेदः पारमार्थिकः सम्भवति। अत एव उक्तश्रुत्यैव वियदश्रुतेरिति पूर्वपक्षोऽपि निरस्तः, श्रुतत्वात्। शरीरशरीरिभावस्तावत् सिद्धान्ते न स्वीक्रियते। अयुक्तञ्चैतत् प्रतिज्ञाहानेरेव एकमेवाद्वितीयमित्यादिविरोधाच्चेति। किञ्चास्मिन् पक्षे मृदादि-दृष्टान्तोऽपि न संगच्छते।

यत्तूक्तं शब्दोत्पत्त्या आकाश उत्पन्न इति तत्, न, श्रुत्यन्तरविरोधात् प्रतिज्ञाहानेरेव वा। साक्षादेव श्रुतिः आकाशस्य ब्रह्मजत्वं प्रतिपादयति, तत्र संकोचे प्रमाणाभावात्। अत एव क्रमबोधिकेयं श्रुतिरित्यपि प्रत्याख्यातं भवति, सम्भूतशब्दप्रयोगात्। समुपसर्गकभूधातोरुत्पत्तिरर्थः। क्रमबोधतात्पर्ये सति आत्मन आकाशः सम्भूत इति विरुध्येत। प्रतिपादितञ्चैतत् आकाशोत्पत्तौ गौणत्वशंकासमाधानं यावद्विकारं तु विभागो लोकवदिति[1] इति सूत्रे स्वयमेव भगवत्पादैः। एवञ्च क्वचिद् आकाशादेरमृतत्वनित्यत्वप्रतिपादिनी श्रुतिःस्मृतिरपि आपेक्षिकनित्यत्वे प्रवाहनित्यत्वे वा तात्पर्यवतीति बोध्यम्।

तथा च यथाकाशस्य ब्रह्मजत्वं ब्रह्मणि कल्पितम्, तथैव परमाण्वादेपि बोध्यम्। किञ्च परमाणुकारणवादस्य निराकृतत्वात् परमाणवः सिद्धान्ते न स्वीक्रियन्ते। खण्डितञ्च परमाणुमारणत्वं जगतो भगवत्पादैः—"उभयथाऽपि न कर्मातिस्तदभावः[2]" इति सूत्रेण। अतो ब्रह्मातिरिक्तस्य सर्वस्य प्रपञ्चस्य कल्पितत्वम्, ब्रह्माश्रितत्वञ्च सिद्धम्। मिथ्याभूतस्य सकलस्याश्रयत्वं ब्रह्मणि व्यवहारदशायामेव। ब्रह्मणश्च कार्यत्वाभावान् निराश्रयत्वमिति न तस्य मिथ्यात्वम्।

॥ इति मिथ्यात्वलक्षणविचारः ॥



---

१. ब्र० सू० २।३।७; २. तत्रैव—२।३।२।

# अथ मिथ्यात्वे प्रमाणविमर्शः

अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवैषा गुणादिषु ॥ ८ ।

विमतः पट एतत् तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात्, पटान्तरवत्, इत्यनुमानम् ।

अत्र अत्यन्ताभावस्य प्रामाणिकत्वे व्यावहारिकत्वे वा यथा नाद्वैतविरोधः, तथा प्रतिपादितमस्माभिरधस्तात् । ननु प्रामाणिकाभावप्रतियोग्यऽपि प्रामाणिकं स्यादिति चेत्, न, अत्र नयनप्रसादिनीकाराः ।

नैवं व्याप्तिरस्ति यत् प्रामाणिकाभावप्रतियोगि तत् प्रामाणिकमिति शुक्तीदमंशरजताकारयोरेकज्ञानोपनीतस्य संसर्गस्य प्रमाणिकात्यन्ताभावप्रतियोगिनोऽपि क्वचिदपि देशे कदाचिदपि काले सत्त्वमन्यथाख्यातिवादिभिर्नेष्यते, तथा ख्यातिवादिभिः संसर्गज्ञानाभावे अपि संसृष्टव्यवहारोपनीतस्य संसर्गस्य । तथाऽविज्ञानवादिभिरपि धीरूपं यद् रजतम्, तत्रारोपितस्य वहिष्ट्वस्येत्येवं यथा दर्शनं व्यभिचारादिति[1] ।

अयम्भावः—प्रामाणिकाभावपक्षे तत्प्रतियोगिनोऽपि प्रामाणिकत्वाद् द्वैतापत्तिरिति प्राप्ते, इदमभिहितम् । इदं रजतमित्यादिस्थले अन्यथाख्यातिवादिभिर्नैयायिकैस्तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्येवं रूपं भ्रमात्मकं ज्ञानमेकमेव मन्यते । तत्रैकज्ञानोपनीतस्य हट्टस्थरजतशुक्तिसंसर्गस्य प्रामाणिकाभावप्रतियोगिनः अन्यत्र सत्तां न स्वीकुर्वन्ति । न चाख्यातिवादिनः प्राभाकरा अपि इदं रजतमित्यादिस्थले अनुभवस्मृत्यात्मकज्ञानद्वयालिङ्गितस्य असंसर्गाग्रहप्रयुक्तस्य व्यवहारोपनीतस्य संसर्गस्य प्रामाणिकाभावप्रतियोगिनोऽन्यत्र सत्तां स्वीकुर्वन्ति ।

एवमेव विज्ञानवादिनो बौद्धा अपि बुद्धिरूपं शुक्तौ रजतमिति स्वीकुर्वणा तत्राध्यस्तस्य बाह्यत्वस्य प्रामाणिकाभावप्रतियोगिनः कुत्रचित् सत्तां स्वीकुर्वन्ति । अतो नायं नियमो यत् प्रमाणिकाभावप्रतियोगि प्रामाणिकमिति नोक्तरीत्या द्वैतापत्तिः ।

ननु प्रतिज्ञाहेत्वोर्विरोधः । तथा हि, पटस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं प्रतिज्ञातम्, हेतुश्च तत्रोपात्तो अवयवित्वादिति । तत्रावयवेषु विद्यमानत्वादेवावयवित्वं भवति; अन्यथा निरवयवस्यापि घटादेरपि च अन्यावयवनिरूपितावयवित्वापत्तेः ।

---

१, नयनप्र०, पृ० ७०।

किञ्च अवयवित्वादित्यादिना त्ववयवेषु पटादीनां सत्तैव सिध्यति, न तु तदत्यन्ताभावप्रतियोगित्वम्। एवञ्च यो हि यस्यावयवी, स तन्निष्ठ इति चेत्, न, अवयवित्वादित्यस्य अवयवित्वेन सम्मतत्वादित्यर्थः। एवञ्च वस्तुतः अवयवेषु अवयविनोऽसत्वात् तस्य कल्पितत्वं सिध्यति। तदुक्तं नयनप्रसादिन्याम्— "अवयवित्वाद् अवयवित्वेन सम्मतत्वात्"[१] अवयवित्वेन सम्मतत्वञ्च परेषां सिद्धमेवेति न हेतोरप्रसिद्धिः। अत एव साध्यसिद्धौ अवयवित्वेन सम्मतत्व-सिद्धिः। तत्सिद्धौ च साध्यसिद्धिरिति नान्योन्याश्रयः। घटादेः सर्वेषामपि मतेन अवयवित्वेन सम्मतत्वं विद्यत एवेति भावः।

ननु स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वलक्षणमुक्तं चित्सुखाचार्यैः। स्वाश्रयश्च स्वोपादानम्। एवञ्च स्वोपादाननिष्ठात्यन्ताभाव-प्रतियोगित्वलक्षणलक्षितस्य मिथ्यात्वस्य सिद्धये अनुमानप्रयोगः। नहि केवलं लक्षणेन वस्तुसिद्धिः, अपि तु लक्षणेन यथार्थवस्तुस्वरूपनिर्धारिते प्रमाणेन तत् सद्भावः साध्यते। अत एवोक्तं लक्षणप्रमाणाभ्यां वस्तुसिद्धिः। लक्षणानन्तरं प्रमाणेन वस्तुसत्ता सिद्धये प्रयुक्ते अनुमाने लक्षणमेव साध्यत्वेनाभिधीयते। तथा च तल्लक्षणलक्षितवस्तुनः प्रमाणेन सिद्धिर्भवति। यथा अवेद्यत्वे सति अपरोक्ष-व्यवहारयोग्यत्वरूपे स्वयंप्रकाशलक्षणे लक्षिते तदनन्तरं अनुभूतिः अवेद्या सती अपरोक्षव्यवहारयोग्या अनुभूतित्वादिति प्रयोगः। तथैव प्रकृतेऽपि स्वोपादान-निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति मिथ्यात्वलक्षणानन्तरं "विमतः पटः" स्वोपादाननिष्ठात्यन्ताभावप्रतियोगीति प्रयोगः स्यादिति चेत्, न, अत्र तन्तुपद-मुपादानपरम्, "नेह नानास्ति किञ्चन" (बृ० ४।४।१९) इत्यादिश्रुतिबलात्। तन्तुः पक्षीकृतपटस्योपादानं भवन् सर्वस्यापि प्रपञ्चस्योपादानं लक्षयति। तेन स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वं सिध्यति। उक्तञ्चैतद् अद्वैतसिद्धौ अंशित्वहेतूपपत्तिप्रकरणे।

"न चात्रानेतन्निष्ठत्वमुपाधिः, आकाशादौ साध्याव्यापकत्वात्। नाप्येतद-निष्ठत्वम्, तस्यैव साध्यत्वात्, नाप्येतन्निष्ठत्वरहिततया प्रतीयमानत्वम्, संयोगादौ तव साध्याव्याप्तेः। एतेनैतदवयवानारब्धत्वमपि निरस्तम्। न च द्रव्यत्वं विशेषितम्, गुणादौ साध्याव्याप्तेः। न च द्रव्यत्वविशेषिते साध्ये द्रव्यत्वविशेषितोऽ-ममुपाधिः, व्यतिरेकव्याप्त्यसिद्ध्या पक्षेतरत्वादिति[२]।

अयम्भावः—"विमतः पट" एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वाद् इत्यत्र अनेतन्निष्ठत्वमुपाधिः, अत्र एतत्पदेन एतत्तन्तुर्गृह्यते, तथा च दृष्टान्ते पटान्तरे अनेतन्निष्ठत्वमस्ति, नैतद् अनेतत् तन्निष्ठत्वमनेतन्निष्ठत्वं एतद्भिन्न-निष्ठत्वमित्यर्थः। पटान्तरस्य च एतत्तन्तुभिन्नपटान्तर्गततन्तुनिष्ठत्वमस्ति।

१. नयनप्र० पृ० ६९; २. तत्रैव—पृ० ७२।

साध्यश्च तत्रास्ति, अत उपाधेः साध्यव्यापकत्वमागतम्। पक्षे च पटे एतद्भिन्ननिष्ठत्वं नास्ति, हेतुश्चास्तीति साधनाव्यापकत्वं समागतम्, अतोऽनेतन्निष्ठत्वस्योपाधित्वं युज्यते।

अत्रोच्यते—आकाशादौ साध्याव्यापकत्वाद् नोपाधित्वमस्य सम्भवति, आकाशस्य व्यापकत्वात् क्वापि वृत्तिर्नास्ति। अत एतद्भिन्ननिष्ठत्वमुपाधिर्नास्ति। साध्यश्च तत्रास्ति। एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य तत्र सत्वादिति। किं वा तन्तुपदस्योपादानपरत्वेऽपि आकाशस्य नित्यत्वादुपादानत्वाभावात् साध्यसत्त्वं न विरुध्यते।

ननु अनेतन्निष्ठत्वस्य एतद्भिन्ननिष्ठत्वरूपार्थे कृते आकाशादौ साध्याव्यापकत्वमुपाधेरुक्तम्। यदा च नैतन्निष्ठः, अनेतन्निष्ठः, तस्य भावस्तत्वमित्यर्थः, तदा एतन्निष्ठत्वाभाव एवार्थो भवति। एवञ्चाकाशस्य क्वापि निष्ठत्वाभावाद् एतन्निष्ठत्वाभावाद् उपाधेर्न साध्याव्यापकत्वमिति चेत्, न, साधनाव्यापकत्वाभावात्। अवयवित्वरूपसाधनस्याकाशेऽभावाद् उपाधेश्चोक्तरूपस्य तत्र सत्वात् साधनाव्यापकत्वं न सम्पद्यत इति नोपाधित्वमिति गुरुचरणाः।

ननु एतदनिष्ठत्वमेवोपाधिः स्यात्, तथा हि पटान्तरे आकाशादौ चोपाधेः सत्वाद् न साध्याव्यापकता, पक्षे चोपाधेरभावात् साधनाव्यापकत्वमिति चेत्, न, अस्यैव साध्यत्वात्। न हि साध्यमेवोपाधिः, स्वस्य स्वव्यापकत्वाभावात्।

किञ्च आकाशादौ उपाधेः सत्वात् साधनस्याभावात् साधनाव्यापकत्वमपि बोध्यम्। अयमेव पक्षः पूर्वं समासभेदेन मया व्याख्यातो निरस्तश्च।

ननु एतन्निष्ठत्वरहिततया प्रतीयमानत्वमुपाधिः स्यात्। तथा हि पटान्तरे आकाशादौ चैतन्निष्ठत्वरहिततया प्रतीयमानत्वस्य साध्यस्य च सत्वात् साध्यव्यापकत्वम्। पक्षे चास्य भावात् साधनाव्यापकत्वमिति चेत्, न, अव्याप्यवृत्तिधर्मे संयोगादौ एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य सत्वाद् एतन्निष्ठत्वरहिततया प्रतीयमानत्वाभावात् संयोगस्य एकदेशावच्छेदेन भावोऽभावो वा एतत्तन्तौ विद्यत एवेति संयोगस्य तत्र तन्तौ सत्त्वाद् एतन्निष्ठत्वरहिततया प्रतीयमानत्वाभावाद् उपाधेरभावात् साध्याव्याप्तेः। आकाशादौ च साधनाव्यापकत्वाभावरूपो दोषः पूर्ववदेवात्रापि बोध्यः।

ननु एतदवयवानारब्धत्वमुपाधिः स्यात्, तथाहि पटान्तरादौ एतदवयवानारब्धत्वस्य सत्त्वात् साध्यव्यापकत्वम्, पक्षे च एतदवयवारब्धत्वस्यैव सत्त्वात् साधनाव्यापकत्वमिति। एते अवयवा एतदवयवाः। एतत् पदेन तन्तुर्गृह्यते। अथवा पट एव पक्षीकृतो गृह्यताम्। तत्र पक्षे एतस्यावयवा इति व्याख्यानमिति चेत्, न, संयोगादौ साध्याव्याप्तेः। तथाहि तत्र साध्यस्य उक्तरीत्या सत्त्वेऽपि एतदवयवारब्धत्वमेवास्ति, न तु अनारब्धत्वमिति उपाधेः साध्याव्याप्तिः समागते नोपाधित्वं सम्भवति।

ननु संयोगादिकमव्याप्यवृत्तिधर्ममादायार्थान्तरता निवृत्यर्थम् एतत्तन्तु-निष्ठात्यन्ताभावस्य एतत्तन्तुत्वावच्छिन्नवृत्तित्वेन विशेषणीयत्वात् संयोगादौ एतत्तन्तुनिष्ठैतत्तन्तुत्वावच्छिन्नवृत्यत्यन्ताभावप्रतियोगित्वरूपसाध्यस्याप्यभावाद् एत-दवयवानारब्धत्वस्य एतन्निष्ठत्व रहिततया प्रतीयमानत्वस्य चोपाधेरभावात् कुतः संयोगादौ साध्याव्याप्तेरिति चेत्, न, आकाशादौ साधनाव्यापकत्वाभावात्, तत्रोक्तोपाधेः सत्त्वात् साधनस्य चावयवित्वस्यासत्त्वात् ।

ननु सिद्धान्ते आकाशस्यापि अवयवित्वात् कथं तत्र तदसत्त्वमिति चेत्, न, उपाधेः सिद्धान्तिना अप्रदीयमानत्वात्, ब्रह्मणि वा साधनाव्याकत्वाभावात्, तत्रोपाधेः सत्त्वाद् हेतोरसत्त्वादिति ।

किञ्च उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने अनुमाने एतन्निष्ठप्राग-भावाप्रतियोगित्वस्योपाधित्वात् । तथा हि—'विमतः पटः' एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगी नैतदवयवानारब्धत्वाभावात् ।

यत्रैतदवयवानारब्धत्वाभावः, तत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावः, व्यतिरेके पटान्तरवत् । अर्थाद् यत्रैतदवयवारब्धत्वम्, तत्रैतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वाभाव इति व्याप्तौ एतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिः । पक्षे विमते पटे एतन्निष्ठप्रागभावाप्रतियोगित्वस्यासत्त्वात् साधनाव्यापकत्वम् । दृष्टान्ते पटान्तरे उपाधेः सत्त्वात् साध्यव्यापकताऽपि । अतः साध्याभावोपाध्यभावयोः सम्बन्धस्य व्याप्यव्यापकभावस्य सोपाधिकत्वाद् निरूपाधिकसम्बन्धरूपव्याप्तेरभावान्नैव पूर्वोपाधेरुपाधित्वं सम्भवति । अत एव 'अयं पटः' एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, न एतत्तन्त्वारब्धत्वाद् व्यतिरेकेण पटान्तरवदिति सत्प्रतिपक्षोऽपि परास्तः । यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेक-व्याप्तौ एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वात् सत्प्रतिपक्षस्यासत्त्वादिति । निरूपितञ्चैतद् अद्वैतसिद्धौ अंशित्वहेतूपपत्तिप्रकरणे[1] ।

ननु 'विमतः पटः' एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वादिति चित्सुखी-यानुमान एव कथं नैतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिः । पक्षे एतत् पटे उक्तोपा-धेरभावात् साधनाव्यापकत्वम् । दृष्टान्ते पटान्तरे उपाधेः सत्वात् साध्यव्यापकतेति चेत्, न, आकाशादौ निरवयवे साधनाव्यापकत्वाभावात् । न च सिद्धान्तिनैवोपाधि-र्दत्तः, तन्मते चाकाशस्यापि कार्यत्वाद् अवयवित्वमस्त्येवेति वाच्यम्, ब्रह्मणि अवयवित्वस्याभावाद् एतन्निष्ठप्रागभावाप्रतियोगित्वस्य च विद्यमानत्वात् साधनाव्यापकत्वस्य दुर्घटत्वाद् उपाध्यभावसाध्याभावव्यतिरेकव्याप्तेरसिद्धत्वात् तस्यैवोपाधित्वात् ।

ननु एतन्निष्ठत्वेन रहिततया प्रतीयमानत्वस्य एतदवयवानारब्धत्वस्यानु-

१. अद्वैतसिद्धिः—पृ० ८५ ।

पाधित्वमुक्तं संयोगादौ साध्याव्याप्तेः, तन्न समीचीनम्, तत्रोपाधेः द्रव्यत्वस्यापि विशेषितत्वात्। तथा च द्रव्यत्वविशिष्टतन्निष्ठत्वेन प्रतीयमानत्वाभावस्य द्रव्यत्वविशिष्टैतदवयवारब्धत्वाभावस्य च संयोगादौ सत्वात् न साध्याव्याप्तिरिति चेत्, न, गुणादौ साध्याव्याप्तेः। गुणकर्मादौ साध्यस्य सत्वाद् द्रव्यत्वविशिष्टोक्तोपाधेर्विशेषणाभावप्रयुक्तविशिष्टाभावाद् असत्वात् साध्याव्याप्तिः। न च द्रव्यत्वविशेषिते साध्ये द्रव्यत्वविशेषितोऽयमुपाधिरिति, तथा च न गुणादौ साध्याव्याप्तिरिति वाच्यम्, व्यतिरेकव्याप्त्यसिद्धया पक्षेतरत्वात्। तथाहि यत्र द्रव्यत्वविशिष्टैतदवयवारब्धत्वम्, तत्र द्रव्यत्वविशिष्टैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इति व्याप्तौ द्रव्यत्वस्य व्यर्थत्वात्, एतन्निष्ठप्रागभावाप्रतियोगित्वस्य चोपाधित्वात्। एवञ्च पक्षेतरत्वतुल्योऽयमुपाधिः द्रव्यत्वविशेषणात्।

अंशित्वादित्यस्य कार्यत्वादिति व्याख्याने अविद्यायां भागासिद्धिः, अतः कार्या बुद्धिरिति मन्तव्यम्, कार्या विपरिणामादिति महाभाष्यग्रन्थात् कार्याबुद्धिरिति कैयटः। सा अस्यास्तीति कार्यः बुद्धिविषयः, तत्वाद् दृश्यत्वात् कल्पितत्वादिति व्याख्येयम्।

॥ इति मिथ्यात्वे प्रमाणविमर्शः ॥



# अथ भेदसत्यत्वानुमानखण्डनम्

"यत्तु भेदसत्यत्वे अनुमानमुक्तम्, तदनूद्य निराकरोति" यत् पुनरिति। अयं घट एतद्घटत्वे सति एतन्निष्ठबाध्यभेदत्वानधिकरणभेदाधिकरणं न भवति, द्रव्यत्वात् पटवदित्यादिना सत्प्रतिपक्षतापि द्रष्टव्या। न चैतन्मृदनारब्धत्वमुपाधिः, व्यतिरेकव्याप्त्यसिद्धेः। परसिद्धया च साध्यप्रसिद्धिः[1]।

मिथ्यात्वनिरूपणे पूर्वपक्षे तत्त्वप्रदीपिकायां वियदादेरात्मनां च भेदसत्यत्वसिद्धये अनुमानमुपन्यस्तम्। विवादास्पदीभूतः प्रपञ्चः सत्यः, प्रमाणसिद्धत्वात्, आत्मवत्। 'अयं घटः' एतन्निष्ठबाध्यभेदातिरिक्तभेदाश्रयो द्रव्यत्वात्, पटवदिति। एतयोरनुमानयोः खण्डनं मूल एव कृतम्, अद्वैतागमविरोधाद् बाधादिदोषदुष्टत्वात्। द्वितीयानुमाने नयनप्रसादिन्यां 'अयं घटः' एतन्निष्ठबाध्यभेदत्वानधिकरणभेदाधिकरणं न भवति, द्रव्यत्वात् पटवदिति सत्प्रतिपक्ष उक्तः, तच्च विवेचनीयम्। तथा च समन्वयः। दृष्टान्ते पटे एतद्घटत्वविशिष्टैतन्निष्ठबाध्यभेदत्वानधिकरणभेदानधिकरणत्वं वर्तते। घटत्वसमानाधिकरणस्य एतद्घटनिष्ठबाध्यभेदत्वानधिकरणस्य भेदस्य पटप्रतियोगिकैतद्घटनिष्ठस्यानधिकरणत्वं पटस्येति भावः। हेतुर्द्रव्यत्वं तु स्पष्टमेवास्ति।

अत्रैतद्घटनिष्ठबाध्यभेदत्वानधिकरणभेदानधिकरणत्वमात्रोक्तौ तु पटस्यैतद्घटनिष्ठबाध्यभेदत्वानधिकरणस्य भेदस्य पटप्रतियोगिकस्याधिकरणत्वमेवेति अप्रसिद्धविशेषणता स्यात्, अतो घटत्वसमानाधिकरणेति। तादृशभेदस्य विशेषणम्। एवञ्च तादृशपटप्रतियोगिको भेदो घटत्वसमानाधिकरणो घटे एव, पटस्तु अनधिकरण भवत्येवेति भावः। अयं घटो घटनिष्ठबाध्येत्यादिमात्रोक्तौ तु घटान्तरे एतद्घटप्रतियोगिकभेदमादाय सिद्धसाधनता स्यात्। अत एतदित्युक्तम्।

न चात्र एतन्मृदनारब्धत्वमुपाधिः, तथा हि एतस्मिन् घटे उपाधेरसत्त्वाद् दृष्टान्ते पटे च सत्त्वात् साधनाव्यापकत्वं साध्यव्यापकत्वञ्च सिध्यतीति वाच्यम्, व्यतिरेकव्याप्त्यसिद्धेः। तथाहि यत्रैतन्मृदारब्धत्वम्, तत्र घटत्वसमानाधिकरणैतन्निष्ठबाध्यभेदत्वानधिकरणभेदस्याधिकरणत्वमिति उपाध्यभावसाध्याभावयोर्व्याप्तिः। तथा च 'अयं घटः' एतद्घटत्वसमानाधिकरणैतन्निष्ठबाध्यभेदत्वानधिकरणभेदाधिकरण एतन्मृदारब्धत्वात्, यन्नैवं तन्नैवम्, यथा पट इति अनुमानम्। अत्रोक्तव्याप्तौ एतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वात्। एतन्मृदारब्धत्वस्यैतस्मिन्नेव घटे सत्वात् तदनारब्धत्वस्य पक्षेतरत्वतुल्यत्वान् नोपाधिता।

न च पूर्वानुमान एवैतन्निष्ठप्रागभावाप्रतियोगित्वं कुतो नोपाधिः; साधनाव्यापकत्वाभावादिति बोध्यम्, व्यतिरेकव्याप्त्यसिद्धेश्चेति।

एवञ्च सति भेदो दृश्यमानो न पारमार्थिकः। भेदखण्डने उपपादितं मूल एव।

॥ इति भेदसत्यत्वानुमानखण्डनम् ॥

१. नयन०—पृ० ७४।

# अथ मिथ्यात्वे महाविद्याप्रयोगः

'विमतः संसर्गं एतद्घटैतत्संसर्गान्यतरान्याबाध्यान्यः प्रमेयत्वादिति'[1] इति नयनप्रसादिन्यां महाविद्यानुमानमुक्तम्, तच्च विवेचनीयम्।

एतद्घटैतत्संसर्गान्यतरत्वविशिष्टस्यान्याबाध्यत्वस्याभाववत्वं साध्यम्। तथा च दृष्टान्ते पटे अन्याबाध्यत्वस्य सत्वेऽपि एतद्घटैतत्संसर्गान्यतरत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात् साध्यसमन्वयः। पक्षे च विशेषणांशस्य सत्त्वेऽपि पक्षधर्मताबलाद् विशेष्याभावप्रयुक्तत्वादेव विशिष्टाभावो वाच्यः। एवञ्च पक्षे अन्याबाध्यत्वाभावरूपं मिथ्यात्वं सिद्धमिति भावः। अन्याबाध्यत्वाभाववान् इत्येतावन्मात्रोक्तौ अप्रसिद्धविशेषणता स्यात्, अतो विशेषणदलम्। तावन्मात्रोक्तौ च दृष्टान्ते साध्यविकलता स्यात्। एतद्घटमात्रोक्तौ पक्षे विशेषणाभावप्रयुक्तविशिष्टाभावादेव साध्यसमन्वये पक्षधर्मताबलाद् विशेष्याभावावश्यकत्वाभावाद् अभीष्टार्थसिद्धिर्न स्यात्। संसर्गमात्रोक्तौ तु दृष्टान्ते पटे एतत् ससर्गस्यापि कदाचित् सत्त्वात् साध्यसमन्वयो न स्यात्। अतो लक्षणप्रमाणाभ्यां मिथ्यात्वं सिध्यति।

ननु मिथ्यात्वलक्षणे स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वलक्षणे स्वाश्रयत्वेनाभिमतपददानेन शुक्तिरजतेऽपि मिथ्यात्वं सिध्यति; किन्तु 'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते' इत्यादौ ब्रह्मणोऽपि भ्रमात्मकस्वाश्रयत्वमादाय तन्निष्ठात्यन्ताभावप्रतियोगित्वात् मिथ्यात्वं स्यात्, अर्थान्तरं वा स्यादिति चेत्, न, स्वाश्रयत्वेनाभिमतयावन्निष्ठान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वस्य मिथ्यात्वात्। एवञ्च स्वाश्रयत्वेनाभिमतसर्वभूतनिष्ठोऽभावो नान्यूनसत्ताकः; अपि तु न्यूनसत्ताकस्तस्य व्यावहारिकत्वात्। नन्वेवमपि ब्रह्मणि तादात्म्येन ब्रह्म नेत्यतिव्याप्तिरिति चेत्, न, स्वाश्रयत्वेनाभिमतयावन्निष्ठस्ववृत्तिधर्मानवच्छिन्नस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति लक्षणात्।

अथवा अज्ञानविशिष्टत्वं मिथ्यात्वम्, वै० स्वतादात्म्यस्वकार्यत्व-स्वाधीनस्थितिकत्वैतदन्यतमसम्बन्धेन। स्वतादात्म्यसम्बन्धनिवेशेन स्वस्मिन् मिथ्यात्वसिद्धिः। स्वकार्यत्वनिवेशेन प्रपञ्चे कार्ये। तृतीयसम्बन्धनिवेशेन चाविद्याचित् सम्बन्धादौ अनादिपदार्थे इति गुरवः। आधेयताविशिष्टप्रतियोगितावत्वं वा मिथ्यात्वम्, वै० स्वाच्छेदकावच्छिन्नत्वस्वनिरूपकाधिकरणातावन्निष्ठात्यन्ताभावनिरूपकत्वैतद्द्वयसम्बन्धेन। तथा च शुक्तिरजतस्थले स्वम् आधेया रजतनिष्ठा, तदवच्छेदकं रजतत्वम्, तदवच्छिन्नत्वं रजतनिष्ठप्रतियोगितायाम्। स्वम् आधेयता, तन्निरूप-

१. नयन० पृ० ८०।

काधिकरणतावती शुक्तिः, तन्निष्ठाभावनिरूपकत्वं रजतनिष्ठप्रतियोगितायामिति रजतस्य मिथ्यात्वं सिध्यति। केवलप्रथमसम्बन्धनिवेशाद् हट्टस्थस्य रजतस्यापि रजतत्वावच्छिन्नत्वात् तस्यापि तत्त्वात्। द्वितीयसम्बन्धमात्रनिवेशे च घटादेरपि तत्त्वात्, अत उभयनिवेशः।

अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्यादि प्रयोगे अव्याप्यवृत्तित्व-मादायार्थान्तरतानिवृत्यर्थं समवायसम्बन्धेनैकावच्छेदेनेति विशेषणं देयम्। एवमेव अयं पटो घटत्वेनैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्यादिरूपेण व्यधिकरणधर्म-मादायार्थान्तरता स्यात्, तद्वारणाय व्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्व-मत्यन्ताभावे विशेषणं देयम्। तथा तत्रैतत्कालिकत्वमपि विशेषणं निवेश्यम्, तेन पटोत्पत्तिकालीनमत्यन्ताभावमादाय नार्थान्तरता। तथा व्यासज्यवृत्तिधर्मानव-च्छिन्नप्रतियोगिताकत्वमपि अभावे विशेषणम्, अन्यथा एतत्तन्तुषु पटसत्त्वे अपि पटघटोभयं नेति पटघटोभयत्वावच्छिन्नप्रतियोगिताकपटघटात्यन्ताभावमादाय अर्थान्तरता स्यात्। अतः 'अयं पटः' समवायसम्बन्धावच्छिन्ननिरवच्छिन्नव्यधि-करणधर्मानवच्छिन्नपटकालवृत्तिव्यासज्यधर्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावप्रति-योगीति प्रयोगः समीचीनः। उपपादितञ्चैद् वेदान्तपरिभाषाशिखामणिमणि-प्रभायाम्। अत एवाद्वैतसिद्धौ—"येन सम्बन्धविशेषेण येन वावच्छेदकविशेषेण यदधिकरणता प्रतीतिर्यत्र भवितुमर्हति, तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदक-विशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम्[1]" इत्यादि प्रोक्तमिति दिक्।

॥ इति मिथ्यात्वलक्षणप्रमाणनिरूपणविचारः ॥

●

१. अद्वैतसिद्धिः—पृ० ३२।

## अथानिर्वचनीयभावरूपाज्ञानेऽनुमानप्रमाणविचारः

देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः ।
अनादेर्ध्वंसिनी मात्वाद् अविगीतप्रमा यथा ॥

विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद् यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम् । ये तु प्रमा प्रागभावनिवृत्तिरेव, न तु निवर्तिकेति मन्यते, तान् प्रति देवदत्तप्रमा तन्निष्ठप्रमाभावातिरिक्तानादिनिवृत्तिरिति प्रयोक्तव्यम्[1] । इत्थमत्र प्रयोगः—देवदत्तप्रमाणज्ञानमेतन्निष्ठप्रमाणाभावत्वानधिकरणानादिनिवर्तकम्, प्रमाणत्वाद् यज्ञदत्तप्रमाणवत्[2] ।

अत्रानुमाने दृष्टान्ते साध्यसमन्वयः । यज्ञदत्तप्रमायां देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्वीयप्रागभावस्यानादेर्निवर्तकत्वमस्त्येव प्रमात्वरूपहेतुरपीति । एवञ्च पक्षधर्मताबलात् पक्षेऽपि साध्यसमन्वयाय देवदत्तीयप्रमाप्रागभावातिरिक्तानादिः कश्चिद् भावो मन्तव्यः । स चाज्ञानमेव ज्ञानेन स्वप्रागभावातिरिक्तस्वाज्ञानस्यैव निवर्तनात् ।

अनादिनिवर्तकमित्युक्ते प्रागभावमादायार्थान्तरता । अतोऽभावातिरिक्तेति । तावत्युक्तौ त्वप्रसिद्धविशेषणता, अतो देवदत्तनिष्ठेत्युक्तम् । यज्ञदत्तनिष्ठप्रमाणे देवदत्तनिष्ठप्रमाभावातिरिक्तानादेस्तत्प्रागभावस्य निवर्तकत्वं सुप्रसिद्धम् । पूर्वज्ञानसुखादिव्यवच्छेदार्थमनादिग्रहणम् । ननु देवदत्तप्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वमुपाधिः । तथाहि पक्षे अस्यासत्त्वात् साधनाव्यापकत्वम्, दृष्टान्ते च देवदत्तप्रमाप्रागभावातिरिक्तस्वीयप्रागभावनिवर्तकत्वस्य सत्त्वात् साध्यव्यापकत्वमिति चेत्, न, देवदत्तप्रमाप्रागभावातिरिक्ततदीयव्यवहारप्रागभावस्यापि निवर्तकत्वाद् उपाधेः पक्षेऽपि सत्त्वात् साधनव्यापकत्वात् । ननु देवदत्तनिष्ठप्रमाणज्ञानस्य देवदत्तनिष्ठप्रमाप्रागभावातिरिक्ततदीयव्यवहारप्रागभावस्य निवर्तकत्वे अर्थान्तरता स्यात्, सिद्धसाधनं वेति चेत्, न, साध्यदले साक्षाद् निवर्तकत्वस्य निवेशात् प्रमाणज्ञानेन च साक्षाद् निवर्त्यत्वमज्ञानस्यैव, न तु व्यवहारप्रागभावस्येति । तस्य निवर्तकता तदीयव्यवहारस्यैवेति नार्थान्तरादिदोषः ।

अथवा देवदत्तप्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वस्य देवदत्तप्रमाणमात्रे असत्वात् पक्षेतरत्वतुल्योऽयमुपाधिः, पक्षेतरत्वस्येव पक्षेतरत्वतुल्यस्यापि अनुपाधित्वात्, अन्यथानुमानोच्छेदप्रसङ्गः ।

---

१. चि० पृ० ६८; २. नयनप्र० पृ० ९८ ।

ननु प्रमात्वमीश्वरप्रमायां तत्र च देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकत्वं नास्ति। तस्या नित्यत्वात् प्रागभावस्यासत्वाद् अतो व्यभिचार इति चेत्, न, ईश्वरप्रमायाः साधारणकारणत्वात् तस्या सर्वस्यापि निवर्तकत्वाद् यज्ञदत्तप्रागभावस्यापि निवर्तकत्वमस्त्येवेति देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकत्वस्य साध्यस्यापि सत्त्वाद् व्यभिचाराभावात्।

ननु विवादपदम् ( देवदत्तप्रमा ) अनादेर्भावस्य निर्वर्त्तकं न भवति, पदार्थत्वाद् घटादिवदिति प्रत्यनुमानविरोध इति चेत्, न, यद्यनेन प्रतिरोधेन अनादिभावस्य कस्यचिद् निवर्तकत्वाभावः साध्यते चेत्, सत्ताद्रव्यत्वादेरपि अनिर्वर्तकत्वेन सिद्धसाधनम्। यदि चोभयसम्मतानादिभावव्यतिरिक्तानादेर्भावस्य अभावविलक्षणस्यानिवर्तकत्वं साध्यते, तदा तादृशस्यानादेर्भावस्याभावविलक्षणस्य तव मतेऽसम्भवत्वाद् अप्रसिद्धविशेषणतापत्तेः।

अथ विगीता प्रमा, प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वात्, यज्ञदत्तप्रमावदिति प्रतिरोधः। तथा च प्रमा प्रागभावातिरिक्तैतन्निष्ठानादेः सुखादिप्रागभावस्यानिवर्तकत्वमन्यदीयप्रमायां प्रसिद्धमिति नाप्रसिद्धविशेषणता। अत्रैतन्निष्ठेति निवेशाभावे दृष्टान्तासिद्धिः। यज्ञदत्तप्रमाया एतत् प्रमाभावातिरिक्तस्वप्रमाप्रागभावस्य निवर्तकत्वाद् एतन्निष्ठस्यानादेरनिवर्तकत्वमित्येवोक्तौ तु बाधः। एतन्निष्ठस्यानादेः प्रागभावस्य निवर्तकत्वात् पक्षे साध्याभावात्, अत प्रमाभावातिरिक्तेति। प्रत्यासत्त्या प्रमापदेन पक्षीकृतप्रमैव ग्राह्या।

न चाभावातिरिक्तत्वमेवास्तु विशेषणम्, किं प्रमापदेन निविष्टेनेति वाच्यम्, अप्रसिद्धविशेषणतापत्तेः। दृष्टान्ते यज्ञदत्तीयप्रमाभावातिरिक्तस्यानादेः कस्यचित् अनिवर्तकत्वाप्रसिद्धेः। सुखादिप्रागभावस्यैतन्निष्ठस्य निवर्तकत्वानधिकरणत्वं यज्ञदत्तीयप्रमायां प्रसिद्धमिति अभावातिरिक्तत्वनिवेशे च सुखादिप्रागभावातिरिक्तस्य कस्यचिदनिवर्तकत्वासिद्धेः। अतः प्रमाभावातिरिक्तेत्युक्तम्। एवञ्च एतदिति प्रमायामनिवेशेनापि न कश्चिद् दोष इति चेत्, न, देवदत्तनिष्ठं प्रमाणज्ञानं देवदत्तनिष्ठानाद्यभावानिवर्तकत्वानधिकरणं प्रमाणज्ञानत्वाद् यज्ञदत्तप्रमाणज्ञानवदिति अनुमानाभाससमानयोगक्षेमत्वात्। तथाहि आभासत्वमस्यानुमानस्य बाधादिदोषदुष्टत्वाद् बोध्यम्। देवदत्तप्रमाणज्ञाने देवदत्तनिष्ठानाद्यभावस्य तत्प्रागभावस्य निवर्तकत्वात्। तथैव प्रकृतेऽपि प्रमायाः प्रमाभावातिरिक्तैतन्निष्ठानादेरज्ञानस्य निवर्तकत्वाद् बाधादिदोषः प्रभवति।

किञ्च एतदसमवेतत्वस्य एतदन्यसमवेतत्वस्य चोपाधित्वाद् अपि आभासता। तथा हि देवदत्तनिष्ठे प्रमाणज्ञाने एतदन्यसमवेतत्वस्यासत्वाद् एतदसमवेतत्वस्य वा असत्वात् साधनाव्यापकत्वम्। दृष्टान्ते यज्ञदत्तप्रमायां चोपाधेः सत्वात् साध्यव्यापकत्वमिति। एवञ्च हेतोः सोपाधिकत्वाद् व्याप्यत्वासिद्धेः। तथैव प्रकृतेऽपि

'विगीता प्रमा' प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वात् यज्ञदत्तप्रमावदित्यत्रापि उक्तोपाधेः सत्त्वाद् दोषः।

"न च देवदत्तप्रमा देवदत्तनिष्ठत्वे सति देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वानधिकरणं प्रमात्वाद् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षता[1]"।

अयम्भावः—यज्ञदत्तप्रमायां देवदत्तनिष्ठत्वसमानाधिकरणं देवदत्तप्रमा वातिरिक्तानादेर्निवर्तकत्वानधिकरणत्वमस्त्येवेति तत्र साध्यसमन्वयः। अत्र देवदत्तनिष्ठत्वाभावे दृष्टान्तः साध्यविकलः स्यात्, तत्र देवदत्तप्रमाभावातिरिक्तस्य स्वीयप्रमाप्रागभावस्यानादेर्निर्वर्तकत्वात्।

पूर्वंप्रदत्तसत्प्रतिपक्षेनात्र भेदः। तत्र प्रमासामान्यस्य ग्रहणम्, इह तु देवदत्तीया प्रमैत्र साध्यकुक्षौ प्रविष्टा इति बोध्यम्। एवञ्च सत्प्रतिपक्षता स्यादिति चेत्, न, एतन्निष्ठनिवर्तकत्वानधिकरणत्वस्योपाधित्वात्। तथा हि पक्षे देवदत्तप्रमायामुपाधेरभावात् साधनाव्यापकत्वम्। तत्रैतन्निष्ठनिवर्तकत्वाधिकरणत्वस्यैव सत्त्वात्। दृष्टान्ते च साध्यव्यापकत्वमिति भवत्युपाधित्वमस्य। तथा च साध्यव्यापकोपाध्यभावेन साध्याभावसाधनस्योपाधेः प्रयोजनत्वात् प्रकृते यत्रैतन्निष्ठनिवर्तकत्वानधिकरणत्वं नास्ति, तत्र देवदत्तनिष्ठत्वसमानाधिकरणदेवदत्तप्रमाभावातिरिक्तानादेर्निवर्तकत्वानधिकरणत्वं नास्तीति उपाध्यभावसाध्याभावयोर्व्याप्तिः। गृहीता चेयमेतत्सुखादौ। तत्र हि एतत्सुखप्रागभावरूपानादेर्निवर्तकत्वाद् एतन्निष्ठनिवर्तकत्वानधिकरणत्वाभावोऽस्त्येव। देवदत्तनिष्ठत्वसमानाधिकरणदेवदत्तप्रमाप्रागभावातिरिक्तानादेः सुखादिप्रागभावस्य निवर्तकत्वाद् उक्तसाध्याभावोऽप्यस्त्येवेति एतत्सुखादौ व्यतिरेकव्याप्तिसिद्धेः, उक्तानुमानस्य हीनबलत्वात् सत्प्रतिपक्षत्वाभावात्। एवञ्चायमुपाधिः विगीता प्रमा प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वाद् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षेऽपि योज्यः। एवञ्च सिद्धान्तानुमानं निर्दुष्टम्।

किञ्चोक्तेषु सत्प्रतिपक्षेषु देवदत्तनिष्ठप्रमाभावातिरिक्तानादेर्निवर्तकत्वाभावः साध्यः। तत्र तादृशानादेः निवर्तकत्वं प्रसिद्धमप्रसिद्धं वेति उभयत्र व्याहृतिः। अप्रसिद्धौ तद् घटितसाध्यस्यापि अप्रसिद्धचा साध्याप्रसिद्धेः। प्रसिद्धिश्च यदि पक्षे, तदा तत्र तदभावासिद्धेः। अन्यत्र च प्रसिद्धिः सम्भावितापि नास्ति। देवदत्तगतानादिनिवर्तकत्वं तदतिरिक्तप्रमायां न सम्भवति। ननु सिद्धान्तानुमाने प्रमापदेन प्रमात्वव्याप्यस्य सर्वस्य ग्रहणे साक्षिज्ञानस्यापि ग्रहणात् तत्र सुखादिसाक्षिज्ञाने देवदत्तनिष्ठे प्रमात्वस्य सत्त्वेऽपि देवदत्तप्रमाभावातिरिक्तानादेः निवर्तकत्वाभावाद् बाधः स्यात्, साक्षिज्ञानस्याज्ञाननिवर्तकत्वाभावादिति चेत्, न, अत्र प्रमापदेन अन्तःकरणवृत्तेरेव ग्रहणात्।

---

१. न० प्र० पृ० ९९।

ननु येषां मते सुखाद्याकारान्तःकरणवृत्तिः कल्प्यते, तन्मते सुखादिज्ञानस्यापि प्रमापदेन ग्रहणम्। यथोक्तं वेदान्तपरिभाषायाम्—"अन्तःकरणतद्धर्माणां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्युपगमेनोक्तलक्षणस्य तत्रापि सत्त्वाद् नाव्याप्तिः। न चान्तःकरणं तद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यम्, न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिविषयत्वम्; किन्तु इन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्। अत एवाहङ्कारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता। अत एव प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता। तथा चान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः[१]"।

एवञ्च सुखादीनामपि वृत्तेरभ्युपगमे प्रमापदेन तस्या अपि ग्रहणे बाधः स्यादेवेति चेत्, न, सुखादीनां वृत्तिं विनैव साक्षिवेद्यतेति मते तस्यानुमानस्य प्रवृत्तत्वात्। अत एव एतच्चित्सुखीयानुमानविवरणप्रस्तावे अद्वैतसिद्धौ उक्तम्—"सुखादिज्ञानेषु न बाधः, अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः[२]"। एतेन मधुसूदनसरस्वतीभिः स्पष्टमेवाभिहितं यत् सुखादीनां वृत्तिर्न भवतीति।

ननु सुखादीनां वृत्त्यनभ्युपगमे तेषां कथं प्रत्यक्षत्वम्? विषयप्रत्यक्षत्वप्रयोजकत्वस्य स्वविषयवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्नसत्ताकत्वस्य तत्राभावात्। एवञ्च सुखादिज्ञानस्यापि प्रत्यक्षत्वप्रयोजकत्वस्यान्तःकरणावच्छिन्नचैतन्यवृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्यस्याभेदस्य तत्राभावात्।

किञ्च सुखादीनां वृत्त्यनभ्युपगमे सुखादिज्ञानं न सुखादिवृत्त्यवच्छिन्नं चैतन्यम्; अपि तु शुद्धचैतन्यमेव तथा च तादृशस्यानुभवस्य नित्यस्य चैतन्यस्य संस्कारजनकत्वाभावेन तेषां स्मरणं नोपपद्येत इति चेत्, न, सुखादीनां वृत्त्यनभ्युपगमे अपि तेषां साक्षिणा साक्षात्सम्बद्धत्वात् स्वसत्तायां प्रकाशाव्यभिचारित्वाच्च आवरणाभावात्, तद्भङ्गार्थं नित्यमेव चिदुपरक्तत्वात् चिदुपरागार्थमभेदाभिव्यक्त्यर्थं वा वृत्तेः कल्पनं व्यर्थमेव। उक्तप्रत्यक्षलक्षणस्य सन्निकर्षजप्रत्यक्षानुगतत्वे बाधकाभावाद् मानसप्रत्यक्षस्थले साक्षिभास्यत्वस्यैव लाघवात् कल्पनीयत्वात्। तत्र वृत्तिकल्पनेऽपि नान्तःकरणपरिणामरूपत्वं तस्या अपि तूल्लासमात्रत्वम्।

यदि उल्लासोऽपि मनःपरिणाम एव, तर्हि प्रकृतानुमाने देवदत्तप्रमापदेन आवरणभङ्गार्थान्तःकरणपरिणामरूपवृत्तेरेव ग्रहणं बोध्यम्।

ननु किमर्थं वृत्त्यभ्युपगम इति कथं न जीवोऽपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव विषयं प्रकाशयतीति चेत्, न, ब्रह्मचैतन्यं तावत् सर्वोपादानतया सर्वप्रपञ्चतादात्म्यापन्नं संसृष्टं सर्वमवभासयति, न जीवचैतन्यं तस्योपहितत्वात्। यद्यपि

१. वेदान्तपरिभाषा—पृ० ८३;

२. अद्वैतसिद्धिः—पृ० ५४७।

जीवोऽपि सर्वगतः, तथापि अनुपादानत्वात् न सर्वसङ्गी। ननु सर्वासङ्गीजीवः किमपि नावभासयेतेति चेत्, न, असङ्गी अपि केवलं स्वभावात् मनःसङ्गीति। एवञ्च अन्तःकरणस्य प्रकाशकत्वात् तद्वृत्तिद्वारा विषयदेशं गतः सन् विषयावच्छिन्नचैतन्येनाभेदापन्नो विषयस्यापि अनावृत्तस्य प्रकाशकः। अत एवोक्तं सिद्धान्तलेशसंग्रहे—

> बुद्धौ संसृज्यते जीवः सर्वगो व्यक्तिजातिवत्।
> अन्यैस्तद्वृत्त्युपारूढो ज्ञाता विवरणे स्थितः ॥ ६२।
> यद्वान्तःकरणोपाधिर्जीवो वृत्त्या बहिर्गतः।
> विषयब्रह्मचैतन्याभेदव्यक्त्यार्थभासकः ॥ ६३।
> अथवा सर्वगोऽविद्याकृतोऽसौ न प्रकाशते।
> बुद्धावनावृत्तो वृत्तिभग्नावरणभासकः ॥ ६४।
> वृत्तेश्चिदुपरागो वा अभेदव्यक्तिरेव वा।
> फलमावृत्तिभङ्गो वा तत्राद्यं कीदृशं भवेदिति[1] ॥ ६५।

तत्राद्वैतसिद्धावपि "तथा हि अन्तःकरणं चक्षुर्वत्तेजोऽवयवि, तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति। यथा नद्याद्युदकं प्रणाल्या निःसृत्य केदाराद्याकारं भवति, सैव वृत्तिरित्युच्यते। तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतमन्तःकरणोपाधिकं सत् परिच्छिन्नमिति मतद्वयम्। तत्राद्ये विषयप्रकाशकं जीवचैतन्यम्, द्वितीये ब्रह्मचैतन्यम्। आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृतम्, आवृतञ्चेति। तत्राद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था, द्वितीये त्वावरणाभिभवार्था। परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशकत्तदधिष्ठानचैतन्याभेदाभिव्यक्त्यर्था। अनावृत्तत्वपक्षे हि अनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः, असङ्गत्वात्। यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्यते, न तु केसरादिमद्व्यक्त्या।

यथा वा प्रदीपप्रभा आकाशरसगन्धव्यापित्यपि तानप्रकाशयन्ती रूपसंसगितया रूपमेव प्रकाशयति, तद्वत् केवलाग्न्यदाह्यस्यापि अयःपिण्डादिसमारूढाग्निदाह्यवच्च केवलचैतन्याप्रकाशस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तम्। एवञ्चानावृत्तत्वपक्षे तत्र तदाकारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तदर्थप्रकाशः। अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्यावच्छेदकान्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्यक्तौ तत्तदर्थप्रकाशो

---

१. सिद्धान्तलेशः—पृ० १४६।

यद्यपि प्रकाशकमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं चान्तःकरणावच्छिन्नम्, तथापि चैतन्याभेदेनाभिव्यक्तत्वाद् व्यवस्थोपपत्तिः[1]।

एवञ्चानेन ग्रन्थेन ज्ञायते यदन्तःकरणस्य बहिर्विषयाकारपरिणाम एव वृत्तिपदेनोच्यते। आन्तरधर्मादीनां या वृत्तिर्नैव सा परिणामः, अपि तु आकाराख्यः कश्चिदुल्लासरूपः। अन्यथाऽन्तःकरणतद्धर्मादीनां त्रयाणामपि प्रयोजनानामभावाद् वृत्तिकल्पनं व्यर्थमेव स्यात्। अतस्तेषां केवलं साक्षिवेद्यत्वं सिद्धं भवति। केवलपदेन च वृत्तेर्निरासः। वृत्तिमनपेक्ष्य साक्षिवेद्यत्वमित्यर्थः। वेदान्तपरिभाषाकारमतेन च तत्रापि वृत्तिः कल्पनीया। प्रकृतानुमानञ्च येषां मते सुखादीनां वृत्तिर्नास्ति, तेषां मते बोध्यम्। एतन्मते अन्तःकरणतद्धर्माणां केवलसाक्षिवेद्यतैव सुखादीनाञ्च तथैवापरोक्षत्वमिति दिक्।

॥ इत्यनिर्वचनीयभावरूपाज्ञानेऽनुमानप्रमाणविमर्शः ॥



१. अद्वैतसिद्धिः—पृ० ३४४।

# अथ विवरणोक्तमनुमानम्

एवञ्च तादृशाज्ञाने विवरणोक्तमनुमानमपि प्रमाणम्। तथाहि विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति।

अत्र ज्ञानमात्रस्य पक्षत्वे अनुवादज्ञानस्यापि ग्रहणात् तत्र हेत्वसिद्धिः, अतः **प्रमाणेति**। धारावाहिकव्यावृत्तये विमतमिति। प्रमाणञ्च वृत्तिरेव गृह्यते, अन्यथा सुखादिप्रमायां बाधः स्यात्, तस्याः साक्षिचैतन्यरूपत्वात्, अज्ञानानिवर्तकत्वात्। वस्तुपूर्वकमित्येवोक्तौ स्वाश्रयेणात्मना सिद्धसाधनता स्यात्, अतो वस्त्वन्तर-पूर्वकमित्युक्तम्। स्वाश्रयातिरिक्तसामग्रीचक्षुरादिनिवृत्त्यर्थं स्वदेशगतेति। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमात् पूर्वज्ञानस्य निवृत्त्यर्थं स्वविषयावरणेति। अदृष्टादिव्यावृत्त्यर्थं स्वनिवर्त्येति। प्रागभावव्यावृत्त्यर्थं प्रागभाव-व्यतिरिक्तेति।

अभावस्यावारकत्वं नास्तीति मते तु साध्यद्वयं बोध्यम्, स्वप्रागभावव्यतिरिक्त-स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्, स्वविषयावरणस्वनिवर्त्यस्वदेशगत-पूर्वकमित्यपरम्। एवञ्चानुमानद्वयं बोध्यम्।

हेतुकोटौ, धारावाहिकज्ञानेषु व्यभिचारवारणाय अप्रकाशितेति। धारावा-हिकप्रभासूभयवैकल्यं वारयितुं प्रथमेति। आतपवति देशे समुत्पन्नदीपप्रभायां व्यभिचारं वारयितुमन्धकारेति। न चात्र चक्षुर्ग्राह्यत्वमुपाधिः। तथाहि दृष्टान्ते प्रथमोत्पन्नप्रदीपप्रभायां तस्योपाधेः सत्त्वात् साध्यव्यापकता, पक्षे चासत्वात् साधनाव्यापकतेति वाच्यम्, तस्य पक्षेतरतुल्यत्वात्। अत्र पक्षेतरत्वं पक्षमात्रा-वृत्तित्वम्, न तु पक्षेतरमात्रवृत्तित्वमिति बोध्यम्।

ननु धारावाहिकबुद्धिव्यावृत्तये विमतमित्युक्तं तन्न युक्तम्, धारावाहिक-बुद्धीनामनधिगताबाधितविषयज्ञानत्वरूपप्रमात्वोपपत्तये तत्तत्क्षणावच्छिन्नार्थ-विषयत्वमवश्यं वक्तव्यम्। तथा च तासामपि क्षणविशेषणेन अज्ञातज्ञापकत्व-मस्त्येव, कालस्य च सर्वप्रमाणवेद्यत्वाभ्युगमात्। उक्तञ्च वेदान्तपरिभाषायां "नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमाद् धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञाना-विषयतत्तत्क्षणविशेषविशिष्टविषयत्वेन न तत्राव्याप्तिः[1]।'

अद्वैतसिद्धावपि "धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयत्वे-नाज्ञातज्ञापकत्वमस्त्येव। कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्[2]" इति चेत्,

१. वे० प० पृ० २०;
२. अद्वैतसिद्धिः—पृ० ५३५।

सत्यम्, इदं रजतमित्यादिस्थले इदमाकारवृत्तेरज्ञानानिवर्तकत्वात् तद्व्यावृत्त्यर्थं विमतमिति देयम्। न च तस्या वृत्तेरपि अज्ञातज्ञापकत्वरूपप्रमात्वोपपत्तिर्न स्यादिति वाच्यम्,तत्र सुखादिप्रमावद् अबाधिततत्वमादाय प्रमात्वोपपत्तिः, न तु तदुपपत्तस्तदविषयाज्ञानकल्पन युक्तम्, अन्यथा इदमाकारो भ्रमः संशयो वा स्यात्। अत एवोच्यते—"धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः। यदि च भ्रमसंशयाजनकमपि इदमाकारमज्ञानं स्वीक्रियते, तन्निवृत्तिश्च इदमाकारप्रमाणेनेति, तदा सा वृत्तिरपि पक्षे प्रविष्टैवेति विमतमिति पदं न देयम्। एवञ्च प्रमाणवृत्तित्वावच्छेदेनैवाज्ञाननिवर्तकत्वं बोध्यम्। परोक्षप्रमाया अपि असत्त्वापादकावरणरूपाज्ञाननिवर्तकत्वमस्त्येवेति, न तत्र बाधः।

ननु 'सदेव सोम्येदमग्र आसीत्'इत्यादिश्रुतिबलात् सत्कार्यवादे अद्वैतमते स्वोपादाने कार्यस्य विद्यमानत्वात् कथं प्रागभाव उपपद्यते? आरम्भवादे च नैष दोषः, घटस्य स्वोत्पत्तेः प्रागसत्वाद् अस्त्येव प्रागभाव इति।

किञ्च सिद्धान्ते कारणे कार्यस्य प्रागभावो यदि स्वीक्रियते, तदा कार्यकारणयोर्भेदोऽपि किं वा कार्यस्य कारणातिरिक्तत्वमपि गले पतितमिति चेत्, न, अस्यानुमानस्य परमतेन प्रवृत्तत्वात्। स्वमते "तम आसीद्", "अज्ञानेनावृतं ज्ञानम्" इत्यादि-श्रुति-स्मृत्योः प्रबलप्रमाणेनानुमानस्यानुपयोगात्, श्रुत्यर्थे चाविवादात्। येषां तु श्रुत्यर्थे विवादः, तदर्थमयमनुमानप्रयोगः।

किञ्च सत्कार्यवादे अपि प्रागभावः समर्थयितुं शक्यते। तथाहि घटादेः स्वोपादाने मृत्तिकायां सत्त्वेऽपि स्वेन कम्बुग्रीवादिमद्रूपेण घट इति नाम्ना च तत्रासत्त्वात्, तेन रूपेण पूर्वमभावोऽनुभूयत एवेति कार्यं स्वोत्पत्तेः पूर्वं कारणे कारणात्मना सदिति सत्कार्यवादाभिप्रायः। न तु स्वेन नाम्ना रूपेण च पूर्वं विद्यमानमित्यर्थः। एवञ्च कार्यस्य कारणाद् अनन्यत्वमपि सिद्धम्। यथोक्तम् आरम्भणाधिकरणे—"सत्त्वाच्चावरस्य[1]" इति सूत्रे भगवत्पादैः "इतश्च कारणात् कार्यस्यानन्यत्वम्, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते—"सदेव सोम्येदमग्र आसीत्[2]", "आत्मा वा इदमेक एवाग्र आसीत्[3]" इत्यादौ इदशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्याद् यच्च यदात्मना यत्र न वर्तते, न तत् तत उत्पद्यते, यथा सिकताभ्यस्तैलम्। तस्मात् प्रागुत्पत्तेरनन्यत्वाद् उत्पन्नमपि अनन्यदेव कारणात् कार्यमित्यवगम्यते। यथा च कारणंब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति, एकञ्च पुनः सत्त्वमतोऽनन्यत्वं कारणात् कार्यस्य[4]"।

---

१. ब्र० सू० २।१।१६; २. छा० ६।२।१; ३. ऐ० आ० ३।४।१ १।
४. ब्रह्मसूत्रभाष्यम्—पृ० २०२।

विस्तरेण च "तदनन्यत्वमारम्भणशब्दादिभ्यः[1]" इति सूत्रे भगवत्पादैरेतत् प्रतिपादितम्। एवञ्च कारणात्मना कार्यस्य कारणेऽवस्थितिः। कारणात्मना च कार्यस्यानन्यत्वं सिद्धं भवति। नाम्ना स्वरूपेण च व्यावहारिको भेदोऽपि उपपन्नो भवति। एवञ्च सिद्धान्तेऽपि कार्यरूपेण कारणे प्रागभावोऽस्त्येवेति। उक्तञ्च परापरज्ञैः श्रीवाचस्पतिमिश्रैर्भामत्यां समन्वयाधिकरणे—"कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्तः। तथाहि आत्यन्तिके अभेदे अन्यतरस्य द्विरवभासप्रसङ्गः। भेदे चात्यन्तिके न सामानाधिकरण्यम्, नहि भवति कुण्डं बदरमिति नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति। सोऽयमबाधितो असंदिग्धः सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति। तथा च कार्याणां कारणात्मत्वात् कारणस्य च सद्रूपस्य सर्वत्रानुगमात् सद्रूपेणाभेदः कार्यस्य जगतो भेदः कार्यरूपेण गोघटादिनेति। यथाहुः—

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाभेदः कुण्डलाद्यात्मना भिदा[2]॥ इति।

स्वरूपेण कार्यकारणयोर्भेदो न पारमार्थिकः। उक्तञ्च—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्[3]" वाचैव केवलमस्तीत्यारभ्यते विकारः—घटः, शराव इति भावः। कार्यनानात्वमेव नेह नानास्ति किञ्चनेत्यादि श्रुत्योच्यते बाध्यते च। एवञ्च सिद्धान्ते प्रागभावस्य व्यावहारिकस्य सत्त्वेऽपि न क्षतिः।

ननु ज्ञानमज्ञानस्यैव निवर्तकमिति नियमात् स्वनिवर्त्यपदेनैव स्वप्रागभावस्यापि व्यावृत्तेः किमर्थं तदतिरिक्तत्वनिवेशेनेति चेत्, न, अत्रानुमाने स्वनिवर्त्येति पदं दत्तम्, न तु निवर्तकतावच्छेदकरूपं निविष्टम्। तथा च प्रमायाः प्रमात्वेन रूपेण अप्रमानिवर्तकत्वेऽपि प्रतियोगित्वेन रूपेण प्रागभावस्यापि निवर्तकत्वाद् यथैव अप्रमा स्वनिवर्त्या, तथा प्रागभावोऽपीति विशेषणं सार्थकम्।

न चाभावस्यावारकत्वाभावात् स्वविषयावरणपदेनैव तद्व्युदास इति वाच्यम्, आवरणस्यात्र विपरीतबुद्धिकारित्वरूपत्वात् किं वा अस्ति प्रकाशत इति व्यवहारविरोधित्वरूपत्वात्। तादृशस्यावरणस्य भावाभावसाधारणत्वात्। तादृशावारकत्वमभावस्यापीति तु बृहदारण्यकोपनिषदि घटभाष्ये भगवत्पादैरपि प्रतिपादितत्वात्, प्रतिबोधिता च वयं गुरुचरणैः।

नन्वभावस्यापि तादृशरूपेणावारकत्वे भावरूपमज्ञानं किमर्थं स्वीक्रियते इति चेत्, न, अभावरूपाज्ञाने स्वीकृते जगदुपादानत्वं विरुध्येत। न हि अभावः कस्याप्युपादानं भवतीति केनापीष्यते। अभावो नावारक इति मते तु साध्यद्वये तात्पर्यमिति तूक्तमेव।

---

१. ब्र० सू० २।१।१४; २. भामती, पृ० ३८७; ३. छा० ६।१।१।

विगीतो विभ्रम एतज्ज्ञानकारणाबाध्यातिरिक्तोपादानको विभ्रमत्वात् देवदत्तादिविभ्रमवदिति द्वितीयं चित्सुखीयानुमानम् ।

एतज्ज्ञानकारणीभूतात् तज्जनकाद् अबाध्याद् अतिरिक्तोपादानं यस्येति भावः । तथा च दृष्टान्ते एतज्ज्ञानकारणीभूतो अबाध्य एष एव चैत्रः, तदतिरिक्तोपादानकत्वं देवदत्तविभ्रमस्येति साध्यसमन्वयः, तत्र च साध्यप्रसिद्धिः । पक्षे च पक्षधर्मताबलात् । एतज्ज्ञानकारणीभूताबाध्यैतदतिरिक्तमज्ञानं तदुपादानमवश्यमेव मन्तव्यम् ।

अत्रातिरिक्तकारणस्य द्रव्यस्य परैरबाध्यत्वाङ्गीकारात् तदर्थमेतज्ज्ञानकारणेत्युक्तम् । एतज्ज्ञानकारणत्वानधिकरणोपादान इत्युक्ते व्याहतिस्तदर्थमबाध्यत्वातिरिक्तेत्युक्तम् । ततश्चाबाध्यत्वानधिकरणबाध्याज्ञानोपादानकत्वं विभ्रमस्य सिद्धम् ।

ननु विभ्रमत्वमस्तु, बाध्याज्ञानोपादानत्वं मास्तु, इति चेत् न, सत्योपादानत्वे तस्य सत्यत्वप्रसङ्गाद् इति विपक्षे बाधकतर्कस्य जागरूकत्वात् ।

न च विगीतो विभ्रम एतज्ज्ञानजनकबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवदिति सत्प्रतिपक्ष इति वाच्यम्, मध्वमते एतस्यानुमानस्य प्रवृत्तत्वात् तन्मते बाध्यमसदेव । न हि प्रातिभासिकालीकयोस्तन्मते भेदोऽस्ति । असतश्चाजनकत्वाद् एतज्ज्ञानजनकबाध्यत्वस्यैवाप्रसिद्धत्वात् साध्याप्रसिद्धेः । ब्रह्मणोऽपि प्रपञ्चस्य विवर्तोपादानकत्वस्वीकारात् तस्य च अबाध्यत्वात् नानेनानुमानेन विरोधः । एवञ्च सिद्धसाधनतादोषोऽपि बोध्यः । न चोक्तानुमाने अनेतन्निष्ठत्वम्, एतदन्यसमवेतत्वं वोपाधिः, तस्य पक्षेतरतुल्यत्वात् । किञ्च एतत्समवेतसुखदुःखादिषु साध्याव्याप्तेः । एतेनानुमानेन भ्रमोपादानमज्ञानमिति लक्षणमपि प्रामाणिकं भवति ।

न च समस्तस्य प्रपञ्चस्याज्ञानोपादानकत्वे सिद्धे सांख्यमतप्रवेशः, तत्रापि प्रकृतेरेव सर्वोपादानत्वात् । एवञ्च नाममात्रे विवाद इति वाच्यम् । बहुतरभेदात् परमेश्वराध्यस्ताऽनिर्वचनीयाऽविद्यापरिणामस्य विवर्तापरनाम्नो जगतः स्वीकारात् । तत्र प्रपञ्चस्य परिणामोपादानं माया, विवर्तोपादानञ्च ब्रह्मेति । ब्रह्मपरिणामः प्रपञ्च इति पक्षेऽपि परिणामो विवर्त इत्येव युक्तम् । विषमसत्ताककार्यापत्तिविवर्त्तः । समसत्ताककार्यापत्तिः परिणामः । ब्रह्मणः परिणाम इत्युक्तौ तु ब्रह्मणोऽनित्यत्वापत्तिः । जगतो वा पारमार्थिकत्वापत्तिरिति । न चैतत् सांख्यसिद्धान्ते स्वीक्रियते, ईदृशमेव हेतुत्वमभिप्रेत्य "तस्माद् वैतस्माद् आत्मन आकाशः सम्भूतः[१]" इत्यादि श्रुतयः प्रवृत्ताः । अस्यार्थः—वै निश्चयेन तस्मात् परमात्मनः एतस्माद् जीवाद् आत्मनः अनात्मनामधिष्ठानभूताद् जीवपरमात्मनोरभेद-

१. तैत्तिरीये ।

रूपाखण्डार्थात् सच्चिदानन्दाद् आकाशः शब्दगुणः सम्भूत उत्पन्न इति। प्रकृतेः कारणत्वनिषेधस्तु रचनानुपपत्तेरित्यादि ब्रह्मसूत्रे भगवत्पादैः कृत एवेति तत एव द्रष्टव्यम्। एवञ्च विचित्ररचनानुपपत्तेः प्रधानस्य च अशब्दत्वाद् अप्रामाणिकत्वाद् न सांख्यमतं युक्तम्।

खण्डितञ्च सर्वं परमतं श्रीमधुसूदनसरस्वतीभिः सिद्धान्तविन्दौ चतुर्थश्लोकव्याख्यायाम्। तथा हि—

न सांख्यं न शैवं न तत् पञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा।
विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टः शिवः केवलोऽहम्॥

आदिशब्देनानुक्तानां संग्रहः।

न तावदचेतनं जगदुपादानं 'तदैक्षत बहु स्याम प्रजायेय' इति ईक्षणपूर्वकं सृष्टिश्रवणात्। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति च जीवात्मत्वव्यपदेशात्। 'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतिति सर्वविज्ञानमेकविज्ञानेन प्रतिज्ञानात् प्रधानज्ञानेन च तदप्रकृतिकानां पुरुषाणां ज्ञातुमशक्यत्वात्, 'ऐतदात्म्यमिदं सर्वम्, तत् सत्यं स आत्मा' तत्वमसीति च तदभेदस्य नवकृत्व उपदेशात्। 'तस्माद्वा एतस्माद् आत्मन आकाशः सम्भूतः' इति च श्रुत्यन्तरादचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः प्रधानमहदादेरप्रामाणिकत्वाच्च न साङ्ख्यमतं साधु। एवं पाशुपतमतं पाञ्चरात्रिकं जैनं त्रैदण्डञ्च मतं श्रुतियुक्तिबाधितत्वादयुक्तम्।

न च विधिशेषत्वात् श्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तम्। "असिद्धत्वाद् विधिशेषत्वस्य[1]" "जन्माद्यस्य यतः[2]" "प्रकृतिश्च प्रतिज्ञा[3]" "दृष्टान्तानुपरोधात्" इत्यादि सूत्रेषु भगवत्पादैरपि ब्रह्मणो विवर्तोपादानत्वं प्रतिपादितमेव। तथा हि "अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति, तद् ब्रह्म" प्रकृतिश्चेत्यादि सूत्रेऽपि भगवत्पादैः ब्रह्मण उपादानत्वं प्रतिपादितमेव। तत्र ईक्षणपूर्वकसृष्टिश्रुतौ कार्येषु च वैरूप्यदर्शनाद् ब्रह्मणो निमित्तकारणत्वे प्राप्ते प्रतिज्ञादृष्टान्तानुपरोधाद् उपादानत्वं प्रतिपाद्यते। एकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञा। 'एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम्' इत्यादि दृष्टान्तः। न चैतौ ब्रह्मणो निमित्तकारणत्वे उपपद्येते। तस्मादुपादानमेव जगतो ब्रह्मेति सिद्धं भवति।

ननु क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवदित्यादिना निमित्तत्वमेव परमात्मन आयाति। कथमुच्यते उपादानत्वमिति चेत्, न, कर्तृजन्यत्वव्याप्यः

---

१. सिद्धान्तबिन्दुः पृ० १२९;   २. ब्रह्मसूत्रम्—१।१।२;   ३. तत्रैव—१।४।२३।

कार्यत्वहेतुर्न ब्रह्मणो अनुमापकः सम्भवति, तत्र सकर्तृत्वमात्रसाधने अदृष्टद्वारक-कृतिमादाय जीवेन सिद्धसाधनाद् अर्थान्तराच्च। सोपादानकत्वसाधने तु प्रधानेन सिद्धसाधनाद् अर्थान्तराच्च। श्रुतिविरोधस्तु अस्त्येवेति। जगत उपादानमेव ब्रह्म, निमित्तान्तराभावाच्च अभिन्ननिमित्तोपादानत्वं तस्योच्यते।

अत एवोक्तं सकलमभिप्रेत्य नयनप्रसादिन्याम्—"कूटस्थस्य तस्य वियदादि-विकाराभावाद् अविद्यावेशवशाद् विकारे प्राप्ताप्राप्तविवेकेन तस्या एव विकारः। न चैवं सांख्यसिद्धान्तसंगतेरिह गन्धिता. परमेश्वराध्यस्तानिर्वचनीयाविद्यापरि-णामस्य विवर्तापरनाम्नः स्वीकारात्। ईदृशमेव हेतुत्वमभिप्रेत्य "तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः" इत्यादिसृष्टिश्रुतयस्तथा जन्माद्यस्य यतः, प्रकृतिश्चेत्या-द्यधिकरणान्यपि। अत एव धातुसमीक्षायां ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिरभिहितम्—

शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः[1] ॥ इति।

एवञ्च भ्रमस्य विवर्तोपादानत्वं ब्रह्मणि परिणामोपादानत्वमज्ञान-स्यैव। भ्रमोपादानमज्ञानमिति लक्षणे उपादानपदं परिणामोपादानपरमिति बोध्यम्। एवमेव 'अद्वैतसिद्धौ[2]' अज्ञानानुमानप्रमाणविचारे नव्यास्तु इति कृत्वा अनुमानानि उक्तानि। तानीह संक्षेपेण समीक्ष्यन्ते, तथाहि–विमता प्रमा प्रमाभावा-तिरिक्तानादेर्निवर्त्तिका, कार्यत्वाद् घटवत्। अत्र दृष्टान्ते घटे प्रमाभावातिरिक्ता-नादेर्घटप्रागभावनिवर्तकत्वमस्तीति साध्यसमन्वये सति पक्षधर्मताबलात् प्रमायामपि तत्प्रागभावातिरिक्तानाद्यज्ञानमादाय साध्यसमन्वयः। अत्रापि प्रमापदेनान्तःकरण-वृत्तिरेव ग्राह्या। न च कार्यत्वमस्तु, तादृशानादेर्निवर्तकत्वं मास्तु, इति वाच्यम्, यद्यज्ञानं न स्यात्, तदा त्वदुक्तमर्थं न जानामीति प्रतीतिर्नोपपद्यते। तथा यदि अज्ञानं न स्यात्, तदा प्रपञ्चोऽज्ञानोपादानो न स्यात्। एवञ्च सत्यः स्यात्, सत्यत्वे च दृग्दृश्यसम्बन्धो नोपपद्येतेति बोध्यम्।

अत्रानादेर्निवर्तकत्वमित्येवोक्तौ प्रमाप्रागभावनिवर्तकत्वमादायार्थान्तरं सिद्धसाधनं वा स्यात्। पूर्वज्ञानादिनिवृत्त्यर्थमनादीति विशेषणं दत्तम्। न चेश्वरप्रमायां कार्यत्वाभावात् स्वरूपासिद्धिरिति वाच्यम्, अत्र प्रमापदेन जन्य-प्रमायाः स्वीकारात्। न चात्र प्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्तकत्वं नास्तीति साधनाव्यापकत्वमिति वाच्यम्, तस्योपाधेः पक्षमात्रावृत्तित्वात् पक्षेतरतुल्यत्वात्। प्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वं प्रमायामेव नास्ति।

न च प्रमा अभावातिरिक्तानादेर्निवर्तिका न भवति, पदार्थत्वात् पटवदिति प्रतिरोध इति वाच्यम्, सत्ताद्रव्यत्वादीनामपि अनिवर्तकत्वात् सिद्धसाधनम्।

---

१. नयनप्रसादिनी—पृ० १०२।
२. अ० सि०, पृ० ५५०।

थद्युभयसम्मतानादिभावव्यतिरिक्तानादेर्भावस्यानिवर्तकत्वं साध्यते चेत्, तव मते तादृशस्यानादेर्भावस्याप्रसिद्धत्वात् साध्याप्रसिद्धिरिति पूर्वमेवोक्तम्।

द्वितीयमनुमानम् —भ्रमानुत्तरप्रमा स्वाभावातिरिक्तस्वविरोधिनिवर्तिका प्रमात्वात्, भ्रमोत्तरप्रमावदिति। समन्वयश्चेत्थम्—दृष्टान्ते भ्रमोत्तरप्रमायां प्रमात्वहेतोः सत्वात् स्वप्रागभावातिरिक्तस्य स्वविरोधिनो रजतादिभ्रमस्य निवर्तकत्वरूपसाध्यस्यापि सत्वात् समन्वयः। पक्षे च भ्रमानुत्तरप्रमायां पक्षधर्मताबलात् स्वाभावातिरिक्तविरोधि अज्ञानं मन्तव्यम्, यस्य निवर्तकत्वं समागच्छेत्।

स्वाभावातिरिक्तत्वनिवेशाभावे भ्रमानुत्तरप्रमायां स्वविरोधिस्वप्रागभावनिवर्तकत्वमादाय साध्यपर्यवसानाद् अर्थान्तरता सिद्धसाधनं वेति, अतस्तदुक्तम्—स्वाभावातिरिक्तनिवर्तकत्वमात्रनिवेशे च पूर्वज्ञानादिनिवर्तकत्वमादाय सिद्धसाधनं स्यात्।

न च भ्रमोत्तरत्वमुपाधिः, तस्य दृष्टान्ते सद्भावात् साध्यव्यापकत्वं पक्षे चाभावात् साधनाव्यापकत्वमिति वाच्यम्, भ्रमोत्तरकाले कस्मिंश्चिदपि व्यवहारे तदुत्तरत्वस्य सत्त्वेऽपि प्रमात्वाभावात् साधनव्यापकत्वात्। नन्वत्र पक्षकोटौ भ्रमानुत्तरत्वेति निवेशः किमर्थः? प्रमा स्वाभावातिरिक्तस्वविरोधिनिर्विका प्रमात्वात्, भ्रमोत्तरप्रमावदित्येवानुमानाकारः स्यात्। न च रजतभ्रमोत्तरकाले 'इयं शुक्तिः' इत्यादि प्रमायां स्वाभावातिरिक्तस्वविरोधिरजतभ्रमनिवर्तकत्वस्य सिद्धसाधनमिति वाच्यम्, पक्षतावच्छेदकावच्छेदेनेनानुमितिपक्षे सिद्धसाधनाभावाद् अन्यथा प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरूप्यवदित्यत्रापि सिद्धसाधनं स्यादिति चेत्, न, पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ तावत् पक्षैकदेशे सिद्धौ सिद्धसाधनत्वस्य दोषत्वात् तत्पक्षे तद्दोषनिरासाय भ्रमानुत्तरत्वप्रमायां विशेषणात्।

तृतीयं यथा—ज्ञानत्वं स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वात्, आलोकत्ववत्। दृष्टान्ते आलोकत्वे अप्रकाशितार्थघटादिप्रकाशवृत्तित्वमस्त्येव। तत्र स्वप्रकाशविषयीभूतघटाद्यावरणान्धकारनिवर्तकप्रकाशनिष्ठत्वमप्यस्त्येवेति समन्वयः। पक्षे च ज्ञानत्वे अप्रकाशितार्थस्याज्ञातस्य प्रकाशो ज्ञानं तद्वृत्तित्वं ज्ञानत्वे वर्तत एव। एवञ्च पक्षधर्मताबलात् स्वविषयावरणनिवर्तकनिष्ठत्वमपि भवत्येव। तत्रागत्याऽऽवरणमज्ञानमेव स्वीकर्तव्यमन्धकाराभावात्। अत्र साध्यकोटो आवरणेति निवेशेन प्रागभावस्य व्यवच्छेदः, तस्यावारकत्वाभावात्। एवं पूर्वज्ञानस्यापि व्यवच्छेदः, अन्यथा सिद्धसाधनता स्यात्। इदञ्चानुमानमभावो नावारक इति मते प्रवृत्तम्।

हेतुकोटौ धारावाहिकप्रमायां प्रभायाञ्च व्यभिचारवारणाय अप्रकाशितेति। अप्रकाशितत्वमिति न प्रकाशत इति व्यवहारविषयत्वम्, तच्च प्रभायां प्रमायां वर्तत एव। आवरणत्वमपि अन्धकारे अज्ञाने च समानमेव वर्तते।

न चात्र चक्षुर्ग्राह्यवृत्तित्वमुपाधिः, तस्य पक्षेतरतुल्यत्वादिति बोध्यम्, आवरणेति निवेशेनैवानादित्वमपि संगृहीतं भवति।

चतुर्थं यथा—अनित्यज्ञानम् अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे सति सविषयत्वे सति अनित्यत्वाद् अनित्येच्छावत्। दृष्टान्ते अनित्येच्छारूपे हेतोः सत्त्वं स्पष्टमेव साध्यस्यापि अभावत्वानधिकरणस्वविरोधिद्वेषादिसमानाधिकरणत्वस्य तादृग् इच्छायां सत्वात् समन्वयः। पक्षे च पक्षधर्मताबलाद् अज्ञानमादाय साध्यपर्यवसानं बोध्यम्।

ईश्वरेच्छानिवृत्यर्थमनित्येति इच्छायां ज्ञाने च विशेषणम्। साध्ये, अभावत्वानधिकरणेति निवेशः प्रागभावमादाय सिद्धसाधनतानिवृत्त्यर्थम्। स्वविरोधित्वनिवेशेन च पूर्वज्ञानस्य व्यावृत्तिः। हेतौ प्रयत्ने व्यभिचारवारणार्थं प्रयत्नान्यत्वनिवेशः। नित्येच्छाज्ञानादौ व्यभिचारवारणायानित्येति। घटादौ व्यभिचारवारणाय सविषयत्वे सतीति बोध्यम्। न च शुक्तिरजतज्ञाने सिद्धसाधनम्, अनित्यज्ञानत्वावच्छेदेनानुमानस्य प्रवृत्तत्वात्।

एवमेवाभावविलक्षणाज्ञाने अनुमानम्। तथाहि—ज्ञानविरोधित्वम् अनादिभावत्वसमानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वात्। दृश्यत्ववद् दृष्टान्ते दृश्यत्वे सकल यद् ज्ञानविरोधि दृश्यम्, तद्वृत्तित्वं सिद्धमेव। एवमनादिभावरूपे अविद्याचिद्योगादौ दृश्यत्वस्य सत्वाद् अनादिभावत्वसमानाधिकरणत्वस्यापि साध्यस्य सत्त्वात् समन्वयः। पक्षे च ज्ञानविरोधित्वे पक्षधर्मताबलाद् अनादिभावरूपमज्ञानं सिद्धं कृत्वा, तत् समानाधिकरणत्वं सिद्धं भवतीति भावः।

अत्र साध्यकोटौ पूर्वज्ञानादिनिवृत्यर्थम् अनादीति प्रागभावादिव्यावृत्यर्थं भावेति। अत्र हेतुकोटौ कलया, कार्येण सहितं सकलमिति सकलं यद् ज्ञानविरोधि अज्ञानम्, तत्कार्यमित्यर्थः, तेन न हेतौ व्यर्थविशेषणतादोषः।

द्वितीयम्—अनाद्यभावविलक्षणत्वं ज्ञानविरोधिवृत्त्यनाद्यभावविलक्षणमात्रवृत्तित्वात्, अभिधेयत्ववदिति। दृष्टान्ते अभिधेयत्वे सकलानाद्यभावविलक्षणे अज्ञाने तत् कार्ये च अभिधेयत्वस्य वृत्तित्वाद् हेतोः सद्भावः। एवञ्च ज्ञानविरोधिवृत्तित्वमपि संगतमेव ब्रह्मातिरिक्ते सर्वत्राभिधेयत्वस्य सत्त्वात्। पक्षे च पक्षधर्मताबलाद् ज्ञानविरोधिज्ञानं प्रसाध्यैव तद्वृत्तित्वं रूपं साध्यं संगमिष्यतीति ज्ञानविरोधिभावरूपाज्ञानसिद्धिः। पक्षकोटौ अभावविलक्षणत्वमात्रोक्तौ तत्र ज्ञानविरोधिवृत्तित्वासिद्धेः बाधः स्यात्, अतोऽनादीति। अनादिविलक्षणत्वोक्तौ तु ज्ञानप्रागभावमादाय सिद्धसाधनता स्यात्, अतः अभावेति। एवञ्च अनाद्यभावपदेन प्रागभावस्यैव ग्रहणे प्रागभावविलक्षणत्वं पक्षः स्यात्, तथा च तस्य घटादावपि सत्वाद् ज्ञानविरोधिवृत्तित्वाभावाद् बाधः स्यात्, अतः अनादित्वे सति अभावविलक्षणत्वं पक्षः। ब्रह्मणि निर्धर्मके कस्यापि धर्मस्याभावात् तत्र व्यभिचारादिदोष इति।

।। इत्यनिर्वचनीयाज्ञाने अनुमानप्रमाणविचारः ।।

# अथासत्ख्यातिविचारः

"अन्तरेणापि ज्ञेयसामर्थ्यं निःस्वभावेऽप्यसतिस्वकारणविशेषणसमासादितस्वभावविशेषज्ञानमेवाविद्या सत् प्रकाशनशक्तिमदिति चेत्[1]"।

एतदुक्तं भवति—"यद्यपि अधिपतिसहकार्यालम्बनप्रत्ययस्यासत्वाद् अनर्थक्रियाक्षमत्वात्, अत एव तत्संयुक्तस्याधिपतेश्चक्षुरादेस्तत्सहकारिणश्चालोकस्य सहकारिप्रत्ययस्याभावेऽपि समनन्तरप्रत्ययलक्षणपूर्वज्ञानमात्रात् स्वभाववैचित्र्यवशाद् विज्ञानमुत्पद्यते, स्मृतिज्ञानमिव विषयमन्तरेण सामग्रीमात्रप्रयोज्यमिति"।

अत्रासत्ख्यातिवादप्रसङ्गेन बौद्धमतं संक्षेपेणोपस्थाप्यते। बुद्धादागतमिति बौद्धं मतम्। बुद्ध एव तन्मतप्रवर्तकः। तेन चोपदिष्टं सर्वं क्षणिकं क्षणिकम्, दुःख दुःखम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यमिति। एवमुपदिष्टचतुर्विधभावनयैव विनेयबुद्धिभेदात् चतुर्विधाः—माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञका बौद्धाः सिद्धान्ताः प्रचलिताः। अयं बौद्धमतवादः "समुदाय उभयहेतुकेऽपि तदप्राप्तिः[2]" इति सूत्रे भगवत्पादैरनूद्य, निरस्तः। तत्र वैनाशिकशब्देनायमुच्यते। तत्र मतत्रयमुपन्यस्तम् – सर्वास्तित्ववादिनः सौत्रान्तिकवैभाषिकाः। यद्यपि द्वयोर्मतेऽस्ति प्रकारभेदः, तथापि आन्तरबाह्योभयविधास्तित्वेनास्ति विवादः। केचिद् विज्ञानास्तित्ववादिनो योगाचाराः, केचित् सर्वशून्यत्ववादिनो माध्यमिकाः।

तत्र ते हीनमतयस्ते सर्वास्तित्वेन वादेन तदाशयानुरोधाच्छून्यतायामवतार्यन्ते। ये तु मध्यमास्ते ज्ञानमात्रास्तित्वेन शून्यतायामवतार्यन्ते। ये तु प्रकृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्वं प्रतिपाद्यते, यथोक्तं बोधिसत्त्वविवरणे—

देशनाल्लोकनाशानां सत्त्वाशयवशानुगा।
भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणम्।
भिन्नाऽपि देशनाऽभिन्ना शून्यताद्वयलक्षणा[3]॥

अनेन ज्ञायते यद् बुद्धदेशना शून्यताद्वयलक्षणा अभिन्नैवः किन्तु विनेयभेदाद् भिन्नेति। तत्रादौ माध्यमिकमतम्—सर्वंक्षणिकं सर्वंशून्यं दुःखं स्वलक्षणमिति। अत्र एतन्मते सर्वंशून्यत्वमेव मुख्यम्। क्षणिकत्वञ्च द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। तच्च घटादौ सत्त्वेन हेतुनानुमीयते। सत्त्वमर्थक्रियाकारित्व-

---

१. चि० सु० पृ० १२०; २. नयन० पृ० १२०; ३. भामती–पृ० ६८० (सूत्रम्–२।२।१८)।

रूपम्। तथा च घटादयः क्षणिकाः, सत्त्वात्, मेघमालावत्, प्रदीपज्वालावद् वा। अर्थक्रियाकारित्वं नाम किञ्चित्कार्यजनकत्वम्। एतत् क्रमाक्रमाभ्यां व्याप्तम्। क्रमाक्रमौ च व्यापकौ स्थायित्वे व्यभिचरन्तौ तत्र सत्त्वमपि व्यभिचारयन्तः। तथा च स्थायिनि सत्त्वं नैव सिध्यतीति स्थायित्वमसिद्धम्

तथा हि वर्तमानार्थक्रियाकरणसमयेऽनागतार्थक्रियाजननसामर्थ्यं स्थायिनो अस्ति न वेति। आद्ये, क्रमेण अक्रमेण वा ? अक्रमेण चेत् तदानीमेवानागतस्य कार्यस्य सर्वस्योत्पत्तिप्रसङ्गात्। यदि क्रमेण सहकारिलाभात्, तदा एकस्मिन् धर्मिणि कदाचित् कार्यजननसामर्थ्यम्, कदाचिन्नेति विरुद्धधर्मत्वस्वीकारे भेदः स्यात्। भिद्यन्ते हि पदार्था विरुद्धधर्माध्यासेन यथा गौरश्वात्। न चैकस्मिन् वृक्षे संयोगतदभाववद् एकस्मिन् एव धर्मिणि देशकालभेदेन सामर्थ्यासामर्थ्ययोः सत्त्वमस्त्विति वाच्यम्, अवयवातिरिक्तस्यावयविनो धर्मिणोऽसिद्धेः। तथा हि अवयवेभ्यो भिन्नोऽवयवी समस्तेषु वर्तते प्रत्यवयवं वा। नाद्यः, समस्तस्यावयवस्यानुपलब्धेः धर्मिणोऽनुपलब्धेः। न द्वितीयः, एकस्मिन् एव तन्तौ पटे निष्पन्ने अन्यतन्तुवैयर्थ्यापत्तेः। अव्याप्यवृत्तिस्थले च संयोगवान् शाखादिस्तदभाववान् मूलादिर्भिन्नावेवेति न दृष्टान्तसिद्धिः।

एवञ्च सहकारिभिः सलिलादिभिः बीजे उपकाराख्यातिशय आधीयते तत्रातिशयाधाने सहकारिभिरतिशयान्तरमाधीयते न वा ? नाद्यः, सहकारिसमवधानवैयर्थ्यात्। द्वितीये अनवस्थापातात्। एवञ्च नैव स्थायिनः सहकारिसमवधानादपि क्रमेण कार्यकारित्वमिति स्थायित्वे कार्यकारित्वरूपसत्त्वस्यासम्भवात् क्षणिकत्वं सिद्धम्। क्षणिकत्वे च कुसूलस्थं बीजमन्यत्, क्षेत्रस्थञ्चान्यदिति न दोषः। एवञ्च यत्रापि सत्वम्, तत्र क्रमाक्रमौ प्राप्तावेव। स्थायिनि च न तौ सम्भवत उक्तानुपपत्तेः। अतः स्थायिनो व्यावर्तमानौ तौ स्थायित्वमपि व्यावर्तयतः।

वर्तमानार्थक्रियाकरणसमये अनागतार्थक्रियाजननसामर्थ्यं नास्तीति द्वितीये पक्षे क्षणिकत्वमेवायातमिति, तस्मात् सर्वं क्षणिकमिति सिध्यति। सर्वं दुःखमिति तु विवेकिनां स्पष्टमेव। सर्वं स्वलक्षणमिति तु क्षणिकत्वादेव सिद्धम्। न हि कस्यापि केनापि सह किञ्चित्सादृश्यं स्वेन च सादृश्याभावात् प्रत्याभिज्ञायाश्च प्रदीपज्वालादौ सेयं दीपकलिकेतिवद् भ्रमत्वात् स्वलक्षणत्वं सिद्धम्।

सर्वशून्यत्वमप्युपपन्नम्। तथाहि इदं रजतमिति भ्रमे रजतनिषेधे रजतस्यासत्वे तद्विशिष्टस्य दर्शनस्य द्रष्टुरिदन्ताया अधिष्ठानस्य रजतत्वस्य तत्सबन्धस्य च समवायादेर्निखिलस्यैवासत्त्वमापतितम्, सर्वस्यैव नेदं रजतमिति निषेधबुद्धिविषयत्वेन निषिध्यमानत्वात्। न च तत्र किञ्चिन्निषेध्यं किञ्चिन्नेति अर्धजरतीयस्यानौचित्यात्। एवञ्च सर्वस्यासत्वं तत्र भवति। न हि गगनकमलिन्या असत्वे, तन्माला सती भवति। एवमेव प्रपञ्चेऽपि बोध्यः।

किञ्च घटादेः सत्स्वभावे कारकव्यापारवैयर्थ्यमसत्स्वभावेऽपि उभयस्वभावे विरोध आपतेदिति शून्यतैव युक्ता। अत एवोक्तं लङ्कावतारे—

बुद्धया विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिता॥

नन्वेवं सर्वशून्यत्वे लोकव्यवहारः कथं सम्पद्येतेति चेत्, न, स्वप्नव्यवहारवत् संवृत्त्या सम्पद्यते, अतो यथा सुषुप्तौ न किञ्चित् प्रतिभाति; किन्तु शून्यमस्ति, अनन्तरं च जगत् प्रतीयते, तथा शून्य एवात्मा, अविद्यावशात् शून्य एवात्मनि सर्वमिदमसज्जगत् प्रतिभाति। एवञ्चोक्तं सर्वं शून्यं शून्यमित्यादि भावनावबोधाद् निखिलवासनानिवृत्तौ परमनिर्वाणरूपं शून्यस्वरूपमधिगम्यत इति शून्यवादिनो माध्यमिका वदन्ति। एषां मतेऽपि शुक्तौ रजतमसदेव प्रतिभासते।

योगाचारमतम्—योगाचारास्तु बाह्यार्थशून्यतां पूर्वोक्तरीत्या स्वीकुर्वन्तोऽपि जगदान्ध्यप्रसङ्गात् स्वसंवेद्यं विज्ञानमवश्यं क्षणिकमेवाङ्गीकुर्वन्ति। तथाहि सत्त्वात क्षणिकत्वे सिद्धे चक्षुरादिना वर्तमानोऽर्थो गृह्यते, अतीतो वा? नाद्यः, तेन सह चक्षुःसंयोगाभावात् संयुक्तस्याग्रिमक्षणे नाशात्। यश्च गृह्यते नासौ संयुक्त इति अन्येन इन्द्रियसंयोगोऽन्यस्य प्रत्यक्षमिति व्याहतिः। न द्वितीयः, वर्तमानतावभासविरोधात्।

किञ्च ग्राह्यो भावः, अवयविरूपो परमाणुरूपो वा? नाद्यः, अवयविनोऽसम्भवात्। सर्वावयवे अवयवी चेदवयविनोऽनुपलब्धिः। न हि सर्वे अवयवा उपलब्धाः। आश्रयोपलब्धिं विना व्यासज्यवृत्तिधर्मो नोपलभ्यते। प्रत्येकमवयवे चेद् अवयवान्तरवैयर्थ्यम्, तत्रापि कार्त्स्न्येनावयवी स्यात्, एकदेशेन वा? आद्ये, एक एवावयवी अवयविना सम्बध्येत, नावयवान्तरमिति अवयवान्तरवैयर्थ्यापत्तिः। एकदेशेनेति द्वितीयपक्षेऽपि स एकदेश आश्रयीभूतादवयवाद् भिन्नोऽभिन्नो वा? भिन्ने व्याघातः, न हि कपाले कपालान्तरेण घट उपलभ्यते। अभिन्ने आत्माश्रयः। ग्राह्यस्य परमाणुरूपत्वे द्वितीयपक्षे ग्राह्यस्याप्रत्यक्षत्वापातः। अतः स्वव्यतिरिक्तग्राह्यस्याभावाद् विज्ञानमेव स्वात्मप्रकाशकं प्रदीपवदिति मन्तव्यम्।

तदुक्तम्—

नान्योऽनुभाव्यो बुद्धयास्ति तस्या नानुभवो परः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥

एवञ्च सति प्रतीयमानो ग्राह्यग्राहकपृथगवभासः चन्द्रमसि एकस्मिन् द्वित्वावभासवद् भ्रम एव, तत्र चानादिरविच्छिन्नप्रवाहभेदवासनैव निमित्तम्। अत एवोच्यते—

सहोपलम्भनियमाद् अभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये॥

एवञ्च बाह्यत्वावभासादिकं भ्रम एवेति शुक्तिरजतस्थलेऽपि असदेव रजत प्रतीयते ।

इदञ्च विज्ञानं द्विधा—आलयविज्ञानम्, प्रवृत्तिविज्ञानञ्चेति । अहमिति ज्ञानमाद्यम् नीलाद्युल्लेखिज्ञानं द्वितीयम् । तत्रालयविज्ञानानां या वासना, तासु प्रवृत्तिविज्ञानजननशक्तयः । तासां स्वस्वकारणं प्रति आभिमुख्यं परिपाकः, तस्य च कारणं स्वाश्रयसन्तानवर्त्ती पूर्वक्षणः । तथा च विज्ञानमेव अनादिवासनावशाद् अनेकाकारतयाऽवभासमानम् । तथोक्तचतुर्विधभावनावबोधाद् वासनोच्छेदाद् निरस्तविविधविषयाकारोपप्लवाद् विशुद्धविज्ञानसन्ततिस्वरूपमेव मोक्ष इति वदन्ति ।

सौत्रान्तिकास्तु बाह्यं ग्राह्यं नास्तीति, न युक्तम्, मानाभावात् । न च ज्ञानं न ज्ञेयभिन्नं सहोपलम्भनियमादिति यथा नीलो घटान्नभिद्यत इति वाच्यम, व्यभिचारशंकानिवर्तकतर्कशून्यत्वाद् घटादेश्च बाह्यत्वेन प्रतीयमानत्वाद् विज्ञानस्यान्तरत्वेनेति भेदाद् ज्ञानज्ञेययोरभेदे च 'अहं घटः' इत्यादिप्रतीत्यापत्तेश्चेति । न च आन्तरोऽपि घटादिः भ्रान्त्या बहिर्वदाभासत इति युक्तम्, बाह्यार्थानवगमे बहिर्वदिति दृष्टान्तासिद्धेः । न हि कश्चिद् वन्ध्यापुत्र इव मैत्र इति अभ्युपेयते । तस्मादिन्द्रियसन्निकृष्टो घटादिरुत्पाद्ये ज्ञाने स्वाकारं समर्पयति, समर्पितेन च आकारेण तत्तदर्थोऽनुमीयते, यथा—पुष्ट्यादिना भोजनादिकम्, एवञ्च बाह्या अपि पदार्था अनुमेयानापलपितुं शक्यन्ते ।

एवञ्च सर्वास्तित्वे सिद्धे चतुर्धा विभागः—भूतं भौतिकं चित्तं चैत्तञ्चेति । तत्र भूतं पृथिव्यादयः । भौतिकं रूपादयश्चक्षुरादयश्च । तत्र पृथिव्यादिपरमाणवश्चतुर्विधाः—खरस्वभावाः पार्थिवाः, स्नेहस्वभावा जलीयाः, ईरणस्वभावा वायवीयाः, उष्णस्वभावा आग्नेया इति एतेषां संघातः ।

चित्तचैत्तात्मकः स्कन्धः पञ्चविधः—रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः । रूप्यते इति रूपमिति व्युत्पत्त्या सविषयेन्द्रियाणि रूपस्कन्धमहमहमिति प्रवाहरूपालयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः । सुखदुःखाद्यनुभवो वेदनास्कन्धः । गौरश्व इत्यादिविशिष्टसविकल्पः प्रत्ययः संज्ञास्कन्धः । रागद्वेषमोहधर्माधर्मः संस्कारस्कन्धः । विज्ञानस्कन्धः चित्तमात्मा, चैत्तमन्ये चत्वारः स्कन्धाः । एतेषां संघात आध्यात्मिकः सकललोकयात्रानिर्वाहकः । विषयाणामपि देहस्थेन्द्रियग्राह्यत्वाद् आध्यात्मिकत्वम् । तत्र प्रत्ययसंज्ञकानि चत्वारि करणानि प्रतीत्यचित्तचैत्ता उत्पद्यन्ते । ते च प्रत्यया आलम्बनसमनन्तरसहकार्यधिपतिरूपाः । तत्र आलम्बनप्रत्ययो विषयरूपः । अनेन नीलादिज्ञानस्य नीलाकारता भवति । समनन्तरप्रत्ययो व्यवहितपूर्ववर्तिज्ञानम्, तेन च ज्ञानरूपता सम्पद्यते । सहकारिप्रत्यय आलोकादिः, अधिपतिप्रत्ययश्चक्षुरादिः । एताभ्यां विषयग्रहणनियमः । कार्यं प्रति

अयते गच्छतीति प्रत्ययः कारणमिति व्युत्पत्तेः। एतत् सर्वं दुःखं क्षणिकमिति भावयित्वा तत्त्वज्ञानानन्तरं जायमानो विमलविज्ञानप्रवाह एव मोक्ष इति वदन्ति।

वैभाषिकास्तु—प्रत्यक्षमनुमेयञ्च पदार्थं मन्यन्ते। धूमादेरप्रत्यक्षेण व्याप्ति-ग्रहणाभावाद् अनुमानाप्रवृत्तेः। साक्षात्करोमीति सकललोकानुभवविरोधापत्तेश्च न सर्वस्यानुमेयत्वं युक्तम्। शेषं सर्वं सौत्रान्तिकमतवद् बोध्यमिति स्वीकुर्वन्ति। एवं शुक्तिरजतस्थले असदेव रजतमाख्यायत इति समेषां मते निर्विवादम्।

तत्रासत्ख्यातिप्रत्याख्यानावसरे उदाहृतस्तत्त्वप्रदीपिकानयनप्रसादिनी-ग्रन्थः। तस्यायम्भावः—यद्यसदेव रजतं तदा अपरोक्षावभासः, तदादानादि-प्रवृत्तिश्च नोपपद्येत। न हि शशविषाणादौ असति प्रतीतिप्रवृत्ती दृश्येते। ननु नैव सर्वंमसत्, समानं वन्ध्यापुत्रादौ प्रतीतिप्रवृत्त्योरसत्त्वेऽपि असद्विशेषे शुक्तिरजते ते सम्भवत इति चेन्, न, सत एव सामान्यविशेषभावस्वीकारात्, असतश्च निःस्वभाव-त्वात्। विशेषभावे च असत्वापायात्। न च सद् वैलक्षण्यमात्रेणासत्त्वव्यवहार इति वाच्यम्, मायावादिप्रवेशप्रसङ्गात्। ननु विज्ञानमेव रजताकारेण बहिःपरिणतं सद् बाह्यत्वेन प्रतिभासते, तत्र असतो भ्रमविषयस्य रजतादेः निःस्वभावत्वेऽपि प्रकाशनरूपसामर्थ्याभावे अपि विज्ञानस्यैव स्वभावविशेषः सामर्थ्यविशेषो वा यद् अविद्यया असत् प्रकाशत इति। स च स्वभावविशेषो विज्ञाने कथं प्राप्त इति चेत्, स्वकारणसमनन्तरप्रत्ययादिति ब्रूमः।

ननु चतुर्विधान् प्रत्ययान् अधिपतिसहकारिसमनन्तरालम्बनरूपान् हेतूकृत्य चित्तचैत्ता उत्पद्यन्त इति पूर्वमेवोक्तम्। तत्र न तावद् अधिपतिप्रत्य-यश्चक्षुरादि रजतोत्पत्तिकारणविज्ञानस्य विशेषस्वभावोत्पादने हेतुः, तस्य विषय-नियमनमात्रहेतुत्वात्। नापि सहकारिप्रत्यय आलोकादिः, तस्य स्पष्टतामात्र-हेतुत्वात्। सोऽपि न रजताकारताविर्भावयितु प्रभवति नापि समनन्तरप्रत्ययः पूर्वज्ञान तस्य सजातीयज्ञानं प्रति हेतुत्वात् प्रकृते च।वजातीयज्ञानान्तरं रजत-मिदमिति ज्ञानात् सजातीयज्ञानाच्च घटोऽयमिति ज्ञान प्रतिक्षणमन्यद् अन्यद् भवत् सजातीयमुच्यते। न चालम्बनप्रत्ययो विषयरूपः, तस्य बाह्यास्तित्वा-दिनां सौत्रान्तिकवैभाषिकानां प्रमास्थले सम्भवेऽपि भ्रमस्थले बाह्यरजतस्याभावाद् नैव सम्भवः। योगाचारादिमते तु नितरामसम्भव एव। एवं कथं विज्ञानस्य कारणविशेषात् स्वभावविशेषोपलब्धिः। एवञ्च कथं तस्य रजताकरतेति चेत्, न, समनन्तरप्रत्ययलक्षणपूर्वज्ञानमात्रात् स्वभाववैचित्र्यवशात्। न च समनन्तरप्रत्यय-सजातीयज्ञानोत्पादे हेतुरित्युक्तमिति वाच्यम्, रजतमिति पूर्वज्ञानमेवात्र सम-नन्तरप्रत्यः। न चेदं रजतमिति स्थले न तत्क्षणाव्यवहितपूर्वं रजतमिति विज्ञानप्रवाह इति वाच्यम्, अनादिविज्ञानप्रवाहे कदाचिद् रजतमिति ज्ञानं जातमिति तदेव संस्कारशब्देनापि उच्यते, तेनैव च रजतज्ञानं जायते। एवञ्च

संस्कारसामर्थ्याद् विज्ञानतो रजताकारतेति तत् संस्कार एव विज्ञानस्य स्वभावविशेषः। संस्कारोऽपि क्षणिक एव। ननु कथं व्यवधानेन कारणं स इति चेत्, यथा बीजमङ्कुरादिकार्यव्यवधानेन सजातीयं बीजान्तरं जनयति, तद्वत्। अथवा रजतमिति संस्कारसन्तान एव रजताकारे हेतुरिति रजतस्य बुद्धिरूपतायां न काचित् क्षतिः। यथा च संस्कारमात्रजन्यत्वं स्मृतेः, तथैव शुक्तौ रजतस्यापीति बोध्यम्।

नन्वस्तु विज्ञाने स्वकारणवशात् प्राप्तस्वभावविशेषाद् असत्प्रकाशन-शक्तिः; किन्तु तस्याः शक्तेः शक्यं किम्? शक्यनिरूपितैव शक्तिर्भवति, अन्यथा शक्तित्वापायात्। यदि तच्छक्तेः शक्यमसदेवेति चेत्, न, अशतः शक्तेः कार्यत्वे असत्त्वापगमात् न ह्यसत् कस्यापि कार्यं भवति। असद्विशेषणे भवति कार्यमिति स्वीकारेऽपि निःस्वभावत्वाभावाद् असत्वापगमात् स एव दोषः। किञ्च असतः कार्यत्वप्रकाशनशक्तित्वव्याघातः। न हि प्रमाणं वस्तु उत्पादयति; अपि तु व्यञ्जयतीति। ननु शक्तेर्ज्ञाप्यमेवास्तु असत् न पूर्वोक्तदोषलेशोऽपीति चेत्, न, शक्तेर्ज्ञाप्यमित्यस्य शक्तेर्जन्यज्ञानविषय इत्यर्थः। तत्र शक्त्याश्रयविज्ञानाति रक्तविज्ञानान्याभावाद् ज्ञाप्यत्वं दुरुपपादम्, ज्ञानान्तरकल्पने चानवस्थानात्। यदि च तदेव विज्ञानं शक्त्याश्रयं जन्यज्ञानपदेनापि गृह्यत इति चेत्, न, तस्यैव शक्तत्वे शक्यत्वे च विरोधात्। नह्येकस्य एकदैव सिद्धतया शक्त्याश्रयत्वम्, असिद्धतया च तद्विषयत्वं सम्भवति युगपदेव सिद्धसाध्यत्वविरोधात्।

नन्वाश्रयविषयसापेक्षा शक्तिर्विषयाभावे न भवेत्। न भवतु नासौ स्वीक्रियते; किन्तु कारणविशेषासादितस्वभावभेदं विज्ञानमेवासतः प्रकाशः। तथाविधविज्ञानमेव रजताकारतामापद्यत इति न तत्र शक्तिः कल्प्यत इति चेत्, न, सदसतोः सम्बन्धानिरूपणात्। न च सांवृत्तिक एव सम्बन्ध इति वाच्यम्, अविद्यात्मिकाया विज्ञाननिष्ठायाः शक्तेरस्वीकारादिदानीम्। असदधीननिरूपणत्वं ज्ञानस्य तत्सम्बन्ध इति चेत्, न, तदधीननिरूपणत्वस्यापि सम्बन्धान्तराधीनत्वाद् असतश्च निरूपाख्यत्वात् सम्बन्धाधारतानुपपत्तेः। ज्ञानजन्यातिशयानाधारत्वाच्च घटादिवद् असतो ज्ञानविषयत्वानुपपत्तेः।

"अयमसदनुभव इत्यसता विना नानुभवो निरूप्यत इति तेनाविनाभावः सम्बन्ध इति चेन्नैवम्, अतदुत्पत्तेरतदात्मनश्चानुभवस्य तदविनाभावासम्भवात्।

अयमर्थः—अस्ति तावदयं निरूप्यनिरूपकभावनियमः, तेन हेतुना तेनासता तस्य ज्ञानस्याविनाभावः कश्चिदस्ति मूलभूत इति विकल्प्यत इति, परिहरति—मैवमिति, अयमभिसन्धिः—त्रिविधो हि अविनाभावः सौगतसमये—स्वभावः, कार्यमनुपलब्धिश्च। यदाह कीर्तिर्न्यायबिन्दौ त्रिरूपाणि च त्रीण्येव च लिङ्गानि अनुपलब्धिः, स्वभावः, कार्यञ्चेति। तत्रानुपलब्धिरर्थाभावावेदिका, यथा यदुपलब्धिलक्षणप्राप्तं

सन्नोपलभ्यते, सोऽसद्व्यवहारविषयः, यथान्यत्र क्वचिद् दृष्टः, क्वचिद् देशविशेषे उपलब्धिलक्षणं प्राप्तो घटपटादिर्नोपलभ्यते, नोपलभ्यते च शशविषाणादिरथं इति साधर्म्यवत् प्रयोगः ।. स्वभावकार्याख्यौ तु भावबोधकौ, यथा वृक्षशिशिपात्वयोः, यथा वाग्निधूमयोरिति । एतदप्युक्तं धर्मकीर्तिना—

कार्यकारणभावाद्वा स्वाभावाद् वा नियामकात् ।
अविनाभावनियमो दर्शनात् न च दर्शनात् ॥ इति ।

अन्वयव्यतिरेकाभ्यां न भवतीत्यर्थः । तदिह ज्ञानस्यासल्लक्षणार्थबोधकस्वाभाव्याद् अनुपलब्धिता दूरापेता, सदसतोः स्वभावस्वभावित्वाभावाच्च न स्वभावाविनाभावः । उक्तं हि न्यायबिन्दौ—"स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः स्वभाव इति । विज्ञानस्यासदुत्पत्त्यभावाच्च न कार्यकारणभावः[1]" इति ।

अयम्भावः—स्वकारणविशेषसमासादितस्वभावो विज्ञानमेव असतः प्रकाश इति पक्षः सदसतोः सम्बन्धाभावात् निराक्रियते । तत्र सता विज्ञानेन सह असतो रजतादेरविनाभावसम्बन्ध उक्त रीत्या स्यादिति प्राप्ते मैवमित्यादिना मूले समाधीयत । नयनप्रसादिन्यां च अविनाभावः कः, कतिविधः, क्व च भवतीत्यादि धर्मकीर्तिरचितन्यायबिन्दुग्रन्थमाधारीकृत्य व्युत्पाद्य कोऽपि अविनाभाव. प्रकृते न सम्भवतीति प्रतिपादितम् । तत्र न्यायबिन्दुग्रन्थतात्पर्यमुच्यते ।

न्यायबिन्दौ द्वितीयपरिच्छेदे स्वार्थानुमानस्य तृतीये च परार्थानुमानस्य विवेचनं कृतम् । तथाहि अनुमानं द्विधा— स्वार्थं परार्थञ्चेति । तत्र स्वार्थं त्रिरूपाल्लिङ्गाद् यदनुमेये ज्ञानं तदनुमानम् । लिङ्ग्यते गम्यते अनेतार्थमिति लिङ्गम्, तच्च त्रिविधम् । त्रिरूपाल्लिङ्गाद् उत्पन्नमनुमेयालम्बनं ज्ञानं स्वार्थानुमानमिति । तत्र लिङ्गस्य त्रैरूप्यं निरूपितम् । लिङ्गस्यानुमेये सत्त्वमेवेति एकं रूपम् । अनुमेयोऽत्र जिज्ञासितविशेषो धर्मी । जिज्ञासितो ज्ञातुमिष्टो विशेषो धर्मो यस्य, स तथोक्तः । पक्ष इति यावत् । तत्र सत्त्वं हेतोरेकं रूपम् । सपक्ष एव सत्त्वमिति द्वितीयं रूपम् । साध्यधर्मसामान्येन समानोऽर्थः सपक्षः । असपक्षे चासत्त्वमेव निश्चितमिति लिङ्गस्य तृतीयं रूपम् । न सपक्षोऽसपक्षः, ततोऽन्यस्तद्विरुद्धस्तदभावश्चेति लिङ्गस्य त्रैरूप्यं निरूपितम् । पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वं हेतुत्रैरूप्यमिति भावः । एवञ्च त्रिरूपाणि लिङ्गानि त्रीण्येव तानि च अनुपलब्धिः, स्वभावः, कार्यञ्चेति । प्रतिषेध्यस्य साध्यस्यानुपलब्धिरुक्तरूपेण त्रिरूपा । विधेयस्य साध्यस्य स्वभावोऽपि त्रिरूपः । कार्यञ्च त्रिरूपमिति । तत्रानुपलब्धेरुदाहरणम्— तत्रानुपलब्धिर्यथा न प्रदेशविशेषे क्वचिद् घट उपलब्धिक्षणप्राप्तस्यानुपलब्धेरिति । अत्र क्वचित् प्रदेशविशेषो धर्मी न घट इति साध्यम् । उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति हेतुः । उपलब्धिर्ज्ञानम् । तस्या लक्षणं जनिकासामग्री, तया

१. नयन० पृ० १२२ ।

ह्यनुपलब्धिर्लक्ष्यते, तत् प्राप्तोऽर्थो जनकत्वेन सामग्र्यन्तर्भावाद् उपलब्धिलक्षण-प्राप्तो दृश्य इत्यर्थः।

ननु केयमुपलब्धिलक्षणप्राप्तिरिति चेद् उपलब्धिलक्षणप्राप्तिरुपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च। उपलम्भप्रत्ययाश्चत्वारोऽधिपतिसहकारिसमनन्तरालम्बनरूपाः, तेषु आलम्बनप्रत्ययं परित्यज्य प्रत्ययान्तराणां समवधानम्। अथवा स्वभावविशेष एवोपलब्धिलक्षणप्राप्तिः। स्वभावविशेषश्च यः स्वभावः सत्सु अन्येषु समनन्तरादिप्रत्ययेषु यत् प्रत्यक्ष एव भवति, स स्वभावः। एवञ्चानुपलब्धिरभावावेदिका। द्वितीयो लिङ्गभेदः स्वभाव इति, स च स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः, यथा वृक्षोऽयं शिंशपात्वादिति। तत्र स्वस्यात्मनो हेतोः सत्तामपेक्ष्यैव विद्यमानो भवति, न तु हेतुसत्ताया व्यतिरिक्तं कञ्चिद्हेतुमपेक्षते, स स्वसत्तामात्रभावी साध्यः। तस्मिन् साध्ये यो हेतुः, स स्वभाव इति। अयं वृक्षः शिंशिपात्वादित्यादौ वृक्षत्वं शिंशिपात्वातिरिक्तं न किञ्चिद् उच्चत्वादिकमपेक्षते। अयं हेतुः स्वभावः। तादात्म्यप्रयोज्य इति भावः। कार्यं यथाग्निरत्र धूमादिति कार्यं धूमो वह्नेरिति लोकदृष्टः।

तत्र त्रिष्वपि लिङ्गेष्वेक प्रतिषेधस्याभावस्य हेतुः, द्वौ च वस्तुसाधनौ। विधेर्गमकाविति भावः।

स्वभावप्रतिबद्धत्वाद् हि साधनेन साध्योऽर्थो गम्यते। अन्यथा अव्यभिचारनियमाभाव आपद्येत। अव्यभिचारनियमश्चाविनाभावः। तेन च गम्यगमकभावो निर्धार्यते। स च प्रतिबन्धः सम्बन्धः साध्येऽर्थे लिङ्गस्य वस्तुतस्तादात्म्यात् साध्यार्थाद् उत्पत्तेश्चेति। अतः स्वभावस्य अतदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात्। यस्मात् स्वभावे कार्ये एव च तदात्म्यतदुत्पत्ती स्थिते तन्निबन्धनश्च गम्यगमकभावः, तस्मात्ताभ्यामेव कार्यस्वभावाभ्यां वस्तुनो विधेः सिद्धिः।

इदमेव तत्त्वं चित्सुखीग्रन्थे उक्तम्। अतदुत्पत्तेरतदात्मनश्चानुभवस्य तदविनाभावासम्भवादिति। एतत्त्रिविधं लिङ्गं परार्थानुमाने साधर्म्यवैधर्म्यभेदाद् द्विधा। दृष्टान्तविधर्मिणा सह साध्यधर्मिणः सादृश्यं हेतुकृतं साधर्म्यमुच्यते। असादृश्यञ्च हेतुकृतं वैधर्म्यमुच्यते। तत्र यस्य साधनवाक्यस्य साधर्म्यमभिधेयम्, तत् साधर्म्यवत्। यथा यत् कृतकम्, तदनित्यम्, यथा घटः। यथा च कृतकः शब्द इत्यत्र कृतकत्वकृतं दृष्टान्तसाध्यधर्मिणोः सादृश्यमभिधेयम्। यस्य तु वैधर्म्यमभिधेयम्, तद् वैधर्म्यवत्। यथा यन्नित्यं तदकृतकं दृष्टं यथाऽऽकाशम्, शब्दस्तु कृतक इति कृतकत्वाकृतकत्वकृतं शब्दाकाशयोरसादृश्यमभिधेयम्।

तत्रानुपलब्धिरूपलिङ्गस्य साधर्म्यवत् प्रयोगः। तत्र साधर्म्यवद् उपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः सिद्धः। यथान्यः कश्चिद् दृष्टः शशविषाणादिः। नोपलभ्यते च क्वचित् प्रदेशविशेषे उपलब्धिलक्षणप्राप्तो घट

इति । एवमेव स्वभावकार्ययोरपि साधर्म्यवद् वैधर्म्यवत् प्रयोगास्तत्र निर्दिष्टाः । स्वभावकार्याख्यौ तु भावबोधकाविति पूर्वमेवोक्तम् । तथा चाविनाभावसम्बन्धबोधको स्वभावकार्याख्यौ हेतू ।

अत एवोक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्न च दर्शनात् ॥

एवञ्च सपक्षदर्शनाद् विपक्षाऽदर्शनाद् वा अन्वयव्यतिरेकाभ्यामविनाभावस्य निश्चयो भवति । तथा चाविनाभावसम्बन्धस्य प्रयोजकौ तदुत्पत्तिस्तदात्मत्वमेव स्थितौ ।

प्रकृते चानुपलब्धेः कथैव नास्ति । विज्ञानस्य स्वकारणासादितासदर्थबोधकस्वभावत्वात् । नन्वस्तु स्वभावाविनाभाव इति चेत्, न, सदसतोः स्वभावस्वभावित्वाभावात् तादात्म्याभावादित्यर्थः । अस्तु तर्हि कार्यकारणभावप्रयुक्ताऽविनाभाव इति चेत्, न, विज्ञानस्यासदुत्पत्त्यभावाच्च न कार्यकारणभावः । न हि असदुत्पद्यते, एवं सति असत्त्वमेवापगच्छेत् । नयनप्रसादिन्यां लिङ्गमेवाविनाभावशब्देन गृहीतमिति बोध्यम्, लिङ्गत्वस्याविनाभावप्रयुक्तत्वात् । एवञ्च त्रिष्वपि अविनाभावेषु अव्यभिचरितसम्बन्धेषु कोऽपि विज्ञानासतोर्न सम्भवतीति सम्बन्धाभावाद् विज्ञानमेवासद्रजताकारेण परिणमते स्वप्रत्ययासादितस्वभावभेदमिति असत्ख्यातिवादिनां प्रलाप एवासन्निति तात्पर्यम् ।

॥ इत्यसत्ख्यातिमतविचारः ॥



# अथानिर्वचनीयत्वेऽनुमानप्रमाणम्

"विमतमनिर्वचनीयं बाध्यत्वात्, यन्नैवम्, तन्नैवम् यथात्मेति। न चाप्रसिद्ध-विशेषणः पक्षः, यस्मात्—

एकालम्बनसंसर्गनिषेधे सदसत्त्वयोः।
धर्मत्वाद् रूपरसवत् सिद्धानिर्वचनीयता ॥ ४।

विवादाध्यासिते सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद् रूपरसवदिति अनिर्धारितधर्मिनिष्ठतया सामान्यतः सिद्धस्य सदसद्वैलक्षण्यस्य केवलव्यतिरेकिणो रजतधर्मिनिष्ठतयोपसंहारादप्रसिद्धविशेषत्वाभावात्[1]"।

"अत्र च भावत्वाभावत्वे सत्त्वासत्त्वे एक धर्मिनिष्ठौ यावत्यन्ताभावौ, तत्प्रतियोगिनी धर्मत्वाद् यौ धर्मौ, तौ एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ, यथा रूपरसौ, तथा चामू, ततस्तथेति प्रयोगः। भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितयार्थान्तरतानिवृत्त्यर्थं एकधर्मीत्युक्तम्। सत्त्वमसत्त्वानाधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वाद् रूपादिवदिति तु प्रयोगशरीरम्। न चार्थान्तरता सतोऽसतो वोभयात्यन्ताभावद्वयाधिकरणत्वाभावाद् मिलितयोश्चैकत्वाभावाद् एकत्वे वा सदसदन्तर्भूततायामुभयाभावाधिकरणत्वायोगात्। अनन्तर्भूतत्वे च सिद्धं नः समीहितमिति क्वार्थान्तरता?

न च प्रमेयत्वादौ व्यभिचारः, तेषामपि वेदान्तिमते पूर्वोदितन्यायेनैवात्मनिष्ठात्यन्ताभावप्रतियोगित्वात्। न च वैपरीत्यानुमानम्, धर्मत्वहेतो रूपादावनैकान्तिकत्वात्। अपरे त्वेतदेवमनुमानं समर्थयामासुः—सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अनात्मनिष्ठात्यन्ताभावप्रतियोगित्वाद् रूपादिवदित्यत्र विवक्षितम्। तेन चैतत् परिहृतं भवति। धर्मत्वहेतोर्वाच्यत्वादिना व्यभिचारः। अथ तस्यापि निधर्मके ब्रह्मणि अभावेनाव्यभिचारः, तर्हि तस्मिन्नेव ब्रह्मणि निर्धर्मकतया उक्तासाध्यसिद्धेः न जडानिर्वाच्यतासिद्धिरित्यर्थान्तरता स्यात्। न च व्याघातः, परस्परविरुद्धयोरपि नित्यत्वानित्यत्वयोरिव शुक्तिरजतादिससर्गेषु व्यावृत्तिसम्भवात्। अत एव विवादाध्यासिते सत्वासत्वे एकानात्मनिष्ठसंसर्गाभावप्रतियोगिनी न भवतः परस्पराभावरूपत्वाद् नित्यत्वानित्यत्ववदिति न सत्प्रतिपक्षताऽपि, आरोपितसंसर्गे एवोभयव्यावृत्त्या साध्यविकलत्वादिति। तदेतदसमीचीनमिव, मेयत्वादेरपि सर्वधर्मविधुरे ब्रह्मण्यवृत्तेरव्यभिचारभूमित्वात्। न चार्थान्तरता निर्धर्मके ब्रह्मणि अत्यन्ताभावस्याप्यवृत्तेः, वृत्तौ वा सत्त्वस्यापि वृत्तेरनर्थान्तरत्वात्। कथं तर्हि सत्वासत्वयोस्तत्तदत्यन्ता-

१. चि०, पृ० १४२।

भावयोर्ब्रह्मण्येव वर्तनम् ? किमत्र चित्रं प्रत्यायकश्रुतौ सत्याम्। परस्परप्रतिपेक्षरूपयोर्भावाभावयोः संयोगादेरेकवृत्तित्वेष्टेश्च स्वस्मिन्नेव च मेयत्वाद्यवृत्तेर्वृत्तौ चात्माश्रयात्। प्रसाधयिष्यते चायमर्थः। व्याघातस्तु नियमानङ्गीकारेणैवात्र परिहृतः। न च नित्यत्वानित्यत्वव्यावृत्तेरारोपप्रसंसर्गं उदाहरणम्। अत्यन्ताभावरूपस्य तस्य नित्यतायाः परैरङ्गीकृतत्वात्। न हि सत्ता तत्र जातिरूपिणी स्वरूपसत्त्वाङ्गीकाराद् अस्तित्वात्मकस्य च तस्याभावेऽपीष्टेरिति। एतेन सामान्यादीनां नित्यत्वं व्याख्यातम्। तद्यथान्यासमेवास्तु अनुमानम्। अलमतिवैदग्धीप्रकटनेन[1]"।

अयम्भावः—

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः॥ १३।

सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्वेन च यद् विचारं न सहते, तदनिर्वाच्यमित्यादिना प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमनिर्वाच्यत्वमिति अनिर्वचनीयताया लक्षणं कृतम्, ज्ञानबाध्यत्वं वाऽनिर्वाच्यत्वमिति वा।

इदानीं ख्यातत्वे सति बाध्यत्वान्यथानुपपत्तिरूपामर्थापत्तिं प्रमाणत्वेन उपन्यस्यानुमानमुपस्थापयति—विमतमनिर्वचनीयं बाध्यत्वात्, यन्नैवम्, तन्नैवम्, यथात्मेति। अस्मिन्ननुमाने साध्याप्रसिद्धिः। नहि क्वचित् सत्त्वस्यासत्त्वस्य चैकत्राभावः प्रसिद्ध इति। तत्र साध्यप्रसिद्धावनुमानम्—

विवादाध्यासिते सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रयोगिनी धर्मत्वात्, रूपरसवदिति। अनेन सामान्यतोऽनिर्धारितधर्मिणि साध्यप्रसिद्धिः। अत्र विभिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमादायार्थान्तरता स्यात्, अत एक धर्मीति। ननु प्रमेयत्वादेः केवलान्वयित्वात् तत्र धर्मत्वस्य सत्त्वात् साध्यस्य च एकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वस्याभावाद् व्यभिचारः स्यादिति चेत्, न, वेदान्तमते प्रमेयत्वादेर्ब्रह्मण्यसत्त्वात् केवलान्वयित्वाभावात्। तथाचानुमानम्—प्रमेयत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात्, रूपादिवदिति। अत आत्मनिष्ठात्यन्ताभावप्रतियोगित्वं प्रमेयत्वस्यापीति।

किञ्च प्रमेयत्वं प्रमेयत्व एव नास्ति, सत्वे च आत्माश्रयः स्यादिति मिथ्यात्वे मिथ्यात्वं तु दृश्यत्वादिना बोध्यम्। एवञ्च प्रमेयत्वादौ न व्यभिचारः।

ननु सदसत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी न धर्मत्वादिति विपरीतमेवानुमानं कथं नेति चेत्, न, रूपादौ व्यभिचाराद् धर्मत्वस्य सत्वात् तादृशप्रतियोगित्वाभावरूपसाध्यस्य चासत्वादिति।

ननु चात्र विवादाध्यासिते सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनो न परस्पराभावरूपत्वाद् नित्यत्वानित्यत्ववदिति सत्प्रतिपक्ष इति चेत्, न, संयोगतद-

१. नयन प्र० पृ० १४२।

भावयोः परस्पराभावरूपत्वाद् व्यभिचारात्। एकस्मिन् वृक्षे धर्मिणि संयोगस्य तदभावस्य च परस्परविरहरूपस्य स्वीकारात्।

प्रकृतानुमाने अत एव न परस्पराभावरूपत्वाभाव उपाधिः। यत्र परस्पराभावरूपत्वम्, तत्रैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इति उपाध्यभावसाध्याभावयोः सम्बन्धस्याव्यभिचरितत्वाभावात्। किञ्च सत्त्वासत्त्वं न परस्परविरहरूपमिति अद्वैतसिद्धौ प्रथममिथ्यात्वे साधितम्। तथाहि—तत्र प्रपञ्चो मिथ्या दृश्यत्वादित्यादौ किमिदं मिथ्यात्वं साध्यत इति जिज्ञासायां मिथ्याशब्दोऽनिर्वचनीयतावचन इति पञ्चपादिकावचनात् सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वम्। तच्च सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयम्। न च व्याहतिः। 'सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा परस्परविरहव्यापकतया वा परस्परविरहव्याप्यतया वा। तत्र नाद्यः, तदनङ्गीकारात्। तथा ह्यत्र त्रिकालाबाध्यरूपसत्त्वव्यतिरेको नाऽसत्त्वम्; किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्। तद् व्यतिरेकश्च साध्यत्वेन विवक्षितः। तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्। एवञ्च सति न शुक्तिरूप्ये साध्यवैकल्यमपि, बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात्। नापि व्याघातः, परस्परविरहरूपत्वाभावात्। अत एव न द्वितीयोऽपि सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात्। नापि तृतीयः, तस्य व्याघाताप्रयोजकत्वात्। गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात्[1]।

एवञ्च सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावाद् उक्तसत्प्रतिपक्षस्योपाधेश्च नावकाशः। साधनव्यापकत्वाच्च नोपाधिः।

एवमेव साध्याप्रसिद्धौ सत्त्वमसत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वात्, रूपादिवदिति तु प्रयोगशरीरम्, इत्यपि अनुमानं द्रष्टव्यम्। तत्र असत्त्वं वा सत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वादित्यपि। अत्रापि सत्त्वं असत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगि न तत्प्रतिषेधरूपत्वादित्यादिसत्प्रतिपक्ष इति चेत्, न, सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावात्।

न च ब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनानिर्वाच्यत्वाभावोपपत्त्या अर्थान्तरम्, सत्वरहितस्य प्रपञ्चस्य सद्रूपत्वे मानाभावेन बाधाद् ब्रह्मणि च शून्यतापत्तिरेव सद्रूपत्वे प्रमाणम्।

न च असदभावस्य प्रपञ्चे सिद्धत्वाद् अंशतः सिद्धसाधनमिति वाच्यम्, गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्, यन्नैवम्, तन्नैवम्, यथा घट इति मीमांसकप्रयुक्ते अनुमाने भेदवादिना तार्किकेण गुणगुणिनोः भेदस्य सिद्धत्वाद्

१. अद्वैतसिद्धिः, प्रथममिथ्यात्वनिरूपणे—पृ० १६।

अंशतः सिद्धसाधनदोषो न दीयते। तत्र मिलितसिद्धेरुद्देश्यत्वात्, तथैव प्रकृतेऽपि मिलितसिद्धिरुद्देश्या।

एवञ्च सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अनात्मनिष्ठात्यन्ताभावप्रतियोगित्वाद् रूपादिवदित्यपि अनुमानम्। नयनप्रसादिन्यां त्वेतदनुमानमसमीचीनमिवेत्युक्तम्। तत्र इव पदेन न कश्चिद् अत्र दोषः; अपि तु मूलानुमानस्य रूपान्तरकरणमयुक्तमिति तस्याभिप्रायः। तत्र आत्मनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरतानिवृत्त्यर्थंमनात्मनिष्ठेत्युक्तम्।

एवमेव [1]प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं सत्त्वासत्त्वोभयवृत्ति प्रपञ्चनिष्ठ व्यतिरेकप्रतियोगिमात्रवृत्तित्वाद् व्यवहार्यत्ववदिति। सदसदुभयवृत्तित्वं प्रपञ्चनिष्ठव्यतिरेकप्रयतियोगित्ववृत्ति सत्त्वासत्त्वोभयवृत्त्यशेषवृत्तित्वाद् भेदप्रतियोगित्ववद् इत्यादिना अद्वैतसिद्धौ उक्तानुमानेनापि साध्यप्रसिद्धिर्बोध्या।

॥ इत्यनिर्वचनीयत्वेऽनुमानप्रमाणम् ॥

●

१. अद्वैत० पृ० ६८८।

# अथ लोकवेदयोः शब्दार्थैक्यविचारः

"ननु कथं वेदान्तवाक्यानां सिद्धार्थबोधकत्वम् ? सकलपदानां लोके कार्ये एव संगतिग्रहणात् । लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायात्[1]"।

"निर्णीतं खल्विदं प्रमाणलक्षणे आकृत्यधिकरणे तदर्थचिन्तया । तथाहि—स्वरवर्णलोपागमादिवैलक्षण्याद् अनध्यायादिधर्मभेदात् लौकिकवैदिकव्यपदेशाच्च स्पष्टभेदयूपादिशब्दसाहचर्याच्च गोशब्दादेरपि लोकवेदयोर्भेदस्तद्भेदादश्ववालादि शब्देषु अर्थान्तरदर्शनात् "उत्ताना वै देवगवा वहन्ति", "तेजो वै घृतम्" इत्यादिषु उत्तानवहनादिविपरीतलिङ्गाच्चार्थभेद इति प्रापय्य प्रतिविदधे प्रत्यभिज्ञया तावदेकत्वं गवादिपदानामवगम्यते। न च स्वरवर्णलोपागमादिवैषम्यमात्रात् प्रत्यभिज्ञायमानशब्दस्वरूपभेदः, तदर्थोऽपि स एव, प्रत्यभिज्ञायमानत्वात्। उत्तानवहनादि तु स्तुतिर्न गवादिभेदप्रतिपादकम्। तस्माद् भेदकाभावाद् अभेदावगमाच्च शब्दार्थयोरैक्यमेव लोकवेदयोरिति लोकवेदाधिकरणे स्थितम्[2]"।

अयम्भावः—गोशब्दादेर्लोकवेदयोर्भेदोऽस्त्येव, स्वरवर्णलोपागमादिवैलक्षण्यात् अनध्यायादिधर्मभेदाद् लौकिकवैदिकव्यपदेशात् स्पष्टभेदयूपादिसाहचर्याच्च ।

तथाहि स्वरवैलक्षण्याच्छब्दभेदो भवति। लोके तावत् स्वरस्य न तथा आदरो यथा वेदे। स्वरयुक्ताद् गोशब्दाद् वैदिकाद् लौकिको गोशब्दो भिद्यत एव। वेदे स्वरप्राधान्यादेव महाभाष्यस्थलौकिकवैदिकशब्दोदाहरणं सङ्गच्छते। तत्र केषां शब्दानामनुशासनमिति पर्यनुयोगे लौकिकानां वैदिकानामित्युक्तम्। अनेनापि लौकिकवैदिकव्यवहारेण भवति उभयोर्भेदः। लौकिकोदाहरणे गौरश्वपुरुष इत्यादिपदान्येव पदानुपूर्वीनियमाभावात् प्रदर्शयति। वैदिकोदाहरणे आनुपूर्वीनियमात् "शं नो देवीरभिष्टये" इत्यादिवाक्यमेव प्रदर्शयति। आह नागेशः प्रदीपोद्द्योते "लोके स्वरानादराद् वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य शं न इत्यादीनां वैदिकोदाहरणत्वसङ्गतिः[3]"। अनेन स्पष्टमेवस्वरवैलक्षण्यं लौकिकवैदिकशब्दयोरायाति। अतो भेद एव।

किञ्च वेदेऽपि स्वरभेदात् शब्दभेद इष्ट एव, स्वरभेदाद् अर्थान्तरप्रतिपादकत्वात्। अत एवासन्देहार्थमध्येयं व्याकरणमिति व्याकरणप्रयोजनप्रतिपादन-

१. चि० पृ० १४६; २. न० प्र० १४६; ३. महाभाष्यम्—पृ० ६।

प्रसङ्गे महाभाष्ये भगवत्पतञ्जलिना स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति तस्यां सन्देहः, स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः, सेयं स्थूलपृषतीति। तत्रावैयाकरणः स्वरतोऽध्यवस्यति, यदि पूर्वपदप्रकृतिस्वरत्वंततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इत्युक्तम्। अनेन च स्वराच्छब्दार्थं भेदः स्पष्ट एव प्रतिपादितो भवति।

किञ्च तत्रैव—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

स्वरेण वर्णेनान्येन वा दुष्टो विकृतः सन्नशब्दः मिथ्याप्रयुक्तो भवति, अर्थान्तरानिष्ट-प्रतिपादनात्, न प्रतिपिपादयिषितार्थं प्रतिपादयति। श्रूयते किल इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्र इन्द्रशत्रुर्वर्धस्व इति मन्त्र ऊहितः तत्र इन्द्रस्य शातयिता शमयिता भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितः, न तु रूढिशब्दः। तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थभेदः। तत्रेन्द्रामित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भव इत्यत्रार्थे प्रतिपाद्ये अन्तोदात्ते प्रयोक्तव्ये आद्युदात्त एव ऋत्विजा प्रयुक्तः, इत्यर्थान्तराभिधानाद् इन्द्र एव वृत्रस्य शातयिता सम्पन्नः[1]।

अनेन च स्वरभेदाच्छब्दार्थभेदः सिद्धो भवति। स्वराश्च उदात्तानुदात्त स्वरिताः। उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरित इति पाणिनिसूत्रैस्तेषां लक्षणं कृतम्।

किञ्च स्वरा भेदका इति वृद्धिरादैजितिसूत्रे[2] भाष्ये उक्तम्, तथाहि— किमर्थमाकारस्तपरः क्रियते? आकारस्य तपरकरणं सवर्णार्थम्। तपरस्तत्काल-स्य इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात्। केषाम्? उदात्तानुदात्तस्व-रितानाम्। किञ्च कारणं न स्यात्, भेदकत्वात् स्वरस्य। भेदका उदात्तादयः। कथं पुनर्ज्ञायते भेदका उदात्तादय इति। एवं हि दृश्यते लोके य उदात्ते कर्तव्ये अनुदात्तं करोति, खण्डिकोपाध्यायस्तस्मै चपेटां ददाति, अन्यत्वं करोषीति[3]।

अत एव स्वरभेदाद् अनुनासिक्यभेदात् कालभेदाच्च अण्सवर्णान् न गृह्णीयाद्, अतस्तद् ग्रहणाय अणुदित्सवर्णस्य चाप्रत्यय इति सूत्रं चरितार्थम्[4]। तदेव बहुतरोदाहरणात् स्वरभेदाद् लोकवेदगतशब्दार्थभेदः स्थित एव।

वर्णभेदादपि उभयोर्भेदः। अत्र वर्णभेदो नाम वर्णविकारः। यथा—उद्ग्राभं निग्राभं चेति। हृग्रहोर्भश्छन्दसि इति हस्य भः। लोके तु उद्ग्राहो निग्राह इति भवति।

---

१. भा० प्रदीपः, पृ० १६; २. अ० सू० १।१।१।
३. महाभाष्यम्—१।१।१, पृ० १४२; ४. अ० सू० १।१।६९।

लोपेनापि भेदः—यथा देवा अद्रुहेति। दुहेर्लङो झस्यादादेशे कृते लोपस्त आत्मनेपदेष्विति तलोपः। बहुलं छन्दसीति रुटि अद्रुहेति रूपम्। लोके तु अदुहत इति भवति।

आगमो नामापूर्वशब्दोपजनः, तेनापि भेदो भवत्येव। यथा देवा अद्रुहेति रुडागमः। लोके तु नैव रुडागमो भवतीति भेदः। अत एव रक्षार्थं वेदानामध्येयं व्याकरणमिति प्रसङ्गे महाभाष्यकारैः लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यतीत्युक्तम्। तत्र लोपादीनामुदाहरणानि प्रदीपे स्पष्टानि। किञ्च, आर्षानार्षभेदादपि लोकवेदयोः शब्दभेदो भवत्येव। अत एव वेदशब्दानां सम्मानः।

किञ्च लौकिकवैदिकव्यपदेशादपि भेदः। अत एव महाभाष्ये केषां शब्दानां लौकिकानां वैदिकानामित्युक्तम्। लौकिकवैदिकयोश्च पृथगुदाहरणमपि तत्र तत्र निर्दिष्टम्।

किञ्च स्वाध्यायोऽध्येतव्य इत्यादिविधीनां वैदिकानां शब्दानां स्वाध्यायत्वेनाध्ययनं विधीयते, न लौकिकानाम्। वैदिकानामध्ययनेन पुण्यावाप्तिः, न लौकिकानामिति भवति भेदः। यूपादिशब्दसाहचर्याच्च भेदः। संस्कारविशिष्टः काष्ठविशेषो यूपः। लोके तु काष्ठ एव यूपः। एवञ्च यूपादिशब्दार्थो वेदप्रतिपाद्यः स्पष्ट एव लोकाद्भिन्नः। तत्साहचर्याद् अन्येऽपि शब्दा लोकाद् भिद्यन्ते। यूपादिशब्दो वेदेनैव प्रमितः 'अष्टाश्रिर्यूपः' इति।

उक्तञ्च महाभाष्ये शब्दानां प्रयोगे धर्म उत ज्ञाने इति विचारे। शास्त्रपूर्वके प्रयोगे धर्मस्तत्तुल्य वेदशब्देनेति। यथा वेदशब्दा नियमपूर्वकमधीता फलवन्तो भवन्ति, एवं यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते, सोऽभ्युदयेन युज्यत इति।

लोकवेदयोः स्पष्ट एव शब्दभेदः प्रतिभाति। एवञ्च शब्दभेदाद् अर्थभेद इति न्यायाद् अर्थभेदोऽपि भवत्येव। यद्यपि पर्यायशब्दभेदाद् अर्थभेदो नास्ति, तथाऽपि अन्यत्र अस्त्येव।

उत्ताना वै देवगवा वहन्ति, इत्यादिषु उत्तानवहनादीनां लोकविपरीतलिङ्गाद् अर्थभेदो युक्त एव। न हि लोके गाव उत्ताना वहन्तीति दृष्टम्। एतेन लोकवेदयोः शब्दार्थभेदः स्पष्ट एव प्रतिपादितो भवति।

अत एव लोकवेदाधिकरणे[1] जैमिनिसूत्रे शब्दार्थौ भिन्नौ लोकवेदयोः, देवाः, भवति, कर्णैः, इति लोके रूपाणि, देवासः, भवाति, कर्णेभिरिति वेदे रूपाणीति रूपभेदात्। मनुष्यगवास्त्ववाञ्चो वहन्ति उत्ताना हि देवगवा वहन्ति इति चार्थभेदादस्ति शब्दार्थयोर्भेद इति।

---

१. जै० सू० १।३।३०।

अत्रोच्यते—यद्यपि उक्तरूपेण शब्दार्थयोर्भेदोऽस्ति तथापि; प्रत्यभिज्ञया सोऽयं गौशब्दः, सोऽयं गवार्थं इत्यभेदबोधे न तेन भेदेन बाधो भवति। अन्यथा प्रत्युच्चारणं शब्दभेदेन कालदेशकृतार्थभेदेन च क्वापि शब्दैक्यमर्थैक्यञ्च न स्यात्। अतो यथा तत्कालैतत्कालयोर्विरोधेऽपि देवदत्ते सोऽयमिति प्रत्यभिज्ञा भवति; तथैव सत्यपि भेदकसामग्रीबाहुल्ये प्रत्यभिज्ञा भवत्येव। प्रतिव्यक्तिसमुच्चारिते ककारे सोऽयं ककारोऽनेनापि उच्चारित इति भवत्येव सदृशी प्रख्या। अत एव ह्रस्वदीर्घ-कुब्जादिव्यक्तिभेदेऽपि समानप्रख्याविशेषाद् जातिसिद्धिः। अत एव इदान.मुच्चारिते वेदशब्दे 'अयं वेदशब्द' इति व्यवहारः। केनापि पाणिन्यादिसूत्रेषूच्चारितेषु इमानि तान्येव सूत्राणीति भवति प्रत्यभिज्ञानम्।

स्वरभेदेऽपि सोऽयं शब्द इदानीं किञ्चित्स्वरेण उच्चारित इति भवत्येवाभेदप्रत्ययः, यथा स एव देवदत्त इदानीं अङ्गदी सन् वर्तत इति।

एवं वर्णविकारलोपागमरूपभेदेष्वपि बोध्यम्। न्यूनातिरेककृतस्वरूपभेदे सत्यपि अर्थप्रतीत्यौपयिकधर्मभेदाभावाद् न पदभेदः। यथार्थप्रतीत्यौपयिकधर्मभेदे तत्र भिद्यत एव पदम्। यथा स्थूलपृषतीत्यादौ पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहिः। अन्तोदात्तत्वे च तत्पुरुष इति भवति तत्र शब्दार्थभेदः। तत्रार्थभेदाच् शब्दभेदोऽपि बोध्यः। भेदकाः स्वरा इति तु पूर्वपक्षः। तत्रैव अभेदकाः स्वरा इत्येव न्याय्य-मित्युक्तम्। अत एव "अस्थिदधिसक्थि०" ७।१।७५ इत्यादिसूत्रे उदात्तग्रहणं चरितार्थम्, अन्यथा उदात्तमेवानङ् उच्चार्येत। अत एव "यू स्त्र्याख्यौ नदी" १।४।३ इति सूत्रे व्यक्तिपक्षे दीर्घनिर्देशाद् अन्यत्वेन ग्राहकसूत्राप्राप्त्या उदात्ताद्यन्यतमो-च्चारणेऽन्यस्वरकस्य संज्ञा सिद्धयतीति। निरूपितञ्चैतत् परिभाषेन्दुशेखरे[1] "अभेदका गुणाः" इति परिभाषानिरूपणावसरे। तत्र हि असति यत्ने स्वरूपेणो-च्चारितो गुणो न भेदको भवतीति सिद्धान्तितम्।

लौकिकवैदिकव्यपदेशस्तु प्रयोगभेदज्ञानाय व्याकरणानुशास्यशब्दविषय-ज्ञानार्थम्। किं वा तेन व्यपदेशेनापि न प्रत्यभिज्ञाया विरोधः। एवमेवान्यत्रापि बोध्यम्।

अर्थभेदोऽप्यस्ति। उत्ताना वै देवगवा वहन्तीति स्तुत्यर्थमुत्तानवहनादि कीर्त्यते, न च तत्र ये उत्ताना वहन्ति, ते गाव इति विधातुं शक्यते, उत्तानवहनस्या-प्रसिद्धत्वात्।

यदि च वैदिकाः शब्दा अर्थाश्च लोकाद् भिन्नाः स्युः, तदा तयोर-पूर्वत्वेन शक्तिग्रहासम्भवाद् वेदार्थज्ञानं न जायेत। अतोऽभिन्नौ एव शब्दार्थौ। अभेदश्चोभयोः प्रत्यभिज्ञाकृतः। ननु प्रत्यभिज्ञया कृताभेदेनैवोपपत्तौ किमर्थं तर्हि

१. परिभाषेन्दुशेखरे—पृ० ३२४।

जातिः स्वीक्रियते। 'ब्राह्मणं न हन्यात्' इत्यादौ ब्राह्मणव्यक्तिरेव वाच्या, प्रत्यभिज्ञया सर्वब्राह्मणनिषेधोपपत्तौ किं जात्या? उपपादितञ्चैतद् महाभाष्ये "सरूपाणामेकशेष एकविभक्तौ[1]" सूत्रे द्रव्याभिधानं व्याडिः, चोदनासु च तस्यारम्भात्। चोदनासु च तस्यारम्भान्मन्यामहे द्रव्यमभिधीयत इति गौरनुबन्ध्योऽजोऽग्नीषोमीय इति आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्त इति[2] चेत्, न, लाघवात् प्रख्याविशेषाद् आकृतिः स्वीक्रियते। प्रख्या बुद्धिः, तस्या अविशेषात् एकरूपत्वात् तद्विषयस्याप्यैक्यं प्रतीयते। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषुगौगौरित्येकाकारप्रत्ययोदयाद् अवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिस्वीकारः।

व्यक्तिपक्षोऽपि स्वीकृत एव। अत्र पक्षे आनन्त्यव्यभिचारदोषः प्रसज्यते। स च दोष एवं निरस्तो वेदितव्यः—व्यक्तिर्द्रव्यम्, तच्च तत्तत्संस्थानाद्युपलक्षितमधिष्ठानचैतन्यमेवेति नोक्तदोषः। संस्थानैक्यात् प्रत्यभिज्ञया च सर्वेषां घटादीनां ग्रहणम्। उक्तञ्चेमौ पक्षौ 'अ इ उ ण्' इति सूत्रे महाभाष्ये। आकृतिग्रहणात् सिद्धमिति जातिपक्षे। रूपसामान्याद्वेति व्यक्तिपक्षे। तत्र प्रदीपे कैयटः—"व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽस्तीति सिद्धमिष्टम्। व्यक्तिव्यतिरिक्तं तु सामान्यं भवतु, मा वा भवतु, सर्वथा लोक इव शास्त्रे व्यवहारः[3]"।

तत्रैव प्रदीपोद्द्योते नागेशः—"रूपसादृश्यनिबन्धनः प्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः। अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु 'गौः' 'घटः' इत्यादि व्यवहारवदिति भावः। एवञ्च व्यक्तिव्यतिरिक्तजातिस्वीकारो व्यर्थ एव। अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरिति भावः। सादृश्यञ्चात्र समानध्वनिकृतम्[4]"।

एवञ्च केवलव्यक्तिपक्षेऽपि रूपसामान्यात् सादृश्यनिबन्धनप्रत्यभिज्ञया लोकवेदयोः शब्दार्थैक्यं सिद्धमिति। एतदेव सर्वं मनसि कृत्वा नयनप्रसादिन्यामुक्तम्। न च प्रत्यभिज्ञया अभेदे सर्वथा भेदस्य निरासो भवति, तथा च लोपागमादिरूपभेदे सत्यपि न दोषः।

॥ इति लोकवेदयोः शब्दार्थैक्यविचारः ॥

---

१. अ० सू० १।२।६४;

२. तत्रैव म० भा० पृ० ६५।

३. तत्रैव कैयटः, पृ० ७१;

४. तत्रैव प्रदीपोद्द्योते—पृ० ७१।

प्रथमपरिच्छेदे

# अथ सिद्धार्थशक्तिग्रहविचारः

पूर्वोक्तरीत्या लोकवेदयोः शब्दार्थैक्ये निर्णीते लोकावगतसामर्थ्यः शब्दः वेदेऽपि बोधकः। लोके च सकलपदानां कार्य एव संगतिग्रहणाद् वेदान्तवाक्यानामपि लोकावगतसामर्थ्यात् कथं सिद्धार्थबोधकत्वम्। उक्तञ्च आम्नायस्य क्रियार्थत्वाद् आनर्थक्यमतदर्थानामिति[1] अर्थवादवाक्यानां प्रामाण्याप्रामाण्यचर्चाप्रसङ्गे। तत्र विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरितिर्निणायः[2]।

विधिविषयाणां वायव्यं श्वेतमालभेत भूतिकाम इति विहितवायुदेवतादीनां स्तुत्यर्थेन स्तुतिसापेक्षेण विधिना वाक्यैकवाक्यत्वाद् विधेयं स्तुवन्तो अर्थवादा धर्मे प्रमाणानि। तत्र वायुर्वैक्षेपिष्ठा देवता इत्यादि अर्थवादवाक्यानां प्राशस्त्ये लक्षणा प्राशस्त्यस्य च विधिवाक्येऽन्वयः। यथा वायव्यं श्वेतमालभेत, तच्च प्रशस्तमिति। एवञ्चार्थवादवाक्यानां स्वतः प्रवृत्तिनिवृत्तिशून्यत्वेऽपि परिनिष्ठितवस्तुप्रतिपादकत्वेऽपि विधिवाक्यान्वयद्वारा परम्परया क्रियार्थत्वोपपत्तेः तेषां प्रामाण्यं स्थितम्।

ननु विधिवाक्यस्य अर्थवादवाक्येन सहाकाङ्क्षाऽभावात् कथमेकवाक्यतेति चेत्, न, विधेः प्रवर्तकत्वांशभावपूरणेन साकाङ्क्षत्वात्।

अयम्भावः—विधेः संक्षेपतो रूपद्वयम् अज्ञातज्ञापकत्वम्, अप्रवृत्तप्रवर्तकत्वञ्च। प्रथमं तावद् आर्थीभावना ज्ञापयति पुरुषम्। एतत्फलिका एतत्कारणिका एतदितिकर्त्तव्यताका त्वदीया कृतिरिति। एतदेवाज्ञातज्ञापकत्वमुच्यते। पश्चात् तद्बोधेन फलरागं सम्पाद्य तस्यां पुरुषं प्रवर्तयति, एतदेवाप्रवृत्तप्रवर्तकत्वं विधेरुच्यते। इयमपि प्रवर्तनाख्या शाब्दी भावना अप्रवृत्तप्रवर्तकत्वलक्षणा अंशत्रयवती—किम्, केन, कथमिति। तत्र किमंशोऽर्थभावनया पूर्यते, करणांशस्तु मामेवं वेदो ज्ञापयतीति ज्ञानेन पूर्यते, कथमंशस्तु प्राशस्त्यबोधेन रागोत्पत्तिद्वारा। प्राशस्त्यबोधस्तु अर्थवादवाक्यैर्लक्षणया जन्यत इति। विधेः शाब्द्या भावनायाः कथमंशप्रपूरणेन सहकारितया अर्थवादानामपि क्रियार्थत्वमुपपद्यत एव। उक्तञ्च—

लिङ्गोऽभिधा सैव च शाब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥

अयमर्थः—यजेतेत्यादौ प्रत्ययांशे अस्ति अंशद्वयम्—लिङ्त्वमाख्यातत्वमिति, तत्र लिङा अभिधा वाच्या, सैव च शाब्दी भावना उच्यते। आख्यातवाच्या चार्थी भावनेति द्विविधा भावना। तत्र शाब्दी भावनाशंत्रयवती भाव्यकरणेतिकर्त्तव्य-

---

१. जै० सू० १।२।१; २. तत्रैव—१।२।७।

तारूपवती। अभिधारूपशाब्दभावनाया सविषयकत्वात् किं भावयेदिति भाव्याकाङ्क्षायां समानप्रत्ययोपात्तत्वप्रत्यासत्त्याशंत्रयवती आख्यातवाच्यार्थीभावना विषयत्वेनोपतिष्ठते। इयमेव साध्याकाङ्क्षेति व्यवह्रियते। केनेति करणाकाङ्क्षायां मामेवं वेदो ज्ञापयतीति लिङादिपदज्ञानं करणत्वेनान्वेति। करणत्वञ्च भावनाभाव्यनिर्वर्त्तकत्वम्। अर्थवादवाक्यजन्या प्राशस्त्यरूपा स्तुतिः सहकारिकारणम्, अन्यथा कष्टं कर्म इति न्यायाद् आलस्यादिना वा पुरुषो न कर्मणि प्रवर्तेत। इयमेवेतिकर्त्तव्यतेत्युच्यते।

एवमार्थीभावनाऽपि अंशत्रयवती–किं केन कथमिति। तत्र किमित्याकाङ्क्षायां स्वर्गकामादिपदसन्निधानात् स्वर्गो भाव्यतयाऽन्वेति। यागस्यासुखरूपतया अपुरुषार्थत्वेन करणत्वेनैवोपस्थितत्या न भाव्यत्वम्। अत एव तत् समानाधिकरणज्योतिष्टोमादिपदात् तृतीया। केनेत्याकांक्षायां यागः करणत्वेनान्वेति। सहकार्याकाङ्क्षारूपे कथमित्याकाङ्क्षायां समिधो यजतीत्यादिवाक्यावगतसमिन्नामकयागादिक्रियाजातमितिकर्त्तव्यतयाऽन्वेति इति। अत एवोक्तम्—

अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सा चाख्यातस्य गोचरः॥

पूर्वोक्तरूपद्वयमपि विधेः प्रकारान्तरेणोत्पत्तिविनियोगाधिकारप्रयोगलक्षण व्यापारभेदाच् चतुर्धा व्यपदिश्यते। तत्र कर्मस्वरूपमात्रं ज्ञापयन् विधिर्विनियोगः। फलसम्बन्धं ज्ञापयित्वा तत्र पुरुषं प्रवर्तयन् अधिकारः। क्रमान्तं सर्वमुपसंहृत्यानुष्ठापयन् प्रयोग इति। तत्राग्निहोत्रं जुहोति, दध्ना जुहोतीत्याद्युदाहरणम्।

तदेवम् अर्थवादवाक्यानामपि विधिनैकवाक्यत्वात् सिद्धं क्रियार्थत्वम्। तत्राम्नायस्येत्यनेन समग्रस्य शास्त्रस्य क्रियापरत्वं प्रदर्शितम्। उक्तञ्च—'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते'। एवञ्च वेदान्तानामपि आम्नायत्वात् तेषामपि सिद्धार्थबोधकत्वे प्रामाण्यं स्यात्, अतः कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाशेषत्वम्, उपासनादिक्रियान्तरविधानार्थत्वं वा स्यात्, अन्यथा अप्रामाण्यापत्तिः स्यात्। एतत् सर्वं समन्वयाधिकरणे ब्रह्मसूत्रे पूर्वपक्षे भगवत्पादैः, तट्टीकाकारैश्च विस्तरेण प्रतिपादितम्।

किञ्च सिद्धे शक्तिग्रहोऽपि न सम्भवति शब्दानाम्, शक्तिग्रहाभावे च कथं सिद्धार्थबोधकत्वम्। लोके च कार्यान्विते एव शक्तिग्रहः सम्भवति। तथा च सर्ववादिसम्मतव्यवहारतः शक्तिग्रहप्रक्रियायां कार्ये एव शब्दसामर्थ्यमवधार्यते। तथाहि लोके प्रवर्तकवचनश्रवणसमनन्तरं श्रोतुः प्रवृत्तिमुपलभ्य प्रवृत्तिलिङ्गेन

प्रवर्तकप्रत्यये पदसमुदायस्य सामर्थ्यमधिगम्य पुनरवापोद्धाराभ्यां च प्रत्येकं कार्यान्विते पदानां संगतिग्रहणात् । अयम्भावः—गामानयेति उत्तमवृद्धवचनश्रवणसमनन्तरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा बाल इत्थं प्रत्येति ज्ञानपूर्विकेयं प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयस्तन्यपानादिविषयकप्रवृत्तिवत् । तथैव स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्वं चानुमाय तस्मिन् शब्दानन्तरभाविनि शब्दशक्तिं गृह्णाति । सर्वत्र च कार्यान्वयाव्यभिचारात् तदन्वितपदार्थेषु शक्तिं गृह्णाति । इत्थं च सामन्यतो गामानयेति पदसमुदायस्य गवानयनरूपे कार्ये सामर्थ्यं गृह्णाति, तदनन्तरं च गां बधान, अश्वमानयेति वाक्येषु आनयनगोशब्दयोरुद्धारे तदर्थयोरपि उद्धारात् प्रक्षेपे च प्रक्षेपदर्शनाद् अन्वयव्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यं गृह्णाति । सर्वत्र च कार्यान्वयाव्यभिचारात् कार्यान्वितपदार्थेषु शक्तिं गृह्णाति, न पुनः पदार्थमात्रे, नाप्यन्यमात्रान्विते । प्रथमावगताव्यभिचारिकार्यान्वयपरित्यागे प्रमाणाभावात् । कार्यमात्रस्य च सर्वत्र सत्त्वात् । तत्र कश्चित् शब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पाद्यते, कश्चिच्च कार्यान्वितस्वार्थपरतया । तथा च कार्यान्वितस्वार्थाभिधानेऽन्येषाम्, लिङ्गादिस्तु कार्याभिधाने व्युत्पाद्यत इति । एतेन कार्यस्य कार्यान्तराभावेन कार्यपदस्य कार्यान्वितस्वार्थाभिधायित्वानुपपत्तेरिति निरस्तम् । कार्यान्वयान्वयिनि कार्यपरपदार्थान्विते वा पदशक्तिग्रहाभ्युपगमेऽदोषात् ।

एवञ्च विज्ञानमानन्दं ब्रह्मेत्यादि शब्दानामपि द्रष्टव्य इत्यादि विधिशेषतया कार्यपरत्वात् । तदेवं लौकिकानां वैदिकानाञ्च सर्वेषां पदानां कार्यपरत्वात् कथं वेदान्तानां सिद्धार्थबोधकत्वम् ? एवञ्च सर्वत्र कार्यत्वाश्रयमुख्यविशेष्यक एव वाक्यार्थबोधः । सिद्धार्थकस्थले तु प्राभाकरैः शाब्दबोधानङ्गीकारात् । कार्यपरमेव लौकिकं वैदिकं वा वाक्यम् । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतया पूर्वमिति चाख्यायते । स लिङ्गादिविध्यर्थः । कार्यत्वं कृतिसाध्यत्वम्, कृत्युद्देश्यत्वं वा ? तेनैव रूपेण लिङ्गादिनाऽपूर्वस्य प्रतीतेः । तत्र विशेषणीभूतकृतेराश्रयविषययोराकांक्षायां विषयतया धात्वर्थो याग आश्रतया च स्वर्गकामः सम्बध्यते । तथा च स्वर्गकामो यजेतेत्यादौ स्वर्गकामकृतिसाध्यो तदुद्देश्यो वा यागविषय इति कार्यमुख्यविशेष्यको बोधो लौकिकलिङ्स्थले तु कार्यत्वमेवोक्तरूपं लिङर्थः, तस्य तृप्तिकामो भुञ्जीतेत्यादौ भोजनेऽन्वयात् तृप्तिकामस्य भोजनं कार्यमिति बोधः ।

इष्टसाधनत्वं तु न विध्यर्थः । क्षणिकतयाऽवगते यागे तस्य बोधयितुमशक्यत्वात् । किञ्च प्रत्यहं शुचिः सन्ध्यामुपासीतेत्यादिविधेरप्रामाण्यप्रसङ्गात् नित्यस्य कर्मणः फलाजनकत्वेन इष्टसाधनताज्ञानासम्भवात् । प्राभाकरमते च न तत्र फलापेक्षा । तत्र वैदिके कर्मणि वेदबोधितमपूर्वमुद्दिश्यैव पुरुषः प्रवर्तत इति । एवं नैमित्तिकेष्वपि बोध्यम् ।

न च तादृशापूर्वेप्र माणाभाव इति वाच्यम्, अपूर्वस्याख्यातपदप्रतिपाद्यत्वाधिकरणे जैमिनिसूत्रे (२।१।१) आख्यातस्य नियोगोऽर्थः। नियोगे च प्रमाणमुपन्यस्तम्, तथा हि–भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते (जै.सू. २।१।१)। अयम्भावः—सोमेन यजेतेत्यादिवाक्ये सोमपदयागपदयोस्तदर्थयोः विनिगमनाविरहाद् अपूर्वद्वारा फलसम्बन्ध इति अनेकापूर्वकल्पनागौरवाद् एकस्माद् अपूर्वमिति सिद्धौ किं सोमपदार्थस्य उत धात्वर्थस्य फलेन सम्बन्ध इति संशये द्रव्यस्य सिद्धत्वात् सिद्धसाध्ययोः समभिव्याहारे सिद्धं साध्यायोपयुज्यत इति न्यायात्। द्रव्यादेवापूर्वमिति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते भावार्था इति। भावना रूपो यः आख्यातार्थः, तस्य यः परिच्छेदः, अर्थः प्रयोजनं येषां ते भावार्थाः। आख्यातेन भावनासामान्ये उपस्थिते इतरदानादिभावनातो व्यावर्तयन् यागरूपो धात्वर्थोऽवच्छेदको भवत्येव। एवमवच्छेदकीभूता ये कर्मशब्दा धात्वर्थास्तेभ्यः क्रिया अपूर्वः प्रतीयेत। हि यत एषोऽर्थो नु विधीयते। एकपदश्रुत्या तस्यैव यागस्यैव विधानात्, यश्च विधीयते, स एव भावनाकरणत्वेनान्वेति व्याप्तिः।

ननु सर्वेषां पदार्थानां भावनायामेव प्रथममन्वयाद् धात्वर्थवत् सोमादीनामपि क्रियावच्छेदकत्वात् तेऽपि भावार्थाः स्युरिति चेत्, न येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिः, तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षाभूतत्वात्। अयम्भावः—उत्पत्तिवाक्ये सोमेन यजेतेत्यादौ सोमेनेति उच्चारणसमये यत्पदवाच्यानां सोमादिद्रव्याणां स्वरूपस्योपलब्धिः प्रत्यक्षयोग्या, तानि सोमादिपदानि नामानि, नाम संज्ञानि, तेभ्यो नामार्थोत्पत्त्यर्थपरस्परकाङ्क्षा न, भूतत्वात्। तथा च द्रव्यरूपसोमोत्पत्त्यर्थं न क्रियापेक्षेति न द्रव्यार्था क्रिया।

येषां तूत्पत्तौ अर्थे स्वे प्रयोगो न विद्यते, तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य (जै.सू. २।१।४)। उत्पत्तिविधौ येषां पदानां प्रयोगे स्वे उच्चारिते अर्थे प्रयोगः सत्त्व न विद्यते, तानि आख्यातानि, तस्माद् अविद्यमानोत्पत्तिकत्वात् तेभ्य आख्यातान्तार्थेभ्योऽपूर्वः प्रतीयेत। अयम्भावः—सोमस्य स्वर्गहेतुत्वे तदुत्पत्तेः पुरुषप्रयत्नानधीनत्वेन पुरुषानपेक्षात् स्वर्गाव्युत्पत्त्यापत्तिः। तथा च पुरुषप्रवर्तकोच्चारितविधिवैयर्थ्यापत्तिः। यदि यागेन पुरुषप्रयत्नाधीनेन द्रव्ये कश्चन संस्कारः, संस्कारविशिष्टद्रव्योत्पत्तेरुच्चारणकालेऽसत्वाद् उत्पत्तौ पुरुषं प्रवर्तयन् विधिरपि सफल इत्युच्यते, तदानेकादृष्टकल्पना। यागादपूर्वोत्पत्तिपक्षे यागजन्यापूर्वं स्वर्गं प्रति, तथा दृष्टविधयैव द्रव्यं यागं प्रति कारणमिति नोक्तदोषः।

अनेन च आख्यातार्थोऽपूर्वं इति सिद्धम्। अपूर्वास्तित्वञ्च तत्रैव "चोदना पुनरारम्भ[1]" सूत्रे प्रतिपादितम्।

१. जै० सू० २।१।५।

चोदना अपूर्वमस्ति। यत आरम्भः। स्वर्गस्य यागः साधनमित्युपदेशारम्भः। अत आशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वोपदेशानुपपत्तिरेवापूर्वे प्रमाणमिति भावः। अनुमानमपि नियोगस्य लिङर्थत्वे प्रमाणम्, तथाहि—विवादाध्यासिता लिङादयः, एतत्क्रियातिरिक्तकार्याभिधायिनः कार्याभिधायित्वाद् गामानयेत्यादिपदवत्। विपक्षे यागातिरिक्तकार्यानभ्युपगमाद् यागस्य च स्वर्गसाधनत्वानुपपत्तेः स्वर्गकामो यजेतेत्यादिवाक्यानामप्रामाण्यप्रसङ्गो बाधकः[1]।

"अत्र कार्याभिधायिन इत्युक्ते भावार्थाभिधानेन सिद्धसाधनता, तन्निवृत्त्यर्थं क्रियातिरिक्तेति। तथा चाप्रसिद्धविशेषणता तन्निवृत्यर्थमेतत् पदम्, क्रियान्तराभिधायिपदेषु च सुप्रसिद्धं साध्यम्। पक्षे चैतदभिधेयक्रियातिरिक्तकार्यत्वम्, एतदनभिधेयत्वे सति क्रियात्वाद् वा एतदभिधेयत्वे सति क्रियात्वानधिकणत्वाद् वा। आद्यमभिधायकत्वसाधनव्याहतम्, द्वितीयं सिध्यत् क्रियात्वानधिकरणकार्यनियोगमादाय सिध्यतीति नियोगसिद्धिः[2]"। उक्तञ्च—

कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम्।
प्रवृत्त्यव्यभिचारित्वाल् लिङाद्यर्थोऽवधार्यते॥
कृतिसाध्यं प्रधानं यत् तत् कार्यमवसीयते।
तच्च मानान्तरेणापि वेद्यमोदनपाकवत्॥
तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके।
तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः॥
कार्यत्वेन नियोज्यश्च स्वात्मनि प्रेरयन्नसौ।
नियोग इति मीमांसा निष्णातैरभिधीयते॥
अपूर्वं हि क्रियासाध्यं साधिता साधनं क्रिया।
तस्मादपूर्वसाध्यत्वं क्रियासाध्यत्वसङ्गतम्॥

इति पूर्वपक्षः।

अत्रोच्यते—यदुक्तं लोके सकलपदानां कार्ये एव शक्तिग्रहणम्, तन्न, चैत्र पुत्रस्ते जातः, कन्या ते गर्भिणी जातेत्यादि वाक्यादपि मुखप्रसादमुखमालिन्याभ्यां सुखदुःखेऽनुमाय तत्कारणत्वेन परिशेषात् शब्दजज्ञानमवधार्य तत्कारणतया तं शब्दमवधारयति बालो व्युत्पित्सुः। न चात्र प्रियासुखप्रसवस्यापि सम्भवात् परिशेषावधारणानुपपत्तिः, पुत्रपदाङ्कितपटप्रदर्शनात्। तद्वत् तत्र प्रियासुखप्रसवसूचकाभावात्। न च पश्य इति तत्राप्यध्याहार्यमिति वाच्यम्, मानाभावात्। पुत्रस्ते जातो मृत इत्यत्र तदभावाच्च। एवमेव नदीतीरे पञ्चफलानि सन्ति, इत्यत्रापि बोध्यम्। न च पुत्रस्ते जात इत्यत्र जातकर्म कुरु, इत्यत्र वक्तुस्तात्पर्यम्। एवञ्च लक्षणया तत्परमेवैतद् वाक्यमिति वाच्यम्, जातकर्मादीनां अनियतत्वाद् नास्तिकादीनां तदसम्भवात्। तेन वाक्येन पुत्रजन्मस्थापनस्यैव

१. चि० पृ० १६५; २. नयन प्र० पृ० १६५।

सर्वानुभवसिद्धत्वात् । न च प्रथमावगतकार्यान्वयानुरोधेन लक्षणाश्रयम्, प्रथममपि पुत्रस्ते देशान्तरादागतः, पुत्रस्ते गच्छति, पुत्रस्ते सुखीत्यादि प्रयोगेष्ववापोद्धाराभ्यां पुत्रादिपदानां स्वस्वार्थे व्युत्पत्तिसम्भवात् । उक्तरीत्या लक्षणाश्रयणे यजेतेत्यादिशब्दानामपि नियोगे शक्तिर्न सिध्येत् । प्रथमव्युत्पत्तेर्लौकिकक्रियायामेव सिद्धेः ।

किञ्च कार्यान्वित एव शक्तिग्रह इति नियमात् कार्यपद एव शक्तिग्रहो न स्यात्, कार्यस्य कार्यान्तरानन्वयात् । अन्यथा स्वातन्त्र्यव्याघातात् स्वस्य स्वान्वयासम्भवाद् आत्माश्रयापत्तेः । कार्यान्वयाभावेऽपि तत्र शक्तिग्रहात् कार्यपद एव व्यभिचारः । न च कार्यान्वियान्वयिनि शक्तिग्रहः । कार्यान्तरस्यान्वयविशेषणत्वे स्वातन्त्र्यव्याहतिः, अन्योन्याश्रयादिदोषप्रसङ्गश्च । उपलक्षितत्वे च अन्वितमात्रे शक्तिग्रहः स्यात्, इति गता कार्यान्विते शक्तिग्रहकथा ।

किञ्च शुक्लां गामानयेत्यादौ न हि केवलं कार्यसंसर्ग एव गोपदार्थेन सह नियमेन प्रतीयते; किन्तु गुणद्रव्यक्रियाकारकसंसर्गोऽपि । तत्र हि गुणस्य जातियुक्तेन द्रव्येण सम्बन्धः, तस्य च विभक्त्यर्थेन कारकेण, पुनः विभक्त्यर्थेनान्वितस्य द्रव्यस्य-क्रियया क्रियायाश्च नियोगकार्येण व्यवहितः सम्बन्धः । तथा च सति अव्यवहितसम्बन्धोपादानसिद्धयेऽन्यान्वितस्यार्थमात्रे शब्दसामर्थ्यं स्वीकर्त्तव्यम्, लाघवात् ।

न च गुणादीनां प्रयोगभेदेन व्यभिचारात् कार्यमात्रस्य चाव्यभिचारात् तदन्वितस्वार्थे शक्तिरिति वाच्यम्, कार्यस्यापि प्रयोगेष्वनेकरूपत्वात् । यदि सर्वानुगतं कार्यत्वं न व्यभिचरति, इति चेत्, तर्हि कारकादीनामपि सैव गतिः । किञ्च कार्यान्वितस्वार्थे शब्दसामर्थ्यं गृहीत्वा पश्चाद् वाक्यादपि तावन्मात्रप्रतिपत्तौ वाक्यार्थस्यानुवादता प्रसज्येत । न च कार्येण सर्वपदार्थानामव्यवहितः सम्बन्धो येन तत् ससृष्टे सामर्थ्यं स्यात् । अस्ति शेषशेषितालक्षणः सम्बन्धः । कार्यं शेषि, अन्यच् शेष इति । तत्र केयं शेषशेषिता नाम ? न तावत् स्वामिता, अचेतनस्य स्वामित्वायोगात् स्वामितायाश्चेतनविषयत्वात् । नापि देवदत्तवद् अङ्गाङ्गिता, इतरपदार्थानां कार्यं प्रति अवयवत्वाभावात् । अथ साध्यतैव शेषिता, तर्हि क्रियैव गुणकारकसाध्येति, सैव शेषिणी स्यात् । यदि परमसाध्यता शेषिता, तर्हि स्वर्ग एव शेषी स्यात्, तस्यैव परमसाध्यत्वात् । तस्मात् गुणानां द्रव्यैः, द्रव्याणां विभक्त्यर्थसम्बद्धानां क्रिययान्वयः, तस्याश्च कार्येणेति व्यवधानाद् अन्यान्वितस्वार्थे सामर्थ्यं समञ्जसम् । किञ्च भूतसंसर्गेऽपि शाब्दीप्रमितिरनुभूयते लोके देवदत्तो खादित्वा निर्गत इति ।

उक्तश्च समन्वयाधिकरणे औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति भाष्यप्रतीकमादाय वाचस्पतिमिश्रैर्भामत्याम्—"इदमत्राकूतम्—कार्यबोधे यथा चेष्टा

लिङ्गं हर्षादयः, तथा। सिद्धबोधेऽर्थवत्तैवं शास्त्रत्वं हितसाधनात्। यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवेदहेयोपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम्, तत्राविदितसामर्थ्यात् पदानां लोके, तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः। अथ तु भूतेऽप्यर्थे पदानां लोके शक्यः संगतिग्रहः, तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनयाऽवगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुं, श्रुतहान्यश्रुतकल्पनाप्रसंगात्। तत्र तावदेवमकार्ये अर्थे न संगतिग्रहः, यदि तत्परः प्रयोगो लोके न दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्यते। न तावत् तत्परः प्रयोगो न दृश्यते लोके, कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसन्दर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः। तद्यथा आखण्डलादिलोकपालचक्रवालादिवसतिः, सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदानवविहारिमणिमयशकुन्तकमनीयनिनादमनोहरः पर्वतराजः सुमेरुरिति। नैष भुजङ्गो रज्जुरित्यादि। नापि भूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुं, हर्षादिरुन्नयनहेतोः सम्भवात्।

तथाहि अविदितार्थजनभाषार्थो द्रविडो नगरगमनोद्यतो राजमार्गास्यिर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः पटवासोपायनार्पणपुरःसरं दिष्ट्या वर्धसे पुत्रस्ते जात इति वार्ताहारश्रवणसमनन्तरसमुपजातरोमाञ्चकञ्चुकं विकसितनयनोत्पलमिति स्मेरमुखमहोत्पलमवलोक्य देवदत्तम् उत्पन्नप्रमोदमनुमिमीते। प्रमोदस्य च प्रागभूतस्य तद्व्यवहारश्रवणसमनन्तरं भवतस्तद्धेतुकत्वम्।

नचायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पते इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते, हर्षहेत्वन्तरस्य चाप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात् तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति। एवं भयशोकादयोऽप्युदाहार्याः। तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः। एवञ्च ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुभावाद् अनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनात् शास्त्रत्वं सिद्धं भवति। तत् सिद्धमेतद् विवादाध्यासितानि वचनानि भूतार्थविषयाणि भूतार्थविषयकप्रमाजनकत्वाद् यद् यद्विषयकप्रमाजनकम्, तत् तद्विषयम्, यथा रूपादिविषयं चक्षुरादि, तथा चैतानि तस्मात्तथेति[1]। एवञ्च भूतेऽप्यर्थे इतरान्वितधृतसामर्थ्याः शब्दा लोके दृश्यन्ते। वेदेऽपि "वषट्कर्तुः प्रथमभक्षः" तस्मात् पूषा प्रपिष्टभाग इत्येवमादौ क्रियाशून्यानामन्वयो दृश्यते।

एवञ्चाकार्यार्थाः शतशोऽपि अटवीवर्णनादयोऽस्तिक्रियोपहिता उपलभ्यन्ते। एवमक्रिया निष्ठा अपि सम्बन्धमात्रपर्यवसायिनः शब्दा दृश्यन्ते। यथा राज्ञः

१. भा० पृ० ११७१।

पुरुष इति। प्रातिपादिकार्थमात्रनिष्ठा अपि, यथा कीदृशास्तरव इति प्रश्ने फलिन इति। तत्र प्रश्नकर्तुः पुरुषस्यास्तित्वनास्तित्वे न प्रतिपित्सा; अपि तु पुरुषस्य स्वामिभेदे तरूणां च प्रकारभेदे। एवञ्चानेकैः दृष्टान्तैः भूतेऽप्यर्थे शब्दानां सामर्थ्यावधृतम्।

किञ्च भगवत्पादैरप्युक्तं समन्वयाधिकरणे "अपि च ब्राह्मणो न हन्तव्य इत्येवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया। नापि क्रियासाधनम्, अक्रियार्थानामुपदेशोऽनर्थकश्चेद् ब्राह्मणो न हन्तव्य इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम्, तच्चानिष्टम्"। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यद् स्वसम्बन्धिनोऽभावं बोधयतीति। अभावबुद्धिश्चौदासीन्यकारणम्। सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति। तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव ब्राह्मणो न हन्तव्य इत्यादिषु प्रतिषेधार्थं मन्यामहेऽन्यत्र प्रजापतिव्रतादिभ्यः। तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम्। यदप्युक्तं कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात्। सप्तद्वीपा वसुमतीत्यादिवदिति तत् परिहृतं रज्जुरियं नाऽयं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्[1]।"

अयम्भावः—कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनत्वं लिङर्थः। ज्योतिष्टोमेनेत्यादेर्लोकसिद्धमनिष्टसाधनत्वमनूद्य कर्तव्यत्वमिष्टसाधनत्वं च लिङा बोध्यते। ब्राह्मणो न हन्तव्य इति हनने लोकसिद्धमिष्टसाधनत्वं कर्तव्यत्वञ्चानूद्य नञाऽनिष्टसाधनत्वमात्रं बोध्यते। तथा च हननमनिष्टसाधनमिति न हन्तव्य इति वाक्यतात्पर्यविषयः। अथवा इष्टसाधनत्वमात्रं लिङर्थः, इष्टत्वञ्च अदृष्टाविरोधिदृष्टप्रयोजनत्वम्। न हन्तव्य इत्यत्र नञो धात्वर्थहननेऽन्वये हननाभाव इष्टसाधनमित्यर्थो भवति। कृतिसाध्यत्वस्य लिङर्थत्वपक्षेऽपि हननस्य निवृत्तेरभावत्वेन क्रियात्वाभावान्न क्रियार्थत्वं निषेधवाक्यानामुभयपक्षेऽपि।

ननु विधिविभक्तिश्रवणाद् विध्यर्थस्य कार्यस्य प्रतीतिरपि अवश्यं स्यात्। तथा च नेक्षेतोद्यन्तमादित्यमित्यादौ ईक्षणविरोधिनी नेक्षे इति संकल्पक्रिया विधीयते। एवमेव प्रकृतेऽपि हननं न कुर्यात्, हननाभाव इष्टसाधनं वेति न वाक्यार्थः; अपि तु नञो पर्युदासलाभाद् हननं कुर्यादिति हननविरोधिनी संकल्पक्रिया हनन न कुर्यादित्येवंरूपा प्रत्ययेन विधीयत इति चेत्, न, नञः स्वभावप्राप्तहन्त्यर्थानुरागेण ब्राह्मणो न हन्तव्य इति वाक्यस्य हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण अप्राप्तक्रियार्थत्वं कल्पयितुं न युक्तम्। अयम्भावः—स्वभावप्राप्तस्य इष्टसाधनत्वेनावगतस्य हननस्य नञा सम्बन्धो दृश्यते, अतस्तदभावबोधनमेव नञः स्वभावः। तथा

१. ब्रह्मसू० १।१।४।

च हननाभाव इष्टसाधनमिति ब्राह्मणहनने इष्टसाधनत्वाभाव इति वा बोधयित्वा हननक्रियानिवृत्तिरूपमौदासीन्यमेवेदं वाक्यं बोधयति। नञ् च मुख्यया वृत्त्या अभाव एव वर्तते। यत्रापि नेक्षेतेत्यादौ क्रियान्तरप्रतीतिस्तत्र लक्षणा आश्रयितव्या। तत्र व्रतशब्दसमन्वयाल्लक्षणा अन्यथा तत्र प्रसज्यप्रतिषेधपरत्वे वाक्यभेदापत्तेः पृथक् फलकल्पनापत्तेः। अतस्तत्र क्लिष्टापि लक्षणाऽऽश्रीयते। प्रकृते तु न किञ्चिद् मुख्यार्थे बाधकम्।

न च नञोऽर्थो अभाव एव विधेयस्तत्रेति वाच्यम्, अभावस्य औदासीन्यरूपत्वात् प्रागभावस्यानादित्वात् प्राप्तत्वात् सिद्धत्वात् च न विधेयता युक्ता। न च हननमेव विधीयताम्, तस्य रागतः प्राप्तत्वात्। न च हननप्रवृत्तेर्विघातकप्रयत्नो वा कर्तव्य इति विधीयत इति वाच्यम्, तस्याश्रुतत्वात्। सति सम्भवे लक्षणाया अन्याय्यत्वात्। तस्माद् यद्हन्यादित्यनूद्य तन्नेति निषिध्यते, तदभावो ज्ञाप्यते न तु नञर्थो विधीयते।

ननु ब्राह्मणो न हन्तव्य इत्यत्र ब्राह्मणहननप्रत्ययार्थेषु त्रिष्वपि अर्थेषु न ब्राह्मणेन सह नञर्थस्य प्रतिषेधस्यान्वयः, प्रत्यक्षविरोधात्। न च हननेन सहान्वयः। तस्य प्रवृत्तत्वाद् रागतः, नापि प्रत्ययार्थेन सह, फलप्रार्थनायाः प्रवृत्तिहेतोः कार्यबुद्धेर्वा प्रत्यक्षत्वात्। अतः स्वभावप्राप्तहन्त्यर्थानुरागेण तद्विरोधिनी न हन्यामिति संकल्पक्रियैव नञा प्रतिपाद्यते, सा च प्रत्ययेन तव्यता विधीयते। नात्र नञर्थोऽभावः। अभावश्च न भावान्तरव्यतिरेकेण कश्चिदस्ति।

अतो नाभावपरं वाक्यम्; अपि तु भावान्तरविधानपरमिति चेत्, न, नञः सम्बन्धिनोऽभावबोधकत्वस्वभावात्। प्रकृते च सम्बन्धी प्रकृत्यर्थं विशिष्टप्रत्ययार्थो वा प्रकृत्यर्थो वेति। न च भावान्तरमेवाभाव इति युक्तमभ्युपगन्तुम्, तथा चाभावस्य प्रतियोगिनैराकांक्षतापत्तेः, तस्य सप्रतियोगिकत्वात्। ननु[1] तत् सादृश्यमभावश्च तदन्यत्वमित्यादि नञर्थाः षट् प्रदर्शिताः।

नामधात्वर्थयोगे तु नैव नञ्प्रतिषेधकः।
वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥

इत्यादिना अर्थान्तरेऽपि नञ् दर्शितः। तथा च न हन्तव्य इत्यत्र हननविरोधिसंकल्पक्रियाप्रतिपादकत्वं नञो न विरुध्यते, इति चेत्, न, अभावस्यैव मुख्यार्थत्वात् तस्यैव वैयाकरणभूषणादिग्रन्थे प्रतिपादितत्वात्। अन्ये अर्था तु लाक्षणिका इति बोध्यम्।

ननु प्रकृतिप्रत्ययौ सहार्थंब्रूतः, प्रत्ययार्थस्यैव प्राधान्यमिति न्यायात्

१. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ ( भूषण० पृ० २८४ )

प्रकृत्यर्थस्य हननस्य प्रत्ययार्थे उपसर्जनत्वात् पदार्थः पदार्थेनान्वेति, न तु पदार्थैक-देशेनेति व्युत्पत्तेर्नञर्थस्य प्रत्ययार्थेनैवान्वयः। एवं सति धात्वर्थेन हननेन सह प्रतिषेधस्यान्वयाभावाद् हननप्रागभावस्यालाभात् तस्यानादित्वात् प्राप्तत्वाद् विधेयता न सम्भवतीति वक्तुमशक्यत्वादिति चेत्, न, एवमपि प्रत्ययार्थे इष्टसाधनत्वे फलप्रार्थनादिषु नञोऽन्वयेऽपि तस्य न प्रतिषेधपरत्वं व्याहन्यते। तथाहि तव्यप्रत्ययो हि विधिं ब्रूते, स चेष्टसाधनम्। ततश्च हननगतेष्टसाधनत्वं पामरदृष्टिसिद्धं पुरुषप्रवर्तकं तदनूद्य तव्यप्रत्ययेन नञा प्रतिषिध्यते ब्राह्मणहनन-मिष्टसाधनं न भवतीति। न च प्रत्यक्षमेवेष्टसाधनत्वं हननस्येति वाच्यम्, अदृष्टाविरोधिदृष्टप्रयोजनस्येष्टशब्दार्थत्वात्, हननस्य चादृष्टविरोधित्वात्। तस्माद् निषेधवाक्यानामक्रियार्थत्वेऽपि आनर्थक्याभावात् पुरुषार्थानुपयोग्युपा-ख्यानादिरूपार्थवादविषयमेवानर्थक्याभिधानं तद् वेदान्तवाक्यानामपि सिद्धार्थ-बोधकत्वं सिद्धमेव।

॥ इति सिद्धार्थशक्तिग्रहविचारः ॥



# अथ लिङर्थविचारः

लिङादीनां कार्ये एव शक्तिग्रह उक्तः। कार्यस्यैव च सर्वत्र प्रवृत्तौ हेतुत्वात् तस्यैव लिङादिवाच्यत्वम्, तच्च कार्यं कृत्युद्देश्यं कृतिसाध्यं वा। कार्यमेव वेदे नियोज्यस्य नियोजनाद् नियोग इति मानान्तरागोचरत्वाद् अपूर्वमिति व्यवह्रियत इति पूर्वमेवोक्तम्, तन्न युक्तं प्रतिभाति। तथा हि "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्[1]" इति सूत्रेण विध्यादिष्वर्थेषु लिङ् विधीयते। तत्र विधिःप्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम्। निमन्त्रणं नियोगकरणम्। नियोगोऽत्र प्रवृत्तितदनुकूलो व्यापारः। आमन्त्रणं कामचारानुज्ञा। अधीष्टं सत्कार्यपूर्वको व्यापारः, सम्प्रश्नः इदं वा कर्त्तव्यम्, तद्वा कर्तव्यमिति रूपेणावधारणम्। स्वाभिलषितार्थदानविषयकेच्छा प्रार्थनम् तत्रैषु अनुस्यूतत्वेन प्रवर्तनैव लिङ्वाच्या। विशेषग्रहणन्तु प्रपञ्चार्थम्। उक्तमेव भर्तृहरिणा—

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितःकृतम्॥

तत्र प्रवर्तनैव लिङर्थः। सा च अभिधारूपा शाब्दी भावनेति भाट्टाः। कार्यमेवेति प्राभाकराः। इष्टसाधनतेत्यन्ये। बलवदनिष्टाननुबन्धित्वज्ञानमिति परे। कृतिसाध्यत्वमिति चापरे। एवं वैमत्ये सत्यपि इष्टसाधनत्वं विध्यर्थ इति प्रायः सर्वैरङ्गीक्रियते। लोकेऽपि इद मदिष्टसाधनमिति ज्ञानपूर्वकमेव प्रवृत्तिर्दृश्यते। यद्यपि प्रवृत्तिप्रयोजकता कृतिसाध्यस्य कार्यस्याप्यस्ति; तथापि कृति साध्येऽपि इष्टसाधनत्वं विना प्रवृत्तिर्न सम्भवति, तथा दृष्टत्वात्। कृति साध्यत्वस्य च लोकलभ्यत्वाद् अनन्यलभ्यत्वाच्छब्दार्थस्य इष्टसाधनत्वे एव लिङ्वाच्यत्वमवधार्यम्। प्रवर्तनात्वं प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वरूपम्। तथा हि स्वर्गकामो यजेतेत्यादौ यागो मदिष्टसाधनमिति ज्ञानं प्रवर्तकं भवति। तज्ज्ञानीयविशेष्यताख्यविषयता यागनिष्ठा, तन्निरूपितप्रकारतारूपा विषयता इष्टसाधनत्वनिष्ठेति विशेष्यतानिरूपकत्वरूपमवच्छेदकत्वमिष्टसाधनत्वस्यास्ति। यद्यपि साक्षाद् विशेष्यतानिरूपकता प्रकारतायामेव; तथापि तन्निरूपकाश्रयोऽपि तन्निरूपको भवतीति न्यायात् प्रकारताश्रयस्येष्टसाधनत्वस्यापि तन्निरूपकत्वम्।

---

१. पा० सू० ३.३.१६१।

प्रवृत्तित्वावच्छिन्नं प्रति इष्टसाधनत्वज्ञानस्य प्रयोजकत्वेन तद्विषयतावच्छेदकत्वमिष्टसाधनत्वेऽक्षतम्। यद्वा विषयता प्रकारतारूपा, तदवच्छेदकत्वमिष्टसाधनत्वस्येति योज्यम् एतादृशविषयतावच्छेदकत्वं कृतिसाध्यत्वस्याप्यस्ति; अन्यथा सुमेरुशिखर मदिष्टसाधनमिति ज्ञानसत्त्वे, तदानयनादौ प्रवृत्तिः स्यात्; किन्तु न भवति, कृतिसाध्यत्वाभावात्; तथापि कृतिसाध्यत्वस्य उक्तरूपत्वेऽपि लोकत एव तल्लाभाद् न लिङ्शक्यता तत्र। तथाहि लोकानुमानम्—यागो मत्कृतिसाध्यः, मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात्, मदीयग्रामादिगमनवद् इत्यादि, तेन लभ्यत्वात्। वस्तुतः सम्पन्नपाके ओदने इष्टसाधनत्वस्य सत्त्वेऽपि तत्र पचेदिति प्रयोगवारणाय कृतिसाध्यत्वविशिष्टेष्टसाधनत्वं लिङर्थः स्वीकार्यः। सुमेरुशिखरानयनेऽपि अप्रवृत्तिः सिद्धा भवति, तत्र विशेषणाभावप्रयुक्त विशिष्टाभावात्। एवञ्च स्वर्गादीष्टसाधनत्वं तु न लोकलभ्यम्, लिङादिरूपशब्दैकगम्यत्वात्।

कृतिसाध्यरूपकार्यत्वस्य इष्टसाधनत्वं विना न प्रवृत्तिप्रयोजकत्वमिति सर्वत्रानुस्यूते इष्टसाधनत्व एव लिङ्वाच्यत्वम्। शक्तिः विशेषणांशस्य लोकलभ्यत्वादिति काश्यां मध्वसभायां शास्त्रार्थे विजयिनो मम गुरवः श्रीदेवस्वरूपमिश्राः।

उक्तञ्च मण्डनमिश्रैः—

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्॥

किञ्च इष्टसाधनत्वे वैदिकलौकिकविधिप्रत्ययस्य शक्तिकल्पने तस्य प्रवर्तकत्वोपपत्तौ नियोगस्य विधिवाच्यत्वे प्रमाणाभावः। न च तस्य पूर्वमुपस्थितिर्येन तत्र लिङादेः शक्तिग्रहः स्यात्, वेदबोधितस्वर्गसाधनत्वानुपपत्त्या तत्कल्पनात्।

एवञ्चेष्टसाधनत्वमेव विध्यर्थः। तत्रेष्टत्वञ्चेच्छाविषयत्वं लिङ्गादिसमभिव्याहृतपदोपस्थापितकामनाविषयत्वं वा।

ननु इष्टसाधनत्वस्य वाच्यत्वेन नानार्थतापत्तिः। तथा हि इष्टत्वावच्छिन्नसाधनताज्ञानमात्रेण प्रवृत्तिर्न सम्भवति; किन्तु इष्टत्वव्याप्यस्वर्गत्वादिधर्मावच्छिन्नविषयकज्ञानत्वेनैव प्रवर्तकत्वमिष्टसाधनत्वज्ञानस्य वाच्यम्, तथा च स्वर्गत्वपुत्रत्वादेर्नानात्वाल्लिङादेर्नानार्थत्वापत्तिः। नानाधर्मावच्छिन्नशक्यतानिरूपितैकधर्मावच्छिन्नशक्ततावत्त्वं नानात्वमिति चेत्, न, इष्टत्वावच्छेदकत्वोपलक्षितस्वर्गत्वाद्यवच्छिन्ने शक्तिस्वीकारेण नानार्थत्वाभावात्। एवञ्च इष्टसाधनत्वस्य इत्यनेन इष्टत्वोपलक्षितस्वर्गत्वाद्यवच्छिन्नसाधनत्वस्येत्यर्थो बोध्यः।

यच्चोक्तं नियोगवादिना नित्यनैमित्तिकस्थले इष्टसाधनत्वपक्षे विध्यर्थबाध इति, तदपि न युक्तम्, अहरहः सन्ध्यामुपासीतेत्यादौ फलविशेषाश्रवणेऽपि तत्रार्थवादवाक्योक्तफलसाधनताज्ञानेनैव प्रवर्तकत्वस्य लिङादेः कल्प्यत्वात्। न च नित्य-

कर्मणः फलकल्पने नित्यत्वहानिः, ग्रहणश्राद्धादौ नित्यत्वकाम्यत्वयोः सर्वसम्मतत्वेन सन्ध्यादिष्वपि नित्यकर्मसु फलकल्पने विरोधाभावात्। तत्रार्थवादवाक्यम्—

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।
सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥

अनेन वाक्येन श्राद्धपितृतृप्त्योः सन्ध्याब्रह्मलोकावाप्त्योश्च कार्यकारणभावः। न च श्राद्धपितृतृप्त्योश्च वैयधिकरणात् कथं कार्यकारणभाव इति वाच्यम्, उद्देश्यत्वसम्बन्धस्य तत्र कारणतावच्छेदकत्वात्। तेन सम्बन्धेन श्राद्धस्यापि पितृस्थत्वाद् भवति सामानाधिकरण्यम्।

ननु इष्टसाधनत्वस्य विध्यर्थत्वे तस्य आख्यातेनोक्तत्वाद् अग्निष्टोमेनेत्यादौ तृतीयानुपपत्तिरिति वाच्यम्, स्वर्गादिरूपेष्टसाधनत्वस्याख्यातेनोक्तत्वेऽपि लिङ्निष्ठशाब्दभावना भाव्या, या पुरुषनिष्ठा यज्यर्थकृतिरूपार्थी भावना, तन्निर्वर्तकत्वरूपपारिभाषिककरणत्वस्यानभिधानेन तत्र तृतीयासिद्धेः।

अयम्भावः अग्निष्टोमेन यजेतेत्यादिस्थले देवतोद्देशेन त्यागरूपं फलम् पुरुषनिष्ठा, यज्यर्थः कृतिः। तत्र कृतौ त्यागरूपफलस्य करणतया इष्टसाधनत्वरूपलिङर्थस्य च स्वरूपसम्बन्धेनान्वयः। तथा च देवतोद्देशेन द्रव्यत्यागकरणिकालिङर्थेष्टसाधनत्वविशिष्टा या पुरुषनिष्ठा कृतिरूपा भावना, तया अदृष्टं भावयेद् इति बोधः। अत्र लिङा यज्यर्थकृतिरूपाभावनानिष्ठस्वर्गादीष्टसाधनत्वरूपकरणत्वस्योक्तत्वेऽपि पुरुषनिष्ठयज्यर्थकृतिरूपभावनानिरूपितद्रव्यत्यागरूपफलनिष्ठस्य लिङर्थभावनाभाव्यपुरुषनिष्ठकृतिरूपभावनानिर्वर्तकत्वरूपपारिभाषिककरणत्वस्यानुक्तत्वेन तत्समानाधिकरणार्थवाचकाज्ज्योतिष्टोमशब्दात् तृतीया सिध्यतीति[1]।

ब्राह्मणं न हन्यात्, न कलञ्जं भक्षयेदित्यादिनिषेधस्थले तु निषेधविधित्वोपपत्तये नञ्समभिव्याहारे विधिप्रत्ययस्यानिष्टसाधनत्वे शक्तिरभ्युपेया, लक्षणा वा तत्र स्वीकार्या, तस्य धात्वर्थेऽन्वयः। नञ्तात्पर्यग्राहकः। तथा च ब्राह्मणहननमनिष्टसाधनमित्यादिबोधः। अत इष्टसाधनत्वमेव विध्यर्थो नापूर्वः कश्चन पदार्थो नियोगाख्यः, तस्य पूर्वमनुपस्थितत्वात् शक्तिग्रहायोगात्। किञ्च नियोगस्य लक्षणं तत्र प्रमाणमपि न किञ्चिद् उपपद्यते।

॥ इति लिङर्थविचारः॥

---

१. भूषणदर्पणप्रभा—व्या० पृ० १५६।

# अथ नियोगलक्षणप्रमाणविचारः

न च कृतिसाध्य प्रधान कार्यमिति लक्षणमिति वाच्यम्, फलस्यापि कृतिसाध्यत्वात् प्रधानत्वात् तत्रातिव्याप्तेः। न चाव्यवधानेन कृतिसाध्यत्वं विवक्षितम्, तच्च फलस्य नास्ति नियोगव्यवधानादिति वाच्यम्, नियोगस्यापि साक्षात्कृतिसाध्यत्वाभावाद् लक्षणासिद्धिः। साक्षात्कृतिसाध्यत्वं तु धात्वर्थयागादिभावेष्वेव सत्त्वात्। अथ साध्यैकस्वभावत्वं कृतिसाध्यत्वं धात्वर्थस्य सिद्धसाध्यरूपत्वात्। उक्तञ्च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूप साध्यत्वं तद्विपरीतरूपत्वं सिद्धत्वम्, निष्पाद्यत्वं साध्यत्वम्, घत्रादिनिबन्धनत्वं सिद्धत्वमिति। नैव धात्वर्थेऽतिव्याप्तिरिति चेत्, न, प्रागभाववत्सु उत्पत्तियोग्येषु अतिव्याप्तेः। न च सदा साध्यैकस्वभावत्वं विवक्षितम्, यागाद्यनुष्ठानोत्तरकालमपि तस्य साध्यैकस्वभावत्वे कदाचिदपि नियोगासिद्धेः स्वर्गासिद्धेः। एवमेव कृत्युद्देश्यत्वं कार्यत्वमिति लक्षणस्यापि दूषण बोध्यम्।

वेदे च किं कार्यत्वेनाभिमतम्। यदि नियोगः, कश्च नियोगः? यस्मिन् प्रतीते नियुक्तोऽहमिति मत्वा पुरुषः प्रवर्तते, स नियोगः। नियुज्यते अनेनेति व्युत्पत्त्या इति चेत्, न, तथासति स्वर्गादिलक्षणं क्रियाफलमेव नियोगः स्यात्, तत्प्रयुक्ततया पुरुषस्य तत्साधनेषु प्रवृत्ते। तथोक्तं येन प्रयुक्तः पुरुषः प्रवर्तते, तत् प्रयोजनमिति। फलानुरागस्य वा प्रवर्तकत्वाद् नियोगत्वापत्तिः स्यात्। फलरागेणैव लोकाग्रहगृहीतवत् कर्मणि प्रवतते। प्रत्यवायपरिहारो नित्यकर्मणः फलमिति सत्वात्, न तत्र फलरागहानिः। इष्टसाधनताज्ञानं वा नियोगः स्यात्, तत एव सर्वत्र प्रवृत्तिदर्शनात्। इत्थं नापूर्वस्य कार्यस्य किञ्चिल्लक्षणं पश्यामः।

न चात्र प्रमाणमपि। तथा हि, न हि तत्र प्रत्यक्षं प्रमाणं तस्य नियोगस्य असिद्धस्वभाववत्वाद् अवर्तमानत्वाद् वा। तदैव सम्बन्धग्रहाभावान् नानुमानेन तस्य प्रमितिः। आगमस्य च तत्र व्युत्पत्तेरभावान्न प्रमाणता। न चार्थापत्तिः, अलौकिककार्यमन्तरापि ईश्वरप्रसादात् फलसिद्धेः। न च प्रवर्तकत्वान्यथानुपपत्त्या कार्यत्वसिद्धिः। इष्टसाधनताज्ञानत्वस्यापि प्रवर्तकत्वोपपत्तौ कार्यत्वस्यानपेक्षणात्।

ननु स्वर्गकामो यजेतेत्यादिविधौ यागः स्वर्गस्योत्पादक इति गम्यते। तत्र अनुक्षणविनाशिनो यागरूपकर्मणः फलं नोपपद्यते। अतः श्रुतिप्रमाणाद् यथा कर्मफलसम्बन्धः श्रुतिगम्य उपपद्येत, तथा कल्पनीयम्। एवञ्च कर्मफलसम्बन्धानुपपत्त्या कर्मणः किमप्यपूर्वमुत्पद्यते यत् कालान्तरितं फलं ददातीति मन्तव्यम्।

अतः कर्मणो वा काचित्सूक्ष्मा उत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नाम स्वीकर्तव्यम्; अन्यथा श्रुतिर्व्यर्था स्यात्। न चेश्वरस्यैव फलदातृत्वमिति वाच्यम्, अनुष्ठानवैयर्थ्याद् वैषम्यनैर्घृण्यप्रसङ्गादिति चेत्, न, फलाधिकरणे फलमत[1] उपपत्तेरिति। सूत्रे शारीरकभाष्ये भगवत्पादैः फलं किं कर्मणो भवति, ईश्वराद्वेति संशये फलमत ईश्वराद् भवितुमर्हति, उपपत्तेरिति सिद्धान्तितत्वात्। तथाहि, ईश्वरो हि सर्वं कर्माध्यक्षः, जगज्जन्मादिवैचित्र्यं कुर्वन् देशकालविशेषाभिज्ञः कर्मिणां कर्मानुरूपं फलं सम्पादयतीति युक्तम्। अपूर्वात् कर्मकार्यात् फलमुत्पद्यत इति न युक्तम्, अपूर्वस्याचेतनस्य काष्ठलोष्ठसमस्य चेतनाप्रवर्तितस्य फलदानानुकूलव्यापारानुपपत्तेः, तदस्तित्वे च प्रमाणाभावात्।

न च क्षणिकयागादेः श्रुतस्वर्गादिहेतुत्वानुपपत्तिरेव प्रमाणमिति वाच्यम्, कर्मभिराराधिताद् 'ईश्वरादेव स्थायिनः स्वर्गादिफलसिद्धेः, तथा च यागादिकर्मप्रसादित ईश्वर एव प्राप्तकाले कर्मानुरूपं फलं ददातीति स्वीकर्तव्यम्, तेन च नानुष्ठानवैयर्थ्यं तस्येश्वरप्रसादे उपयोगात्। नैव वैषम्यनैर्घृण्ये भवतः। तयोर्दोषयोः "वैषम्यनैर्घृण्ये न सापेक्षत्वात्। तथाहि दर्शयति[2] इति सूत्रेण निरासात्"। तथाहि "यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यञ्च। न तु निरपेक्षस्य निमातृत्वमस्ति, सापेक्षो हि ईश्वरो विषमां सृष्टिं निर्मिमीते। किमपेक्षत इति चेत् धर्माधर्मौ इति वदामः। अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः[3]"।

फलाधिकरणेऽपि धर्मं जैमिनिरत एव[4] इति सूत्रे धर्मादेवापूर्वात् फलमिति पूर्वपक्षे जैमिनिमतमुपपाद्य सिद्धान्ते पूर्वं तु बादरायणो "हेतुव्यपदेशात्[5]" सूत्रे भगवत्पादैः श्रीशङ्कराचार्यैरीश्वर एव कर्मफलदातेति प्रतिपादितम्। तत्रेश्वर एव फलं ददाति हेतुव्यपदेशाद् धर्माधर्मयोरपि कारयितृत्वेन ईश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन। यथा "एष ह्येव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति, तं यमधो निनीषते इति" (कौ०ब्रा० ३।८)। गीताऽपि एतदेवानुवदति—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तः तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हितान्॥ (गी० ७।२१)।

तत्रैव भामत्यां श्रीवाचस्पतिमिश्रैरुक्तम्—"दृष्टानुसारिणी हि कल्पना युक्ता; नान्यथा, न हि जातु मृत्पिण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय

१. ब्र० सू० ३ २.३८; २. तत्रैव --२।१।३४; ३. तत्रैव शां० भाष्यम्—२।१।३४।
४. ब्र० सू० ३।२ ४०। ५. तत्रैव—३।२।४१।

विभववन्तो दृष्टाः। न च विद्युत्पवनादिभिरप्रयत्नपूर्वैर्व्यभिचारः, तेषामपि कल्पनास्पदतया व्यभिचारनिदर्शनत्वानुपपत्तेः। तस्मादचेतनं कर्म वाऽपूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुमुत्सहते। न च चैतन्यमात्रं कर्मस्वरूप-सामान्यविनियोगादिविशेषविज्ञानशून्यमुपयुज्यते, येन तद्रहितक्षेत्रज्ञमात्राधिष्ठानेन सिद्धसाध्यत्वमुद्भाव्येत, तस्मात् तत्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शन-सहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानाद् अचेतनानां कार्यारम्भकत्वमिति, तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धु-मित्यपि स्पष्टं निरटङ्कि देवताधिकरणे।

लौकिकश्चेश्वरो दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धा-गर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति। विरोध-तश्चापक्रियाभिर्विरोधकायाहितमित्यपि सुप्रसिद्धम्। तदिह केवलं कर्मापूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूते इति दृष्टविरुद्धम्। यथा विनष्टं कर्म फलं न प्रसूते इति कल्प्यते, दृष्टविरोधात्, एवमिहापीति। तथा देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूत इत्यपि दृष्टविरुद्धम्। न हि राज-पूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते। तस्माद् दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुत्पाद्यते। तथा च देवताप्रसादादेव स्थायिनः फलो-त्पत्तेरुपपत्तेः कृतमपूर्वेण। एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम्, ततः स्थायिनोऽनिष्टफलप्रसवः।

न च शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता द्वेषपक्षतापातव-तीति युज्यते। न हि राजा साधुकारिणमनुगृह्णन् निगृह्णन् वा पापकारिणं भवति, द्विष्टो रक्तो वा तद्वदलौकिकोऽपि ईश्वरः। यथा च परमापूर्वे कर्त्तव्ये उत्पत्य-पूर्वाणामङ्गापूर्वाणाञ्चोपयोगः। एवं प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानां चोपयोगः। स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समा-नमन्यत्राभिनिवेशात्। तस्माद् दृष्टाविरोधेन देवतासाधनात् फलम्, न त्वपूर्वात् कर्मणो वा केवलात्। विरोधतो हेतुव्यपदेशश्च श्रौतः स्मार्तश्च व्याख्यातः"[1]।

एवञ्च स्मृतिरपि "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः" इति कर्मप्रसादितदेवानां फलदातृत्वे प्रमाणमिति। अर्थापत्त्याऽप्यपूर्वस्यापूर्वा कल्पना नोपपद्यत इति लक्षणप्रमाणाभ्यां अपूर्वस्य कार्यस्यास्तित्वं नास्तीति गम्यते।

यत्तु नियोगसत्तासिद्धौ वादिनानुमानमुपन्यस्तम्। विवादाध्यासिता लिङादय एतत्क्रियातिरिक्तकार्याभिधायिनः कार्याभिधायित्वाद् गामानयेत्यादि-पदवदिति तन्न युक्तम्, सत्प्रतिपक्षितत्वात्। तथा हि—विवादाध्यासिताः शब्दा लिङादयः क्रियारूपकार्यवाचकाः कार्यप्रत्ययहेतुत्वाद् आनयेत्यादिशब्दवत्[2]।

१. ब्र० सू० ३।२।४०—भाष्यभा०;

२. चि० पृ० १८५।

लौकिकलिङादौ सिद्धसाधनतापरिहाराय विवादेति नियोगेनार्थान्तरता निवृत्त्यर्थं क्रियाग्रहणम्। ननु लौकिकलिङादित्वमुपाधिः। तथा हि दृष्टान्ते आनयेत्यादौ लौकिकलिङ्त्वस्य सत्वाद् विवादाध्यासिते यजेतेत्यादौ पक्षे तस्यासत्वात् साध्यव्यापकत्वसाधनाव्यापकत्वयोः सत्त्वाद् उपाधित्वं सङ्गतमिति चेत्, न, तस्योपाधेः पक्षमात्रावृत्तित्वात्। साध्योपाध्योरव्यभिचरितसम्बन्धरूपव्याप्तौ यत्र क्रियारूपकार्यवाचकत्वम्, तत्र लौकिकलिङ्त्वमित्यत्र लौकिकेतिव्यर्थविशेषणत्वाच्च। एवञ्च व्यर्थविशेषणघटितत्वाद् अहेतुत्वाद् न साध्याभावसाधकत्वमस्य।

न हि पर्वतो वह्निमान् नीलधूमादिति नीलधूमत्वस्य हेतुत्वं व्यर्थविशेषणघटितत्वाद् व्याप्यत्वासिद्धेः। व्याप्यतावच्छेदकान्तरघटितत्वं व्यर्थविशेषणत्वम्। ननु लिङादयो वैदिकाः क्रियाकार्यवाचका इत्यत्र सिद्धान्तेऽपि किं प्रमाणम्? न चेदमनुमानमेवेति वाच्यम्, एतस्य परप्रयुक्तानुमानप्रतिरोधरूपत्वात् स्वपक्षासाधनत्वादिति चेत्, न, तस्यानुमानस्य परप्रयुक्तानुमानबाधकत्वान्न सत्प्रतिपक्षता। समबलबोधितसाध्यविपर्ययत्वं हि प्रतिरुद्धत्वम्। न चात्र समबलत्वम् अस्याधिकबलत्वात् तस्य च न्यूनबलत्वात्। न च तस्य न्यूनबलत्वे किं प्रमाणमिति वाच्यम्, सिद्धान्ते वेदान्तिमते गामानयेत्यादिदृष्टान्ते इष्टसाधनतावादिनि कार्यवाचकत्वस्यासिद्धत्वाद् दृष्टान्ते साध्यवैकल्यात्।

किञ्च व्यापकानुपलब्धिः व्यापकविरुद्धोपलब्धिरप्यस्ति। तथाहि, एषा हि व्याप्तिरस्ति यद् यदभिधायकं तत् तेन सङ्गतिमत्। सङ्गतिः शक्तिः। यथा गोपदं गवाभिधायकं सद् गोनिरूपितशक्तिमत्। प्रकृते च लिङादीनां नियोगाभिधायकत्वेन तेन सह सङ्गतिमत्वं स्यात्, न चास्ति अपूर्वे नियोगे लिङादीनां शक्तिग्रहासम्भवात्। एवञ्चासङ्गतिमत्त्वस्यैव सत्त्वाद् व्यापकविरुद्धोपलब्ध्या व्यापकसाध्यव्यापकसङ्गतिमत्वस्यानुपलब्ध्यास्तद् व्याप्यस्य उक्तसाध्यस्याप्यसम्भवाद् न परोक्तानुमानं सत्।

यश्च वादिना स्वानुमाने विपक्षे क्रियारिक्तकार्यानभिधाने स्वर्गकामो यजेतेत्यादिशास्त्रानर्थक्याप्रमाणप्रसङ्गो बाधकस्तर्क उक्तः; सोऽपि न युक्तः। क्रियाया एव परमेश्वरप्रसादावान्तरव्यापारायाः स्वर्गादिफलसाधनत्वोपपत्तौ न शास्त्रवैयर्थ्यम्। एवञ्च सति नियोगे न किञ्चित् प्रमाणमिति स्थितम्।

॥ इति नियोगे लक्षणप्रमाणविचारः ॥



# अथाखण्डार्थत्वनिरूपणे विचारः

उक्तरूपेण विधिवाक्यानामपि सिद्धार्थबोधकत्वे सिद्धे किमु वक्तव्यं विधिसंस्पर्शरहितानां सत्यज्ञानादिवाक्यानाम्, तेषामखण्डैकरसब्रह्मरूपसिद्धार्थबोधकत्वं सुतरां सिध्यति। अथ वेदान्तानामखण्डार्थत्वमत्रोपपादनीयम्। तत्राखण्डोऽर्थो यस्य सोऽखण्डार्थः। तत्त्वमखण्डार्थत्वम्, वेदान्तानामखण्डार्थबोधकत्वमित्यर्थः।

एवञ्च वेदान्तवाक्यानां किमिदमखण्डार्थत्वम्? ननु खण्डो विशेषो भेदो वा, न खण्डो विद्यते यत्र स अखण्डोऽर्थ इति व्युत्पत्या। निर्विशेषवस्तुपरत्वं निर्भेदवस्तुपरत्वं तदिति चेत्, न, तादृशवस्तुपरत्वं किं वेदान्तानां सत्यं ज्ञानमित्यादिवाक्यानामभिधायकतया लक्षकतया वा। नाद्यः, लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति स्वीकारात्, क्वचिदपि लोके भेदविशेषरहितस्य वस्तुनो प्रसिद्धेरभावात् तत्र शक्तिग्रहासम्भवात्। न चान्त्यविशेषाणां निर्विशेषाणां प्रसिद्धत्वात् कथं न शक्तिग्रह इति वाच्यम्, अन्त्यविशेषाणां स्वतो व्यावृत्तानां वेदान्तेऽनङ्गीकारात्। किञ्च प्रसिद्धावपि निर्विशेषे ब्रह्मणि सत्यादिपदानामभिधायकत्वं न सम्भवति, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतिसिद्धान्तविरोधात्।

लक्षकतयापि वेदान्तानां निर्भेदविशेषवस्तुपरत्वं न सम्भवति। तादृशवस्तुनोऽप्रसिद्धत्वादेव अभिधेयाऽविनाभावस्य लक्षणाहेतोरसम्भवात्। उच्यते हि अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते[1]।

तथाहि मुख्यार्थेन सह अविनाभूतं लक्ष्यं भवति। यथा 'गङ्गायां घोषः' इत्यादौ प्रवाहाविनाभूतं तीरं गङ्गापदेन लक्ष्यते। अविनाभावश्चात्र नाव्यभिचरितसम्बन्धः; अपि तु भूयः सम्बन्धदर्शनमात्रम्। 'मञ्चाः क्रोशन्ति' इत्यादिस्थले मञ्चपुरुषयोरव्यभिचरितसम्बन्धाभावात्। पुरुषरहितस्यापि मञ्चस्य सम्भवात् मञ्चसम्बन्धरहितस्यापि पुरुषस्य सम्भवात्। भूयः सम्बन्धदर्शनरूपाविनाभावस्वीकारे तु तत्रापि लक्षणा सिध्यति। तदुक्तं काव्यप्रकाशे—"अविनाभावोऽत्र सम्बन्धमात्रम्, न तु नान्तरीयकत्वम्। तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात्[2]"। एवञ्च तादृशस्याभिधेयस्यात्यन्ताप्रसिद्ध्या तेन सहाविनाभावो न सम्भवति।

नन्वभिधेयासम्बद्धमपि क्वचिल्लक्ष्यं दृश्यते, यथा शत्रुगृहभोजनाकाङ्क्षी सुहृदा किं तस्य गृहे भोजनं कर्तव्यं न वेति पृष्टेन उच्यते 'विषं भुङ्क्ष्व' इति। न ह्यत्र

---

१. त० वा० १।४।२३;

२. का० प्र० पृ० ४८।

न लक्ष्यैतद्गृहभोजननिवृत्तिविषभक्षणयोः सम्बन्धोऽस्ति, तदपि लक्ष्यते। अतोऽभिधेयाविनाभूते एव लक्षणेति न नियमः; अपि तु क्वचिद् वाक्यप्रामाण्यानुपपत्तिरपि लक्षणायां हेतुः स्वीकर्तव्यः। तथा च सत्यं ज्ञानमित्यादिवाक्यप्रामाण्यानुपपत्तिरेव निर्विशेषवस्तुलक्षणे तस्या हेतुरिति मन्तव्यमिति चेत्, न, सर्वत्र तात्पर्यानुपपत्तेर्लक्षणायां बीजत्वेऽपि तस्य योग्ये एव मुख्यार्थसम्बद्धे एव लक्षणाया प्रवर्तकत्वात्; अन्यथा अत्यन्ताप्रसिद्धे गगनारविन्दादावपि लक्षणाप्रसङ्गात्। अतः प्रामाण्यानुपपत्तिस्तात्पर्यानुपपत्तिर्वा वाक्यस्यान्यार्थपरतायामेव बीजमन्यार्थश्च प्रसिद्धोऽभिधेयसम्बद्ध एव स्यात्। प्रकृतेऽपि अनिष्टकरत्वादिसम्बन्धस्य सत्त्वान्न मुख्यार्थलक्ष्यार्थयोः सम्बन्धाभावः।

किञ्च निर्विशेषवस्तुनो लक्ष्यत्वमपि न सम्भवति, प्रमाणान्तरयोग्यस्य कार्ययोगितया क्लृप्तस्य अव्यभिचरितस्य च लक्ष्यत्वस्वीकारात्, तथा दृष्टत्वात् तीरादौ। न च तत्सम्भवति निर्विशेषवस्तुनि। किञ्च अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य सत्यं ज्ञानमित्यादिवाक्येऽभावः। न च निर्विशेषत्वं ब्रह्मणः श्रूयते एकमेवाद्वितीयमित्यादि श्रुत्या, अस्थूलमित्यादि श्रुत्या चातः सत्यत्वादिगुणादिविशिष्टस्य वाक्यार्थत्वायोगाद् निर्विशेषे लक्षणाश्रयणमिति वाच्यम्, अत्यन्तभेदस्थूलत्वादिगुणनिवर्तकत्वोपपत्तेः। लक्षणाश्रयणे च लक्ष्यस्य तावन्मात्रत्वात् शब्दान्तरवैयर्थ्यापत्तिः पर्यायतापत्तिश्च स्यात्। अपर्यायशब्दा एते ज्ञानानन्दादयः। न चापर्यायाणामखण्डार्थता दृष्टा।

किञ्च निर्भेदवस्तुपरत्वमित्यत्र निर्भेदत्वं नाम किं भेदाभावविशिष्टत्वम्, उत भेदाभावोपलक्षितत्वम्? नाद्यस्तत्परत्वे वाक्यस्य निर्घटं भूतलमितिवत् संसर्गविशिष्टार्थत्वप्रसङ्गात्। न द्वितीयः, तत्र पक्षेऽपि संसृष्टार्थत्वप्रसङ्गात्। तथाहि द्वितीयपक्षे किं भेदाभावोपलक्षितत्वविशिष्टं वक्तव्यम्, उत वस्तुमात्रम्? आद्ये संसृष्टार्थत्वमेवागतम्। वस्तुमात्रपक्षे च भेदाभावस्य द्वारता स्वीक्रियते चेत् तथापि नाखण्डार्थता, प्रतीतौ अखण्डार्थत्वासम्भवात्। अप्रतीतौ चानुपलक्षकत्वादेवोपलक्षणस्य वैयर्थ्यप्रसङ्गात्।

अपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वमखण्डार्थत्वमित्यपि न युक्तम्। शीतोष्णस्पर्शवन्तौ पयःपावकावित्यत्रापर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वेऽपि अखण्डार्थत्वादर्शनाद् भिन्नत्वाल्लक्ष्ययोरिति। न चापर्यायशब्दानामेकप्रातिपदिकार्थपर्यवसायित्वमखण्डार्थत्वमित्यपि युक्तम्, पदान्तरप्रयोगवैयर्थ्यात्। ननु संसर्गागोचरप्रमाजनकत्वमेवाखण्डार्थत्वमिति चेत्, न, असम्भवात्। "सर्वत्र हि वाक्यार्थस्य पदार्थसंसर्गतया वा संसृष्टपदार्थतया वा संसर्गग्राहिवाक्यमिति स्वीकारात्[1]"।

१. नयनप्र० पृ० १८५।

अयम्भावः—पदानां पदार्थनिरूपितैव शक्तिः, न तु अन्वयांशनिरूपिता। एकपदार्थनिरूपितसम्बन्धानामानन्त्येन तत्र शक्तौ गौरवात्। किं वा तस्याकाङ्क्षादिलभ्यत्वेन तत्र शक्तिकल्पनस्यायुक्तत्वाद् अनन्यलभ्यस्यैव शब्दार्थत्वात्। एवञ्च पदात् प्रथमं पदार्थमात्रोपस्थितिः, पश्चाद् आकाङ्क्षादिवशाद् अन्वयांशरूपवाक्यार्थस्योपस्थितिर्भवति। तथा च तात्पर्यवशाद् अशक्य एवान्वयांशरूपो वाक्यार्थः शाब्दबोधे प्रतीयते। उक्तञ्च महाभाष्ये 'षष्ठी शेषे[1]' इति सूत्रे विशेष्यविशेषणभावरूपं यदाधिक्यम्, स वाक्यार्थः। तत्र अशक्यार्थस्य शब्दविषयत्वानुपपत्त्यतिप्रसङ्गाच्च महाभाष्यादिवैयाकरणनिकायसिद्धत्वाच्च वैयाकरणास्तादृशवाक्यार्थे वाक्यस्य शक्तिं स्वीकुर्वन्ति। न चोक्तान्वयरूपवाक्यार्थस्य तद्घटकपदादनुपस्थितत्वेनापूर्वत्वात् तत्र शक्तिग्रहासम्भवः। तथोपस्थिततद्विषयकशक्तिग्रहे च तस्यापूर्वत्वहानिरिति वाच्यम्, वृद्धव्यवहारदर्शनसहकृतमनसोपस्थितिविशिष्टे तद्ग्रहसम्भवात्। क्वचिदुपदेशेन शक्तिग्रहसम्भवाच्च। क्वचिच्चाकाङ्क्षावशात् तत्र शक्तिग्रहो बोधश्च। वाक्यार्थे वाक्यस्य शक्तिरिति मते प्रमाणमपि वाक्यपदीयादिग्रन्थे उक्तम्। तथाहि—'वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया[2]।'

भट्टपादैरप्युक्तम्—

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः।
साक्षाद् यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्॥
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले।
वाक्यार्थमितये तेषां प्रवृत्त्या नान्तरीयकम्॥
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्[3]॥

एवञ्च पदवृत्तिपदार्थमात्रबोधिका वाक्यवृत्तिस्तु विशिष्टार्थस्यैव बोधिकेति बोध्यम्। अभिहितान्वयवादिनस्तु न तत्र शक्तिं कल्पयन्ति। न चाशक्यस्य शाब्दविषयत्वेऽतिप्रसङ्गः, स्वरूपसतः शक्यार्थान्वयस्य नियामकत्वात्। एवञ्च आकाङ्क्षादिविशिष्टपदसमूहो वाक्यम्, वाक्यार्थश्च संसर्गः।

अन्विताभिधानवादिनस्तु संसर्गविशिष्टपदार्थ एव वाक्यार्थः। तत्र वाक्यस्य शक्तिं स्वीकुर्वन्ति। एतेषामपि मते संसर्गः वाक्यार्थे निविष्ट एव। विस्तरेण चानयोर्मतयोर्विवेचनं तत्प्रकरणे कृतम्।

एवञ्च सर्वेषामपि मते संसृष्टार्थबोधकत्वं वाक्यस्य सम्मतमेव। किञ्च विवादास्पदं वाक्यं संसृष्टार्थबोधकम्, वाक्यत्वात् गामानयेत्यादिवाक्यवदिति अनुमानेनापि वाक्यस्य संसर्गबोधकत्वं सिद्धं भवति।

१. पा० सू० २.३।५०; २. वाक्यप० का० २६४; ३. श्लोकवा० ३४२, ३४३।

किञ्च प्रमात्वमपि तद्वति तत्प्रकारकत्वरूपं निष्प्रकारके ब्रह्मणि न घटत इति। न च सोऽयं देवदत्त इत्यादिषु देवदत्तगतभेदव्युदासेन तत्स्वरूपमात्रपर्यवसायित्वमपर्यायशब्दानां दृष्टमिति चेत्, मैवम्, तत्रापि परोक्षदेशकालोपलक्षितस्यैतद्देशकालविशिष्टत्वप्रतिपादकतया संसृष्टार्थत्वानतिवृत्तेः। तावतैव भेदभ्रमव्युदासाद् उभयपदलक्षणाभ्युपगमे गौरवप्रसङ्गाच्च। प्रमाणमपि किञ्चिदत्राखण्डार्थत्वे नास्ति।

नन्वस्ति अनुमानं प्रमाणम्। तथा हि—प्रकृष्टप्रकाश इति वाक्यार्थश्चन्द्रप्रातिपदिकमात्रार्थः, तत्प्रश्नोत्तरार्थत्वात्, यन्नैवम्, तन्नैवम्, यथा वाक्यान्तरार्थं इति चेत्, न, यदि चन्द्रप्रातिपदिकार्थमात्रार्थोऽन्यत्र प्रसिद्धस्तर्हि तत्र हेतोः सत्त्वात् केवलव्यतिरेकित्वव्याकोपः। असत्वे त्वसाधारणानैकान्तिकता। यदि नान्यत्र प्रसिद्धस्तर्हि अप्रसिद्धविशेषणतादोषः। न च विमतमखण्डार्थलक्षणवाक्यत्वात् पृथुबुध्नोदराकारः कुम्भ इति वाक्यवदित्यनुमानं प्रमाणमिति वाच्यम् सर्वस्य वाक्यस्य संसृष्टार्थबोधकत्वे वाक्यत्वादिति हेतुना सिद्धे लक्षणवाक्यस्यापि तथात्वाद् दृष्टान्ते साध्यविकलत्वात्। लक्षणवाक्यस्यापि इतरव्यावृत्तेः व्यवहारस्य वा बोधनात् सखण्डार्थपरत्वं सिद्धमेव।

सखण्डार्थत्वे चानुमानमुक्तमेव, विमतं पदार्थसंसर्गप्रतीतिजनकं वाक्यत्वाद् गवानयनादिवाक्यवत्। न च जरद्गववाक्ये वाक्यत्वस्य सत्वात् साध्यस्य चाभावाद् व्यभिचार इति वाच्यम्, तस्य वाक्याभासत्वाद्, आकाङ्क्षादियुक्तानि पदानि वाक्यमिति वाक्यविदां सम्मतत्वात्। अथवा जरद्गववाक्यस्यापि सार्थकत्वात्। तथा हि—

जरद्गवः कम्बलपादुकाभ्यां द्वारिस्थितो गायति भद्रकाणि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः॥

अस्यार्थः—जरद्गवो जीवो जरन्ति बहिर्मुखानि चिरकालविषयभोगपराणि गाव इन्द्रियाणि यस्य सः। कम्बलं अज्ञानस्यावरणशक्तिः, पादुके तद्विक्षेपशक्तिः। कम्बलस्याच्छादकत्वात् पादुकयोश्च क्रियाशीलत्वात् तत्सहाय्यत्वाद्वा उभाभ्यां शब्दाभ्यामुक्तार्थप्रतीतिः। तादृशशक्तिद्वयोपेताज्ञानोपेतो जीवो द्वारि स्थितः मोक्षद्वारि स्थितोऽपि साधनोन्मुखोऽपि किं वा मोक्षद्वारशरीरस्थितः सन् भद्रकाणि विषयभोगरागान् गायति। अथवा मोक्षद्वारि स्थितो मुमुक्षुः सन्नपि अज्ञानसहितभद्रकाणि कल्याणपराणि श्रुतिवाक्यान्युच्चारयति। तत्र ब्राह्मणी ब्रह्मविद्या बुद्धिर्वा सत्त्वगुणसम्पन्ना ब्रह्मण इयमिति ब्रह्म प्रतिपादयतीति वा ब्राह्मणी ब्रह्मविद्या उमा बुद्धिः पुत्रकामा पुंनामनरकत्राणकारणत्वाद् ज्ञानमेव पुत्रः तत्कामा, तत्प्रदातुकामा वा तं तादृशम् अज्ञानसहितं भद्रं गायन्तं मुमुक्षुं

संसाराभिलाषुकं वा जीवं पृच्छति प्रतिबोधयति, राजन्! राजते इति राजा, स्वयंप्रकाशः, चिद्रूपस्त्वमिति भावः। रूमायां लवणखनौ विज्ञानधने ब्रह्मणि एकरसे आनन्दरूपे लशुनस्य दुर्गन्धशीलस्य विषयस्य कोऽर्थः, मूल्यम्? किञ्चिदपि नास्तीति भावः। विज्ञानघने इतरपदार्थस्य मायातत्कल्पितस्य च गन्धनशीलस्य मूल्यं सत्तैव नास्ति। अतस्त्वं विज्ञानघनश्चिद्रूप एवासि, ततः किमर्थं मुक्तशक्तिद्वयाज्ञानयुक्तोऽसि अज्ञानस्यैवासत्त्वात्। किंवा कथं अज्ञानिना त्वया भद्रकाणि ब्रह्मवाक्यान्येव गीयन्ते। तेन न मोक्षो भविष्यति अज्ञानस्य वर्तमानत्वात्। किं वा अज्ञानसहितः संसारे कथं संसारप्रियाणि वाक्यानि गीतवादित्राणि अभिध्यायसि, न तेन मोक्षसम्भवः। तवैतत्कर्म विपरीतमिव प्रतिभातीति अस्य जरद्गववाक्यस्यैतादृशमर्थं कुर्वन्ति गुरवः शास्त्रमूर्त्तयः **श्रीदेवस्वरूपमिश्राः**।

एवञ्च संसर्गप्रतीत्यजनकत्वे वाक्यस्य वाक्यत्वमेवापायादिति विपक्षे बाधकस्तर्कोऽपि बोध्यः। तदेवं लक्षणप्रमाणाभ्यां रहितत्वाद् अखण्डार्थत्वं वेदान्तानामसिद्धम्।

एतत् प्रसङ्गे शतदूषणीकाराणां श्रीमद्वेदान्तदेशिकानामखण्डार्थखण्डनवादोऽपि उदाहर्त्तव्यः। तैश्चोक्तम्—

सत्यज्ञानादिभिर्वाक्यैरखण्डं बोध्यमिच्छताम्।
अहं करोमि मूर्खाणामहङ्करणखण्डनम्॥

यत्तु जल्पन्ति विगीतं वाक्यमखण्डार्थपरं समानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इत्यादिवाक्यवदिति। अत्र किमिदमखण्डार्थत्वम्? निरवयवार्थपरत्वं वा, अच्छेद्यार्थपरत्वं वा, निर्विशेषणपरत्वं वा, विशेष्यमात्रपरत्वं वा, निर्भेदार्थपरत्वं वा, भावरूपविशेषणरहितपरत्वं वा, एकविशेष्यपरत्वं वा, अन्यद्वा किञ्चित्, न प्रथमद्वितीयौ सिद्धसाधनाद्, दृष्टान्तस्य साध्यविकलत्वाच्च। न हि देवदत्तपिण्डस्य निरवयवत्वमच्छेद्यत्वं वा भवताप्यभ्युपेतम्। न हि सोऽयं देवदत्त इति वाक्यादपि तथाप्रतीतिः। न तृतीयः, तत्र निर्विशेषणत्वमपि किं शब्दबोध्यत्वेनाभिमतमुत वस्तुगत्या? आद्ये लक्षणविशेषणविशिष्टार्थबोधनाद् अविशिष्टार्थ बोधकत्वाभिमानभङ्गः। निर्विशेषणत्वं न विशेषणम्, स्वरूपमेवेति चेत्, न, स्वरूपस्य सम्प्रतिपन्नत्वेनासाध्यत्वात्। तदा हि अर्थपरमित्येतावदेवोक्तं स्यात्, तथा च सिद्धसाधनता।

द्वितीये तु सगुणब्रह्मप्रतिपादकस्य वाक्यस्य न कश्चिद् विशेषः। तदपि हि वस्तुगत्या निर्विशेषणमेव वक्ति भवतः। विशेषणप्रतिपादनाप्रतिपादनाभ्यां वैषम्यमिति चेत्, न, प्रातीतिकप्रतिपादनस्य परमार्थतोऽप्रतिपादनस्य चोभयत्रापि सामानत्वात्। अस्मन्मते वस्तुतः सविशेषणेऽपि देवदत्तः श्यामो युवेत्यादि

वाक्यानां प्रवृत्तिदर्शनात्, दृष्टान्तस्य साध्यविकलत्वाच्च। त्वन्मतेन तु व्यधिकरणवाक्यानामपि परमार्थतो विशेषणशून्यार्थविषयत्वेन हेतुविशेषणवैयर्थ्यम्। न चतुर्थः, विशेष्यस्वरूपस्यैव मात्रशब्देनोपादाने सिद्धसाधनत्वात्, अतिरिक्तोपादाने विवक्षितासिद्धेः। पदप्रतिपन्नविशेषणत्यागस्तेन विवक्षित इति चेत्, स किं वाच्यत्वेन विवक्षितः, उत तत्राविद्यमानतामात्रेण, उत विशेषणानां बोधनव्यापारागोचरत्वेन ? आद्ये बोध्यवैशिष्टयप्रसङ्गः सत्यपदस्यासत्ये तात्पर्यमिति व्याहतवर्णनप्रसङ्गश्च, साध्यवैकल्यश्च, तदिदंशब्दयोस्तत्तेदन्ताभावप्रतिपादकत्वाभावात्। द्वितीयेऽपि पूर्ववत् सगुणब्रह्मवाक्यासमानतया तेषामप्यखण्डपरत्वप्रसङ्गः, साध्यवैकल्यश्च देवदत्तस्य कालद्वयसम्बन्धाभावे क्षणिकत्वप्रसङ्गात्। तृतीयेऽपि किं सर्वेषां तथाविधबोधनव्यापारागोचरत्वमभिमतम्, उत निरूपकाणाम् ? नाद्यः, भवदभिमततर्कानभिज्ञानां तदभिज्ञत्वेऽपि तदविश्वासिनां च तद्विशेषणविशिष्टप्रतीतेः। न द्वितीयः, असिद्धेः, अनुपपत्त्यभावस्य वक्ष्यमाणत्वात्। नापि पञ्चमः, व्यावृत्तिपरत्ववर्णनस्यापि निर्मूलत्वप्रसङ्गात्। अनृतजडपरिच्छिन्नव्यावृत्तिपरतया हि पदत्रयव्यावृत्तिरभिमता। सजातीयभेदराहित्यं विवक्षितमिति चेत्, न, तस्यैतच्छब्दप्रतिपाद्यत्वात्। विशेषणविशिष्टत्वेऽपि तत्सिद्धयविरोधाच्च, पूर्वञ्च साध्यवैकल्यं स्यात्। न च षष्ठः, भावस्य विशेषणदूषकाणां तर्काणामभावस्य विशेषणैः सह का मैत्रीष्वस्रीयता ? तैरपि सम्बन्धाभावात्।

तथा च—

> भावो यथा तथाऽभावो निर्विशेषत्वबाधकः।
> अबाधकत्वे भावेऽपि बाधकत्वकथा मुधा॥
>
> वाक्यार्थस्य सखण्डत्वं भावेन यदि जायते।
> अभावेनापि जायेत सखण्डत्वमखण्डितम्॥
>
> भावान्तरमभावो वा यद्वा भावान्तराधिकः।

न खण्डयते सखण्डत्वं द्वयोरपि च पक्षयोः देवदत्तो युवा श्याम इत्यादिभिरनैकान्त्याच्च। प्रत्यक्षबलात् तत्र वैशिष्टयम्। अत्र तु शब्दैकसमधिगम्यत्वात्। यथाशब्दं व्यवस्थेति चेत् तर्हि शब्दैकसमधिगम्यार्थविषयत्वे सति सामानाधिकरणवाक्यत्वादिति हेतुः स्यात्। तथा सति दृष्टान्तस्य साधनविकलत्वप्रसङ्गः स्यात्। न हि सोऽयं देवदत्त इत्येतद् वाक्यमतीन्द्रियार्थविषयम्, पूर्ववत् साध्यवैकल्याच्च। सप्तमस्तु अस्मत्पक्ष एवेति सिद्धसाधनमेव। अष्टममपि विकल्पं विकल्पयामः। तत् किं निर्विवादयत् किञ्चिद् बोधनमात्रादधिकम् ? उतानधिकम्, आद्ये विशिष्टपरत्वमकामेनापि स्वीकार्यम्। द्वितीये तु सिद्धसाधनत्वमेव। विगीतं वाक्यमिति किं तत्त्वमसि सत्यज्ञानादिमात्रं विवक्षितम्, उत सोऽयं देवदत्त इति वाक्यव्यतिरिक्तं सर्वमपि समानाधिकरणवाक्यम्। नाद्यः, देवदत्तः

श्यामो युवा लोहिताक्ष इत्यादिभिरनैकान्त्यात्। न द्वितीयः, तैरेव कालात्ययापदेशात्। न हि सोऽयं देवदत्त इत्यादि वाक्यस्येव देवदत्तः श्याम इत्यादिवाक्यस्य विरोधाभासोऽप्यस्ति। आहुश्च—

सर्वस्यापि च पक्षत्वे बाध एव प्रसज्यते।
अनैकान्तिकता तु स्यात् पक्षीकारे च कस्यचित्॥

वाक्यत्वादिहेतुश्च स्वरूपासिद्धतां व्रजेत्।
आकाङ्क्षादित्रयाभावे तदभावे क्वाविशिष्टधीः॥

यश्चास्मिन्नेव साध्ये लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति प्रयोगः, सोऽपि एतैरेव दूषणैर्निरस्तप्रायः। प्रतिज्ञाहेत्वोर्विरोधश्च लक्षणस्यासाधारणधर्मत्वात्[1]" इत्यनेन ग्रन्थेन अष्टभिर्विकल्पैरखण्डत्वं खण्डितम्।

॥ इत्यखण्डार्थनिरूपणे पूर्वपक्षः॥

१. शतदूषणी—पृ० १६१।

# अथाखण्डार्थनिरूपणे उत्तरपक्षः

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥

अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वमखण्डार्थत्वम्[1] । हस्तः कर इत्यादौ व्यभिचारवारणायापर्यायग्रहणम् । पर्यायत्वञ्च विभिन्नानुपूर्वीकत्वे सति एकार्थवाचकत्वे सति एकप्रवृत्तिनिमित्तकत्वम् ।

ननु 'घटो घटः' इत्यादिस्थले तद्धर्मभेदाभावात् प्रकारतावच्छेदक-विशेष्यतावच्छेदकधर्मयोर्भेदाभावाद् न घटप्रकारकघटविशेष्यकाभेदसंसर्ग-शाब्दबोधः, तथैव 'घटः कलशः' इत्यादिस्थलेऽपि प्रातिपदिकमात्रार्थोपस्थितावपि विशिष्टबोधस्य संसर्गगोचरप्रमायास्तादृशस्थलेऽप्रसिद्धत्वात् न तत्र तस्याभावो बोधयितुं शक्यते । उक्तञ्च व्युत्पत्तिवादे गदाधरभट्टाचार्येण "यादृशं फलं क्वचित् प्रसिध्यति, तादृशस्यैवापत्तिः सम्भवति, क्लृप्तसामग्रीबलात् । यादृशं च सर्वथैवाऽप्रसिद्धम्, तादृशस्य चापादकाप्रसिद्धेरापत्तिरशक्यैव । घटत्वाद्यवच्छिन्न विशेष्यताकाभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात् कथं तदापत्तिः[2]" ।

एवमेव—

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

इत्यादिकं क्वचिदपि न प्रसिद्धमिति न तदापत्तिः । प्रकृतेऽपि तादृशसंसर्ग-गोचरप्रमायास्तादृशस्थले सर्वथैवाप्रसिद्धत्वात् तत्र तन्निरासायापर्यायग्रहणं व्यर्थमेव ।

न चासम्भावनाविपरीतभावनानिवर्तकमोक्षप्रयोजकज्ञानजनकत्वमखण्डार्थ-त्वमित्यत्र तल्लक्षणस्य तात्पर्यमिति वाच्यम्, प्रकृते लक्षणमात्रस्याखण्डार्थ-बोधकत्वप्रतिपादनात् प्रकृष्टप्रकाशश्चन्द्र इत्यत्र लक्षणे उक्ताखण्डार्थत्वाभावाद् अव्याप्तेः । न हि तन्मोक्षप्रयोजकज्ञानजनकम् । अहं ब्रह्मास्मीत्याकारक-निरन्तरज्ञानस्यैव तत्प्रयोजकत्वाङ्गीकारादिति चेत्, न, संशयादिनिवर्तक-वाक्यानां ग्रहणार्थमपर्यायेत्युपात्तम् । न हि 'घटः कलशः' इत्याद्युक्तौ संशयादिः, यस्य निवृत्तिः स्यात् । यत्र च प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मभेदस्तादृश-वाक्यप्रयोगे एव संशयादिनिवृत्तिरितरव्यावृत्तिर्वा भवति यथा 'नीलो घटः' इत्यादौ । अतोऽपर्यायशब्दानामित्यनेन संशयादिनिवर्तकतद्धर्मभेदवदर्थप्रतिपाद-कानां सत्यादिशब्दानां ग्रहणम् । एवञ्च पर्यायशब्दा न लक्ष्यकोटौ अन्तर्भवन्ति ।

१. चि० पृ० १७२; २. व्युत्पत्तिवादे—पृ० १०८, शास्त्रार्थकलोपेते ।

यद्वा 'घटः कलशः' इत्यादावपि प्रातिपदिकमात्रबोधस्य प्रसिद्धत्वात् तस्य च संसर्गागोचरत्वाद् अखण्डार्थत्वं स्यादेवेति तन्निवृत्त्यर्थमपर्यायग्रहणम्। पर्यायस्थले संसर्गगोचरप्रमाया अभावेऽपि असंसर्गागोचरप्रमायाः सत्त्वात्। न हि नञा अत्र प्रसज्यप्रतिषेधो बोध्यते, येन संसर्गगोचरप्रमा निषिध्येत; अपि तु पर्युदासः, न संसर्गगोचरप्रमा असंसर्गगोचरप्रमा। अथवा न संसर्गः, असंसर्गः' तद्गोचरप्रमा, तज्जनकत्वं तु पर्यायाणामपि सुतरां सिध्यतीति तन्निवृत्त्यर्थमपर्याय-ग्रहणम्।

ननु पर्यायशब्दानामपि तादृशमखण्डार्थत्वं सिद्धञ्चेत्, अस्तु नाम का क्षति-र्भवतां लौकिकलक्षणवाक्यानामपि अखण्डार्थत्वमङ्गीकुर्वतामिति चेत्, न, एता-दृशाखण्डार्थत्वबोधनद्वारा श्रुत्या लोकेन वा लक्षणवाक्येन भ्रमसंशयादि-निवृत्तिः क्रियते, स्वरूपञ्च बोध्यते। न च पर्यायस्थले तदस्ति, अतोऽभिष्टाखण्डा-र्थत्वमतिप्रसज्येत, अतोऽपर्यायशब्दग्रहणम्। इन्द्रियव्यावृत्यै शब्दग्रहणं तस्यापि तत्त्वात्। न च पर्यायत्वं शब्दस्यैव धर्म इति ऋतेऽपि शब्दग्रहणात् पर्यायग्रहणेनैव शब्दाक्षेपो जात इति नेन्द्रियेष्वतिव्याप्तिरिति वाच्यम्, पर्यायशब्दस्य क्रमरूप-क्रियाया अपि बोधकत्वात् पर्यायेण करोति, पर्यायेण भक्षयतीत्यादौ तथा बोधात्। एवञ्च अपर्यायाणामित्यनेनेन्द्रियस्यापि ग्रहणात् तत्रापि संसर्गागोचरप्रमाजनक-त्वाद् अखण्डार्थत्वमतिप्रसज्येतेति भावः।

गामानयेत्यादिस्थले अखण्डार्थत्वातिव्याप्तिनिवृत्तये संसर्गागोचरेति प्रदत्तम्। अन्यथा अपर्यायशब्दानां प्रमितिगोचरत्वमिति लक्षणं तत्रापि प्रसज्येत। ननु किमर्थं प्रमितिपदमिति चेत्, न, षडपूपा कुण्डमजाजिनमित्यादिवाक्याभास-निवृत्यर्थम्। तत्र संसर्गागोचरस्य कदाचिद् कस्यचित भ्रमस्य जनकत्वं सिद्धमेव। अथवा, संसर्गागोचरजनकत्वमित्येवार्थः स्यात्, तस्य चोक्तवाक्याभासस्थले सत्त्वाद् अतिव्याप्तिः स्यादेव।

स्यादेतत्, प्रमितिपदेन किं गृह्यते? न तावत् तद्वति तत्प्रकारकत्वरूपं प्रकृष्टप्रकाशश्चन्द्र इत्यादिस्थलेषु सत्वेऽपि सत्यं ज्ञानमित्यादिवाक्यस्थलेऽ-व्याप्तेः। न हि निर्गुणनिर्धर्मके ब्रह्मणि निष्प्रकारके तत्प्रकारकत्वं यद्वत्त्वं वा सम्भवति। अतोऽनधिगताबाधितविषयज्ञानत्वमेव सर्वानुगतं प्रमात्वं ग्रहीतव्यम्।

ननु अबाधितविषयकत्वं कीदृशम्, किं सर्वांशे अबाधित्वं तर्हि रजतमित्या-दिज्ञाने इदमंशविषयज्ञानस्य प्रमात्वं न स्यात्। यदि यत्किञ्चिदंशेऽप्यबाधिते प्रमात्वं तर्हि इदं रजतमिति ज्ञानस्यापि प्रमात्वं स्यात्। अतः सर्वांशे प्रमात्वं कीदृशमिति व्याख्येयम्। अत्र प्रसङ्गे सामान्यनिरुक्तिग्रन्थे हेत्वाभासस्य प्रथम-लक्षणे गदाधरभट्टाचार्योक्तिरुद्धरणीया।

तथा हि—अनुमितिकरणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति प्रथमं लक्षणम्। अत्र गदाधरभट्टाचार्यैरुक्तम्—"यथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता, तदनिरूपकत्वस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तानादाय दोषः[1]"।

अयम्भावः—उक्तलक्षणे यथार्थपदं यदि तद्वति तत्प्रकारकज्ञानबोधकं तर्हि पर्वतो निर्वह्निरित्यादिभ्रमाणामपि पर्वताद्यंशे पर्वतत्वादेः सत्त्वेन प्रमात्वापत्तेः। अतस्तादृशज्ञानमादायातिव्याप्तिस्तदवस्थैव। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वलक्षणे यदि यथार्थपदं न दीयेत, तर्हि पर्वतो वह्निमान् धूमादित्यादिसद्धेतुकानुमितिस्थलेऽतिव्याप्तिः। तथा हि—पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिकारणीभूतो यः अभावः = वह्न्यभाववान् पर्वत इत्याकारकभ्रमात्मकबाधनिश्चयाभावः, तत् प्रतियोगिज्ञानं वह्न्यभाववान् पर्वत इति भ्रमात्मकज्ञानं तद्विषयत्वस्य वह्न्यभाववत्पर्वतादौ सत्त्वात्। भ्रमात्मकज्ञानमादायापि अनुमितिप्रतिबन्धः स्यात्। अतो यथार्थपदमुपात्तम्। यदि उक्तरीत्या पर्वतो निर्वह्निरित्यादिभ्रमात्मकज्ञानस्यापि प्रमात्वम्, तदा यथार्थपदोपादानेऽपि पर्वतो निर्वह्निरित्यादिज्ञानमादाय पर्वतो वह्निमान् इत्यादिज्ञानस्य बाधः स्यात्। अनुमितिकारणीभूताभावस्य पर्वतो निर्वह्निरित्याकारकनिश्चयाभावस्य प्रतियोगिनः पर्वतो निर्वह्निरित्याकारकनिश्चयस्य यथार्थज्ञानत्वात् तद्विषयत्वस्य च तादृशे पर्वते सत्त्वात्। अतो यथार्थत्वं सर्वांशे प्रमात्वमिति व्याख्येयम्। तच्च स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता, तदनिरूपकत्वम्।

स्वं विशेष्यता, तद्व्यधिकरणस्तदधिकरणेऽवर्तमानो यः प्रकारः, तन्निष्ठप्रकारता निरूपिता या या विशेष्यता, तदनिरूपकत्वं ज्ञाने तादृशस्य ज्ञानस्य प्रमात्वमित्यर्थः।

समन्वयश्चेत्थम्—पर्वतो निर्वह्निरिति भ्रमज्ञाने तादृशज्ञानीयविशेष्यता पर्वतनिष्ठा, तद्व्यधिकरणो यो वह्न्यभावात्मकः प्रकारस्तन्निष्ठप्रकारतानिरूपितविशेष्यता, तन्निरूपकत्वस्यैव विद्यमानत्वेन तदनिरूपकत्वाभावाद् न सर्वांशे प्रमात्वम्, अतो नोक्तज्ञानं यथार्थपदेन धर्तुं शक्यम्। अतो नोक्तदोषः।

पर्वतो वह्निमान् इत्यादिज्ञानस्य च सर्वांशे प्रमात्वम्। तथा हि स्वपदेन पर्वतनिष्ठविशेष्यता ग्रहीतुं न शक्यते,तद्व्यधिकरणत्वस्य प्रकारीभूतवह्नेरभावात्। अतः स्वपदेन 'ह्रदो वह्निमान्' इति ज्ञानीयह्रदनिष्ठैव विशेष्यता ग्रहीतुं शक्यते,

१. सामान्यनिरुक्तिः, गादाधरी पृ०—११२।

तादृशविशेष्यताव्यधिकरणो यो वह्न्यादिरूपः प्रकारः, तन्निष्ठप्रकारतानिरूपिता ह्रदनिष्ठा विशेष्यता, तदनिरूपकत्वस्य पर्वतो वह्निमान् इति ज्ञाने सत्त्वात् सर्वांशे प्रमात्वं सुस्थितम्। अत्र स्वव्यधिकरणप्रकारावच्छिन्नत्वं स्वव्यधिकरणप्रकार-निष्ठप्रकारतानिरूपकत्वम्, तच्च विशेष्यतायां वर्तत एव।

नन्वत्र स्वव्यधिकरणत्वं स्वानधिकरणवृत्तित्वं वा स्वाधिकरणावृत्तित्वं वा ? नाद्यः, घटो द्रव्यमित्यादिज्ञानस्य प्रमात्वानुपपत्तेः। तत्र प्रकारीभूतद्रव्यत्वस्य स्वानधिकरणीभूतपटादिवृत्तित्वात्। एवञ्च घटो द्रव्यमित्यत्र ज्ञानीयविशेष्यता घटनिष्ठा, तद्व्यधिकरणप्रकार एवं भवति द्रव्यत्वम्, तन्निष्ठप्रकारतानिरूपित-विशेष्यता घटनिष्ठा, तन्निरूपकत्वमेव घटो द्रव्यमिति ज्ञानस्येति प्रमात्वं न स्यात्।

न द्वितीयः, पर्वतो निर्वह्निरित्यादिज्ञानस्यापि प्रमात्वापत्तिः। तथाहि तज्ज्ञानीयविशेष्यता पर्वतनिष्ठा, तत्रैव पर्वते कालिकसम्बन्धेन वह्न्यभावस्यापि सत्त्वात् प्रकारस्य व्यधिकरणत्वाभावात् तादृशविशेष्यताया धर्तुमशक्यत्वाद् घटो गगनवानित्यादिज्ञानीयघटनिष्ठविशेष्यताया एव धर्तुं शक्यत्वात्, तद्व्यधिकरण-गगनन्निष्ठप्रकारतानिरूपितविशेष्यताया अनिरूपकत्वात् पर्वतो निर्वह्निरित्यादि-ज्ञानस्यापि प्रमात्वं स्यादिति चेत्, न, स्वाधिकरणावृत्तित्वस्यैव विवक्षणात्। एवञ्च स्वाधिकरणावृत्तिप्रकारनिष्ठप्रकारतानिरूपिता या या विशेष्यता, तन्निरूपितत्वा-भावकूटवत्त्वमेव पर्यवसितम्। न चास्मिन् पक्षेऽपि पर्वतो निर्वह्निरिति ज्ञाने प्रमात्वापत्तिरिति वाच्यम्, स्वाधिकरणवृत्तित्वघटकवृत्तित्वस्य सम्बन्धसामान्येन विवक्षितत्वाभावात्; अपि तु स्वनिरूपितप्रकारतावच्छेदकसम्बन्धेन विवक्षणीय-त्वात्। येन सम्बन्धेन प्रकारः स्वाधिकरणे, स एव प्रकारतावच्छेदकसम्बन्धः। तथा च स्वाधिकरणनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववान् यः प्रकारः, तन्निष्ठप्रकारता निरूपिता या या विशेष्यता, तत्तदनिरूपकत्वं पर्यव-सितम्। एवञ्च पर्वतो निर्वह्निरित्यादौ पर्वतनिष्ठविशेष्यतानिरूपितप्रकारता-वच्छेदकस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वह्न्यभावे सत्त्वात्। स्वव्यधिकरण-प्रकारपदेन वह्न्यभावस्य धर्तुं शक्यत्वात्, तन्निष्ठप्रकारतानिरूपितविशेष्यता-निरूपकत्वात् तज्ज्ञानस्य न प्रमात्वम्।

यद्वा विशेष्यताविशिष्टप्रकारताशून्यत्वं सर्वांशे प्रमात्वं विशेष्यतावैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितत्व-स्वाश्रयाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपक-तावदन्यत्वोभयसम्बन्धेन। निरूपकतावत्ता च स्वावच्छेदकसम्बन्धावच्छित्व-स्व-सामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन। स्व-वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। अत्रासम्भववारणाय स्व-निरूपितत्वरूपप्रथमसम्बन्धनिवेशः। अन्यथा 'पर्वतो वह्निमान्' इत्यादौ प्रमीय-प्रकारताया अपि उदासीनह्रदादिनिष्ठविशेष्यताविशिष्टतया तदनिरूपकत्वस्य

प्रमायां विरहेणासम्भवात्। तत्सम्बन्धनिवेशे तु प्रकारतायामुदासीनह्रदादि-निष्ठविशेष्यतानिरूपितत्वविरहेण विशेष्यताविशिष्टत्वस्य प्रकारतायामभावात् नासम्भवः।

एवञ्चोक्तसम्बन्धद्वयनिवेशेन ह्रदो वह्निमानित्यादिस्थले ह्रदनिष्ठविशेष्यता विशिष्टा प्रकारता न प्रमीयप्रकारता; अपि तु ह्रदो वह्निमानित्याकारकभ्रमीय-प्रकारता, तच्छून्यत्वं तदनिरूपकत्वं प्रमायामिति समन्वयः। भ्रममात्रे प्रमात्वा-पत्तिवारणाय द्वितीयसम्बन्धः। निरूपकतावत्तायां प्रथमसम्बन्धाभावे 'ह्रदो वह्निमान्' इति ज्ञानीयविषयतानिरूपितवह्निप्रकारतायां ह्रदनिरूपितकालिक-सम्बन्धावच्छिन्नवह्निनिष्ठनिरूपकतायाः सामानाधिकरण्यादित्रितयसम्बन्धेन वैशिष्ट्यसत्त्वात् तादृशविषयतायाः स्वपदेन धर्तुमशक्यतया घटो गगनवानिति ज्ञानीयविषयताया एव तादृशत्वेन तदनिरूपकोक्तज्ञानस्य प्रमात्वापत्तिः। स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे कालिकसम्बन्धेन ह्रदे वह्नौ सत्यपि स्वावच्छेदकसंयोगसम्बन्धेन तत्र तस्याभावात् प्रथमसम्बन्धाभावादुक्तत्रिविध-सम्बन्धसत्त्वेऽपि ह्रदो वह्निमानिति ज्ञानीयह्रदनिष्ठविशेष्यतानिरूपितवह्निनिष्ठ-प्रकारतायां वैशिष्ट्याभावाद् निरूपकतावदन्यत्वाद् विशेष्यताविशिष्टप्रकारता 'ह्रदो वह्निमान्' इति ज्ञाने तदनिरूपकत्वं पर्वतो वह्निमान् इति ज्ञानस्येति अस्य प्रमात्वम्।

द्वितीयसम्बन्धानिवेशे गुणो द्रव्यमिति ज्ञानस्य प्रमात्वापत्तिः। गुणत्वनिष्ठ-निरवच्छिन्ननिरूपकातायाः सम्बन्धत्रयेण द्रव्यत्वनिष्ठप्रकारतायां सत्त्वेन तथात्वात्।

तृतीयसम्बन्धानिवेशे स्वरूपतो घटत्वावगाहिज्ञानधर्मिकस्य विषयिता-सम्बन्धेन घटत्वत्वेन घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः। स्वरूपतो घटत्वनिष्ठ-प्रकारताया अन्यसम्बन्धत्रयेण घटत्वत्वेन घटत्वनिष्ठप्रकारतायां सत्त्वात्। एवं गुणो विशिष्टसत्तावानिति ज्ञानस्य प्रमात्वापत्तिश्च।

चतुर्थसम्बन्धानिवेशे घटत्वत्वेन घटत्वावगाहिज्ञानधर्मिकस्य विषयता-सम्बन्धेन स्वरूपतो घटत्वप्रकारकज्ञानस्य प्रमात्वापत्तिः स्यात्, अतस्तन्निवेशः।

अथवा नित्यज्ञानावृत्तिविषयताशून्यत्वं प्रमात्वं सर्वांशे। नित्यज्ञानीय-विषयताप्रमीयविषयतयोरभेदात्। नित्यज्ञानञ्चेश्वरज्ञानम्। तथा च नित्यज्ञा-नीया विषयता प्रमीयविषयतैव भवति। पर्वतोवह्निमानित्यादिज्ञानीया विषयता प्रकारताख्या विशेष्यताख्या संसर्गताख्या च। नित्यज्ञानावृत्तिविषयता भ्रमीय-विषयता, तच्छून्यत्वं तदनिरूपकत्वं प्रमायाः। एवञ्च नित्यज्ञानानिरूपितविषयता निरूपकत्वं प्रमात्वमिति पर्यवसितम्।

अथवा भ्रमसामान्यशून्यत्वं प्रमात्वं। पर्वतो निर्वह्निरित्यादौ पर्वतांशे प्रमात्वेऽपि अन्यांशे भ्रमत्वस्य सत्त्वान्न सर्वांशे प्रमात्वमिति। भ्रमत्वञ्च तदभाववति तत्प्रकारकत्वमेव।

एवञ्च संसर्गागोचरप्रमितिजनकत्वमित्यत्र प्रमितिपदेन अनधिगताबाधितविषयज्ञानमेव गृह्यते। अबाधितत्वञ्च सर्वांशे कीदृशमिति उपपादितम्। तत्र स्मृतिव्यावृत्त्यर्थमनधिगतेति, भ्रमेऽतिप्रसङ्गवारणायाबाधितेति विषयविशेषणम्। ज्ञानपदमज्ञानेऽतिप्रसङ्गनिरासाय, तस्यापि सविषयकत्वाद्। इच्छादिव्यावृत्तिस्तु अनधिगतेति विशेषणादेव।

ननु किञ्चदपि केनाप्यधिगतमेव। किं वा ईश्वरस्य सर्वमधिगतमिति अनधिगतत्वाभावान्नेदं लक्षणं युक्तमिति चेत्, न, तत्पुरुषीयत्वनिवेशेन दोषाभावात्।

ननु तत्पदप्रवेशाल्लक्षणाननुगमः। दिनान्तरानुभूतघटादेर्दिनान्तरे तदनुभवे तत्पुरुषस्याव्याप्तिः। धारावाहिकबुद्धौ चाव्याप्तिः, तत्र कालस्य तदनुभवे नीरूपस्याभासमानत्वादिति चेत्, अत्रोच्यते—अनधिगतविषयकत्वञ्चानुभवविशिष्टज्ञानान्यज्ञानत्वम्। वैशिष्टयञ्च नियमेन स्वसमानविषयकत्व-स्वसामानाधिकरण्य-स्वाविषयाविषयकत्वैतत्त्रितयसम्बन्धेन। एतत्सम्बन्धत्रयेणानुभवविशिष्टा स्मृतिस्तदन्यज्ञानत्वं प्रमायाम्। तत्र प्रथमः सम्बन्धो दिनान्तरानुभूतघटाज्ञानव्यावृत्त्यर्थम्। पुरुषान्तरज्ञानेऽनुभववैशिष्टयनिवृत्तये हितो यः सम्बन्धः, प्रत्यभिज्ञायां तादृशवैशिष्टयनिरासाय तृतीयः सम्बन्धः। इच्छादिव्यावृत्त्यर्थं ज्ञानेति। एवञ्च अनुभवविशिष्टस्मृतिभिन्नज्ञानत्वे सत्यबाधितविषयकत्वं लक्षणम्। अतो न क्वापि दोष इति ब्रह्मविद्याचार्या गुरवो देवस्वरूपमिश्राः परिष्कुर्वन्ति। अतोऽपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वमित्यत्र लक्षणे प्रमितिपदं निवेशनीयम्, अन्यथा 'राज्ञः पुरुषः' इत्यादौ राजपुरुषाभेदतात्पर्यभ्रमात् पदार्थसंसर्गानवगाहि तदभेदभ्रमजनकेऽतिव्याप्तिः स्यात्।

नन्विदं लक्षणं न युक्तम्, अप्राप्तयोः प्राप्तिः संयोगः, नित्यः सम्बन्धः समवाय इत्यादि संयोगसमवायलक्षणवाक्येष्वव्याप्तेः। तेषां लक्षणवाक्यानां लक्ष्यसंसर्गविषयकत्वेन संसर्गागोचरप्रमितिजनकत्वाभावात् संसर्गस्यैव संयोगादेः प्रमाजनकत्वादिति चेत्,न, संसर्गागोचरप्रमितिजनकत्वमित्यनेन "यद् बोधयति, तदीयसंसर्गागोचरत्वे तत् प्रमितिजनकत्वरूपार्थस्य विवक्षितत्वात्[1]"। अयम्भावः—अत्र संसर्गपदेन वाक्यघटकीभूतपदस्मारितपदार्थसम्बन्धस्यैव विवक्षितत्वात्। ननु वाक्यार्थभूतसंसर्गस्य सयोगसमवायलक्षणवाक्यस्यापि तद्घटकपदार्थसंसर्गागोचरसंयोगादिरूपार्थस्य प्रमाजनकत्वमस्त्येव। न हि तादृशवाक्येन पदार्थसंसर्गो विवक्षितः, येन संसर्गगोचरत्वमापतेत्।

---

१. नयनप्र० पृ० १९५।

नन्वेवं वाक्यघटकपदवाच्यार्थनिरूपितसंसर्गगोचरप्रमाजनकत्वमखण्डार्थत्वमित्युक्तं भवति। एवञ्च विषं भुङ्क्ष्वेत्यादि सर्वलक्षणवाक्येष्वतिव्याप्तिः स्यात्, तेषामपि स्वघटकपदोपस्थापितार्थनिरूपितसंसर्गगोचरजनकत्वातिदि चेत्, न, स्वघटकपदोपस्थापितार्थनिरूपितसंसर्गगोचरप्रमाजनकत्वस्य विवक्षणाद् उपस्थितिश्च शक्त्या लक्षणया वा। विषं भुङ्क्ष्वेत्यादौ वाक्यलक्षणयोपस्थापितार्थस्य संसर्गगोचरप्रमाजनकत्वाद् नातिव्याप्तिः। अत्र लक्षणयोपस्थापितार्थः शत्रुगृहभोजनाभावः, तत्संसर्गावगाहिज्ञानजनकत्वमुक्तवाक्येऽपीति बोध्यम्।

ननु सत्यपि अतिव्याप्त्यव्याप्तिदोषराहित्ये अस्मिन् लक्षणेऽसम्भव एव दोषः, तादृशस्याखण्डार्थस्य कुत्राप्यप्रसिद्धेः। न च प्रकृष्टप्रकाशः चन्द्र इत्यादि लक्षणवाक्येषु तादृशी अखण्डार्थता प्रसिद्धिरिति वाच्यम्, तादृशलक्षणवाक्यस्यापि सजातीयविजातीयेभ्यो व्यावृत्तिवैशिष्ट्यप्रतिपादनपरत्वात्। किं वा प्रकृष्टप्रकाशशब्देन चन्द्रो व्यवहर्तव्य इत्यादिरूपव्यवहारप्रतिपादकत्वान् नोक्तस्थलेऽखण्डार्थतेति। एवं सोऽयं देवदत्त इत्यादिषु वाक्येषु देवदत्तस्वरूपमात्रप्रतिपादकेष्वपि विभिन्नकालवैशिष्ट्यस्य प्रतिपादनाद् नोक्ताखण्डार्थता, अन्यथा उक्तकालसम्बन्धाभावे देवदत्तस्य क्षणिकत्वप्रसङ्ग इति चेत्, न, प्रकृष्टप्रकाशादिवाक्येषु तत्सद्भावात्। न च तत्रापि सजातीयविजातीयव्यावृत्तिवैशिष्ट्यप्रतिपादनमिति वाच्यम्, साक्षाद् अभिधानेन सजातीयादि व्यावृत्तिप्रतिपादनाभावात्। व्यावृत्तिप्रतिपादकशब्दप्रयोगाभावात्। यदि चन्द्रस्वरूपप्रतिपादनेनार्थतो व्यावृत्तिरिति मन्यते, तदा तस्य शब्दार्थत्वाभावाद् नाखण्डार्थत्वहानिः। यश्चार्थादर्थो न स चोदनार्थ इति न्यायात्। अत एव गामानयेत्यादिवाक्यार्थे नाश्वानयनव्यावृत्तिरपि।

न चायं चन्द्र इति व्यवहर्तव्य इत्यादिव्यवहारसाधनमेव लक्षणप्रयोजनं तावताऽपि अखण्डार्थता खण्डितैवेति वाच्यम्, विकल्पासहत्वात्। किं चन्द्ररूपार्थविशेषितो व्यवहारः कर्तव्यः, उत चन्द्रशब्दमात्रविशेषितो व्यवहारः कर्तव्यः? आद्ये, किं चन्द्रार्थविशेषितो व्यवहारः प्रतिवादिनोऽज्ञातो ज्ञातो वा? यद्यज्ञातस्तदा अप्रसिद्धविशेषणत्वम्। किं वा लक्षणवाक्यादपि विषयविशेषितकर्तव्यतां तस्य कथमधिगच्छेत्। यदि ज्ञातस्तर्हि उक्तलक्षणवाक्यरूपमयं चन्द्र इति व्यवहर्तव्यः प्रकृष्टप्रकाशत्वात्, यन्नैवम्, तन्नैवम्, यथा नक्षत्रादीत्यादिवाक्यं निष्प्रयोजनं स्यात्, ज्ञातज्ञापकत्वात्। एतत्सम्बन्धे विशेषितश्चित्सुखीग्रन्थादौ द्रष्टव्यम्।

एवं सोऽयं देवदत्त इत्यादिवाक्यस्यापि तत्कालविशिष्टत्वैतत्कालविशिष्टत्वांशपरित्यागाद् भागत्यागलक्षणया देवदत्तस्वरूपमात्रप्रतिपत्तिः। न चोक्तरीत्या क्षणिकत्वप्रसङ्गः, कालस्यापि उपलक्षणात्, प्रत्यभिज्ञाप्रमाणगम्यत्वाच्च। तस्मात् सिद्धमखण्डार्थलक्षणम्। प्रत्यभिज्ञा च न सेयं दीपकलिकेत्यादिवद् भ्रमात्मिका।

किञ्च अपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वमखण्डार्थत्वमित्यपि लक्षणम्। न चैकप्रातिपदिकार्थपरत्वे लक्षणवाक्यघटकपदान्तराणां वैयर्थ्यप्रसङ्ग इति वाच्यम्, व्यावर्त्यभेदाद् अर्थवत्तोपपत्तेः। यथा प्रकृष्टप्रकाशश्चन्द्र इत्यादौ प्रकृष्टपदेन अप्रकृष्टखद्योतादेः प्रकाशपदेन च संतमसादेश्च व्यवच्छेदेन जिज्ञासितचन्द्रमात्रार्थबोधः।

एवमेव सत्यं ज्ञानमित्यादिवाक्येनापि सत्यादिपदैरन्ततो जडदुःखान्तवत्त्वभ्रान्तिनिवृत्तिद्वारा लक्ष्यस्य ब्रह्मणः स्वरूपमात्रबोधः।

न च पर्यायतापत्तिः, विभिन्नप्रवृत्तिनिमित्तत्वात्। न चैवमनेकाकारविज्ञानजनकत्वात् पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसङ्गः। लक्षणया तत्तद् भ्रान्तिनिवृत्तिमात्रप्रयोजनतया तत्तद् पदानां लक्ष्ये ब्रह्ममात्रे पर्यवसानात्। एवञ्च तत्तच्छब्दजन्यविज्ञानानां तत्तद् भिन्नाकारसमर्पिणां नान्तरीयकतया तत्तद् विरोध्याकारनिवर्तकत्वाद् वाक्यस्याखण्डार्थत्वसिद्धिः। उक्तञ्च सुरेश्वराचार्यैस्तैत्तिरीयकवार्तिके—

प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः।
पश्चादभावं जानाति वध्यघातकवत्पदात्॥
शब्दात् प्रतीयते तावत् संगतिर्धर्मधर्मिणोः।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः॥
तत्रानन्तोऽन्तवद्वस्तु व्यावृत्यैव विशेषणम्।
स्वार्थार्पणप्रणाल्या च परिशिष्टौ विशेषणम्॥
तद्विरोध्यर्थसंत्यागः सामर्थ्यात् स्यान्न शब्दतः॥

ब्रह्मणश्चाखण्डत्वमेकरसत्वमेकधैवानुद्रष्टव्यमेकमेवाद्वितीयमित्यादिश्रुत्या प्रसिद्धम्। अनेकरसत्वञ्च नेह नानास्ति इत्यादि श्रुत्या च निषिद्धम्, स्वप्रकाशस्य च ब्रह्मणः प्रत्यगात्मतया प्रसिद्धत्वात्। सामान्यतः प्रसिद्धस्य ब्रह्मणो लक्षणेन विशेषाकारसमर्पणम्। अतः सिद्धमखण्डार्थलक्षणम्। एतेन लक्षणेन शतदूषणी दूषिता, तत्रोक्तविकल्पानामनवकाशात्।

॥ इत्यखण्डार्थलक्षणविचारे उत्तरपक्षः॥

# अथाखण्डार्थप्रमाणविचार:

प्रमाणमपि अनुमानमखण्डार्थे सम्भवति, तथा हि—

सत्यज्ञानादिगीरेतत् संसर्गव्यतिरेकिणि ।
अर्थे प्रमाणं मानत्वान् नयनादिप्रमाणवत् ॥

सत्यादिवाक्यमेतत्पदार्थसंसर्गातिरिक्ते अर्थे प्रमाणं प्रमाणत्वात् चक्षुरादिवत् । सिद्धसाधनतानिवृत्यै संसर्गव्यतिरेकिणीत्युक्तम् । तथापि यत्किञ्चित् संसर्गव्यतिरिक्तत्वेनार्थान्तरता, तन्निवृत्यर्थमेतत्पदम् । न च गामानयेत्यादिवाक्यस्य संसर्गप्रतिपादकत्वात् तत्र व्यभिचार इति वाच्यम्, एतत्संसर्गव्यतिरिक्तेऽर्थे प्रमाणत्वमपि तत्राऽस्त्येवेति न व्यभिचार: ।

न च प्रमाणत्वमस्तु, उक्त साध्यं मास्तु, इति विपक्षे बाधकतर्काभावाद् अप्रयोजकत्वाद् व्याप्तिग्रहासम्भवान् नोक्तार्थसिद्धिरिति वाच्यम्, 'एकधैवानुद्रष्टव्यम्' 'एकमेवाद्वितीयम्','नेह नानास्ति किञ्चन' इत्यादीनां एकरसत्वप्रतिपादिकानां श्रुतीनाम् अप्रामाण्यप्रसङ्गस्यैव बाधकतर्कत्वात् । किञ्चैवं ब्रह्मण्यपि प्रमाणाभाव एव बाधकस्तर्क:, अन्यथा निर्विशेषैकरसब्रह्मासिद्धि: प्रमाणाभावात् स्यात् ।

उक्तानां श्रुतीनां प्रबलानां बाधिकानां सद्भावादेव "विगीतं वाक्यं विशिष्टपरं वाक्यत्वाद् व्यधिकरणवाक्यवदिति संसर्गानुमानमपि परास्तम्, अत्र व्यधिकरणवाक्यत्वस्योपाधित्वात् । न च लोके वेदे च विशिष्टपरसमानाधिकरणवाक्यदृष्टेस्तस्य साध्यसमव्याप्त्यभावान् नोपाधित्वमिति वाच्यम्, लोकेऽपि प्रकृष्टप्रकाशादिवाक्ये असंसर्गगोचरप्रमाजनकत्वरूपाखण्डार्थत्वस्य युक्त्या प्रसाधितत्वात् । वेदेऽप्युक्तश्रुतिप्रामाण्याद् अखण्डार्थत्वं युक्तमेव ।

एवञ्च सति अखण्डार्थत्वलक्षणस्य साधितत्वात् शतदूषणीकाराणां विकल्पानां निरस्तत्वादुक्तप्रतिरोधस्य च श्रुतिबाधितत्वात् । विगीतं वाक्यमखण्डार्थपरं सामानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इत्यादिवाक्यवत्, इत्यनुमानात् शतदूषणीकारमतदूषणमपास्तम् । नहि तेषां वेदान्तदेशिकानां कल्पितानां पक्षाणामेकोऽप्यस्माभि: स्वीक्रियते; अपि तु अन्यदेव लक्षणं क्रियते । तत्र दोषाभावाद्युक्तानुमानं युक्तम् । न च सोऽयं देवदत्त इत्यादौ दृष्टान्तेऽखण्डार्थ-

त्वाभावात् साध्यवैकल्यमिति वाच्यम्, तत्र वाक्ये पदत्रयस्यापि एकस्मिन् देवदत्ते पर्यवसानात् ।

नन्वत्र प्रत्यभिज्ञायाः को विषयः, किं विशिष्टयोरभेदः, किं वा देवदत्तस्वरूपमात्रम् किं वा एकस्य कालद्वयसम्बन्धः ।

तत्र यदि विशिष्टयोरभेद इति, स न सम्भवति । तथा हि, तद्देशकालविशिष्टे एतद्देशकालविशिष्टत्वं प्रतिपाद्यते, एतद्देशकालविशिष्टे वा तद्देशकालवैशिष्ट्यम् । तद्देशकालैतद्देशकालयोर्वा ऐक्य प्रतिपाद्यते, तद्विशिष्टयोरैक्यं वेति । नाद्यः, तद्देशकालवैशिष्ट्यस्याप्रत्यक्षत्वेनानुद्देश्यत्वात् तत्कालादेरिदानीं सत्त्वापत्तेश्च । न द्वितीयः, एतत्कालस्य तत्कालत्वप्रसङ्गात् । न तृतीयः, बाधात् । अत एव न चतुर्थोऽपि तत्कालैतत्कालविशेषणयोर्भेदात् तद्विशिष्टयोरपि भेदाद् ऐक्यायोगात् । यदि चैकस्य देवदत्तस्य कालद्वयसम्बन्धः प्रत्यभिज्ञया बोध्यते, तदा अनुवादप्रसङ्गः । अत उभयविशेषपरित्यागेन भागत्यागलक्षणया विशेष्ययोरभेदो बोध्यते । उक्तञ्च पञ्चपादिकायां समन्वयसूत्रे भाष्ये—"सम्यगन्वयः समन्वयः, अथ केयं सम्यक्तान्वयस्य पदानां परस्परानवच्छिन्नार्थानाम् अनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः । सोऽयमित्यादिवाक्यस्थपदानामिव प्रकृष्टप्रकाशशब्दयोरिव चन्द्रपदाभिधेयार्थ कथनेन[1]" ।

तत्रैव च पञ्चपादिकाविवरणेऽप्युक्तम्—"तत्र सोऽयं देवदत्त इति पदत्रयस्यैकस्मिन् देवदत्ते पर्यवसानं दृश्यते । तथा हि प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति । सोऽयं देवदत्त इति । तत्र न तद्देशकालयोरेतद्देशकालयोश्च परस्परैक्यं प्रत्यभिजानाति, भेदप्रत्ययात् । अत एव विशिष्टयोरप्यैक्यं न प्रत्यभिज्ञायते; किन्तु सोऽयमिति विशिष्टद्वयोपलक्षितः प्रत्यभिज्ञागोचरः । प्रत्यभिज्ञातं चार्थं परस्मै सोऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति ।

एवञ्च सति विमतम् अखण्डार्थबोधकं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति अनुमानमपि युक्तमेव, अखण्डार्थत्वस्योपपादितत्वात् । लक्षणस्यासाधारणधर्मत्वेऽपि तस्य सत्यज्ञानत्वादीनां ब्रह्मणि कल्पितत्वात् नाखण्डार्थत्वप्रतिज्ञाहानिः । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति पृष्टे प्रतिवचनमिदं प्रकृष्टप्रकाशश्चन्द्र इति । तत्र प्रकाशशब्दो ज्योतिःसामान्याभिधानद्वारा व्यक्तिविशेषे वर्तते । प्रकृष्टशब्दश्च लक्षणया प्रकर्षगुणविधानद्वारा प्रकाशविशेषे वर्तते, तत्र गुणसामान्ययोश्चन्द्रपदाभिधेयत्वाभावाद् जहल्लक्षणया तत्समवायिप्रकाशविशेष एव चन्द्रपदाभिधेयता समर्प्यते ।

---

१. पञ्चपादिका—पृ० १०८ ।

एवञ्च प्रकृष्टप्रकाशचन्द्रशब्दानामेकार्थवृत्तिता प्रसिद्धा। ननु प्रकृष्टप्रकाशादिशब्दा लक्षणया चन्द्रादिप्रातिपदिकार्थमात्रबोधका न भविष्यन्ति, लक्षणाया असम्भवात्। अन्वयानुपपत्तिरूपलक्षणाबीजस्याभावात्, प्रकृष्टप्रकाशस्य द्रव्यस्य गुणस्य वा चन्द्रेऽन्वयोपपत्तेरिति चेत्, न, काकेभ्यो दधि रक्ष्यताम्, यष्टीः प्रवेशय इत्यादौ लोके तरसमयाः पुरोडाशा भवन्तीति वेदे यथाश्रुतान्वयसम्भवेऽपि यथा तात्पर्यविषयीभूतान्वयानुपपत्त्या यष्टिधरपुरुषेषु सवनीयहविर्मात्रे च यष्टिपुरोडाशशब्दयोर्लक्षणा आश्रिता, तथा प्रकृतेऽपि तात्पर्यविषयीभूतान्वयानुपपत्त्या लक्षणया अखण्डार्थत्वोपपत्तिरिति लक्षणप्रमाणाभ्यां सत्यादिवाक्यानामखण्डार्थबोधकत्वं निरवद्यम्।

॥ इत्यखण्डार्थत्वे प्रमाणनिरूपणम् ॥



## प्रथमपरिच्छेदे

# अथ सत्यादिपदानामखण्डार्थत्वनिरूपणम्

लक्षणप्रमाणाभ्यामुक्तरूपमखण्डार्थत्वं सिद्धम्। तच्च द्विविधम् पदार्थविषयकं वाक्यार्थविषयकञ्च। तथाहि द्विविधा हि वेदान्तवाक्यानां प्रवृत्तिः। एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञानादिलक्षणब्रह्मविषया। तत्र सत्यज्ञानादिलक्षण ब्रह्मविषयप्रवृत्तिमत्सत्यं ज्ञानमनन्तमित्यादिवाक्यानां लक्षणात्मकानामखण्डार्थत्वं पदार्थविषयम्, तस्य च दृष्टान्तः प्रकृष्टप्रकाशादिः। तत्त्वमसीत्यादीनां जीवब्रह्मणोरैक्यविषयकवाक्यानामखण्डार्थत्वं वाक्यार्थविषयम्। तत्र दृष्टान्तः 'सोऽयं देवदत्तः' इत्यादि।

एवञ्चोक्तार्थे दृष्टान्तद्वयघटितानुमानाकारद्वयमपि पूर्वं प्रदर्शितमेव। इदानीं सत्यादिपदानां ब्रह्मलक्षकत्वं कथं सम्भवति। तेषां कथञ्चाखण्डार्थबोधकमित्यादिप्रतिपादनीयं भवति।

तत्र तैत्तिरीयकोपनिषदि ब्रह्मवल्ल्यां "ब्रह्मविदाप्नोति परम्। सत्यज्ञानमनन्तं ब्रह्म" इति श्रुतम्। अत्र ब्रह्मवेदनवान् परमाप्नोति इति उद्देश्यतावच्छेदकप्रयोज्यत्वं विधेये भासते। यथा धनवान् सुखीत्यादौ उद्देश्यतावच्छेदकधनप्रयोज्यत्वं सुखित्वे, तथा ब्रह्मज्ञानप्रयोज्यत्वं परप्राप्तौ इति ब्रह्मज्ञानस्य मोक्षप्रयोजकत्वं समागतम्, परप्राप्तिर्मोक्षाप्तिः।

ननु परस्यात्मभावस्य नित्यस्य नित्यप्राप्तस्य च मोक्षस्य उत्पाद्यत्वादिरहितस्य कथं का च आप्तिरिति चेत्, न, नित्यस्यापि प्राप्तप्रापणवत् नित्यप्राप्तस्यापि वेदने वेदान्तानां सार्थक्यात्। ब्रह्मज्ञानवतः स्वरूपेणावस्थितिरेवाप्तिरत्रोच्यते, न त्वादानादिरूपः। यथा केनेषित प्रेषितं पतति मन इत्यादौ पततीत्यस्य नाधोदेशसंयोगोऽर्थः, अपि तु संकल्पादिरेव धातूनामनेकार्थत्वात्। अत एव परौ भुवस्तिरष्क्रियेति सङ्गच्छते। प्रकृतेऽपि आप् धातोः स्वरूपावस्थितिरेवार्थः। परशब्देनापि तदेव ब्रह्म गृह्यते, यस्य वेदनं जातम्। निरतिशयताप्रकाशनार्थं परमिति। अन्यत्र च ब्रह्मविद् ब्रह्मैव भवतीति ब्रह्मशब्द एवोपात्तः।

उक्तञ्च भगवत्पादैरत्रैव—"ब्रह्मविद् ब्रह्मेति वक्ष्यमाणलक्षणं वृहत्तमत्वाद् ब्रह्म तद्वेत्ति विजानातीति ब्रह्मविद् आप्नोति परं निरतिशय तदेव ब्रह्म परम्। न ह्यन्यस्य विज्ञानाद् अन्यप्राप्तिः। स्पष्टञ्च श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति "स यो ह वै तत् परमं ब्रह्म वेद, ब्रह्मैव भवति इत्यादि[1]"।

---

१. केनोप०, शां० भा० पृ० ४४२।

तत्रैव भगवत्पादैः प्राप्तिस्वरूपमप्युक्तम्—"ननु सर्वगतं सर्वस्यात्मभूतं ब्रह्म वक्ष्यति। अतो नाप्यम्, प्राप्तिश्चान्यस्य अन्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा। अपरिच्छिन्नं सर्वात्मकञ्च ब्रह्मेत्यतः परिच्छिन्नवदनात्मवच्च तस्याप्तिरनुपपन्ना। नाऽयं दोषः, कथं? दर्शनादर्शनापेक्षत्वाद् ब्रह्मण आप्त्यनाप्त्योः परमार्थतो ब्रह्मणस्वरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिनस्तदासक्तचेतसः, प्रकृतसंख्यापूरणस्यात्मनोऽव्यवहितस्यापि बाह्यसंख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत् परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणया अविद्यया अन्नमयादीन् बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वाद् अन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते। एवमविद्ययात्मभूतमपि ब्रह्म अनाप्तं स्यात्। तस्यैवमविद्ययानाप्तब्रह्मस्वरूपस्य प्रकृतसंख्यापूरणस्यात्मनोऽविद्ययानाप्तस्य सतः केनचित्स्मारितस्य पुनस्तस्यैव विद्ययाप्तिर्यथा तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव"[1]।

अनेन ग्रन्थेन भगवत्पादैराप्तस्यापि अनाप्तत्वभ्रमनिवृत्तिरूपस्वरूपावस्थितिराप्तिरिति स्पष्टमुक्तम्। उक्तञ्च सुरेश्वराचार्यैस्तत्रैव वार्तिके—

ब्रह्मैवात्र परं ग्राह्यं तज्ज्ञानं नान्यसिद्धये।
अन्यज्ञानं हि नान्यस्य क्वचिदप्याप्तये यतः॥

देशकालादिसंभेदपूर्विकावाप्तिरिष्यते।
देशकालाद्यभिन्नस्य कथं सेत्युच्यते यथा॥

सर्वात्मनो ह्यवाप्तिः स्याद् दर्शमस्येव मोहजा।
पञ्चस्वन्नमयाद्येषु ह्यहमस्मीति विभ्रमात्॥

दशमोऽस्मीत्यतो ज्ञानाद् अज्ञानध्वस्तिवर्त्मना।
दशमाप्तिवदाप्तिः स्याद् ब्रह्मणोऽज्ञानहानतः॥

ननु सत्यं ज्ञानमनन्तमित्यादि लक्षणार्थं वा विशेषणार्थं वा। सजातीयविजातीयव्यावर्तकं लक्षणं विशेषणं तु सजातीयव्यावर्तकमिति चेत्, न, ब्रह्मात्र वेद्यतया विशेष्यं सत्यादीनि तु विशेषणानि। अतएव सामानाधिकरण्यम्। तानि च विशेषणानि लक्षणार्थान्येव। विशेषणलक्षणयोरपि इतरव्यावर्तकत्वस्य तुल्यत्वात्। एवञ्च सत्यादीनि इतरव्यावृत्तिद्वारा लक्ष्यब्रह्मसमर्पकानीति बोध्यम्। यथा नीलं महत् सुगन्धि उत्पलमिति। ननु सम्भवव्यभिचारिभ्यां स्याद् विशेषणमर्थवदिति न्यायात् सत्यत्वादीनां धर्माणां निर्विशेषे ब्रह्मणि एकमेवाद्वितीयमित्यादिश्रुति-

---

१. शां० भा०, पृ० ४४३।

बोधितेऽसम्भव.। न च बहूनि ब्रह्मान्तराणि सन्ति, येभ्यो सत्यादिपदानि सत्यत्वादिधर्मैः व्यावृत्तिं कुर्युः अतस्तेषां विशेषणत्वं न सम्भवति। लक्षणत्वेऽपि व्यावर्तकधर्मस्यैवासाधारणस्य लक्षणत्वाद् निर्धर्मके कस्यापि धर्मस्याभावाल्लक्षणार्थत्वं न सम्भवतीति। एवञ्च सति, विद्यमानत्वे सतीतरव्यावर्तकरूपविशेषणत्वमपि न सम्भवतीति चेत्, न, मुख्यविशेषणत्वस्यात्राबोधनात्। औपचारिकविशेषणत्वस्यैवात्र सत्यत्वादौ सत्त्वात्। नहि सत्यत्वादिधर्मा वास्तविका ब्रह्माण सन्ति। न च समानाधिकरण्यानुपपत्तिः, ऐक्ये सामानाधिकरण्यावधारणात्। चतुर्धा हि सामानाधिकरण्यम्। बाधायां विशेष्यविशेषणभावे, अध्यासे ऐक्ये च, स्थाणुः पुरुषः, नीलो घटः, इदं रजतम्, सोऽयं देवदत्तः, इत्याद्युदाहरणानि क्रमेण।

एवञ्च वस्तुतो ब्रह्मान्तराणामभावेऽपि बृहत्त्वव्यापकत्वादेर्ब्रह्मपदप्रवृत्तिनिमित्तत्वात् कल्पितानामव्याकृतादीनामपि सत्यादिसमानसजातीयत्वाद् ब्रह्मपदवाच्यत्वात् तत्समानजातीयाव्याकृतादीनां व्यावृत्तये सत्यादीनामौपचारिकविशेषणत्वं सम्भवत्येव। यथा बिम्बप्रतिबिम्बभावेनादित्यस्य कल्पितनानात्वमादाय जलादौ कल्पितबिम्बव्यावृत्त्यर्थमम्बरस्थः सविता सत्य इति वाक्ये सत्यादिपदानामर्थवत्त्वोपपत्तिः। तथा प्रकृतेऽपि बोध्यम्। एवञ्चेतरव्यावृत्तिद्वारा विशेषणपदानां ब्रह्मस्वरूपसमर्पकत्वं सिद्धम्।

न च ब्रह्मणि व्यावर्तकधर्माभावात् कथं सत्यादिपदानां लक्षणत्वमिति वाच्यम्, सत्यादिपदानां स्वरूपबोधकत्वाद्। इतरव्यावृत्तिस्तु सत्यादिपदोपलक्षितब्रह्मरूपावबोधादेव भवति, स्वरूपतोऽपि व्यावृत्तिसिद्धेः। तद्यथा गौरित्युक्ते नाश्वो न गर्दभ इति गम्यते।

एवञ्चासत्यत्वादीनां व्यावृत्तिर्न सत्यादिपदैः शब्दतो भवति; अपि तु अर्थत एव। अत एव सत्यादिपदानामखण्डैकरसवस्तुमात्रपरत्वमपि सिद्धं भवति। न च सत्यं ज्ञानमित्यादिभाष्ये नीलं महत् सुगन्धि उत्पलमितिदृष्टान्तप्रदर्शनात् सत्यादिवाक्यानामपि संसृष्टार्थबोधकत्वमिति वाच्यम्, भाष्ये विशेष्यविशेषणभावप्रदर्शनार्थमेवोदाहरणात्तस्य।

एवञ्च सत्यादिवाक्यं विशेषणविशेष्यसंसर्गपरं समानाधिकरणवाक्यत्वाद् नीलोत्पलवाक्यवदित्यनुमानमपि परास्तम्, तादृशवाक्यस्य लक्षणार्थत्वात्, सोऽयं देवदत्त इत्यादिवाक्ये व्यभिचाराच्च। लक्षणवाक्यस्य च प्रकृष्टप्रकाशादेरखण्डार्थत्वस्य साधितत्वात्।

तत्र गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादिति न्यायेन सत्यादिशब्दानां न परस्परमन्वयः, अपि तु ब्रह्मविदाप्नोति परमिति वाक्याद् वेद्यतयोपात्तं ब्रह्म कीदृशमिति जिज्ञासायां ब्रह्मैव ब्रह्मेत्युत्तरे स्वरूपानवबोधात् तत्स्वरूप-

विशेषसमर्पकत्वेन तेषामसत्यत्वादिभ्रमनिवृत्तिद्वारा लक्ष्यबोधकत्वमेव। सत्यं ब्रह्म ज्ञान ब्रह्मानन्तं ब्रह्मेत्येवं रूपेण प्रत्येकं ब्रह्मपदेन सम्बध्यते। सदेव सत्यम्। तत्त्वमबाधितत्वम्। इदञ्च ब्रह्म विकारान्निवर्तयति। विकारोऽनृतम्। वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यमिति श्रुतेः। अनेन च सत्यत्वविशेषणेन कारणत्वं प्राप्तं ब्रह्मणः। कारणस्य कारकत्वात् कर्तृत्वादिसमापतितम्। तच्च ज्ञानपदेन व्यावर्त्यते. ननु ज्ञानशब्दस्यापि जानातीति कर्तृसाधनत्वाद्, बाहुलकात् कर्तरि ल्युटि, नन्द्यादेराकृतिगणत्वात् ल्युप्रत्यये सति, ज्ञानमस्यास्तीति मतुबर्थाचि वा ज्ञायते अनेनेति करणे ल्युटि वा व्युत्पन्नत्वात् कारकत्वानपाय इति चेत्, न, ज्ञानं ज्ञप्तिरवबोध इति भावसाधनत्वाज् ज्ञानशब्दस्य। भावत्वञ्च न क्रियारूपम्; अपि तु चित्त्व परमार्थसत्त्वं वा।

ननु भावसाधनत्वे किं प्रमाणमिति चेत्, न, सत्यानन्तशब्दविशेषणस्यैव प्रमाणत्वाद् ज्ञानशब्दस्य कर्तृसाधनत्वे सत्यत्वानन्तत्वे नोपपद्येते। कर्तृत्वस्य च कर्मक्रियानिरूपितत्वात् प्रविभागाद् अनन्तत्वानुपपत्तिः। कर्तृत्वधर्मस्य च सत्त्वात् सत्यत्वानुपपत्तिरिति। अनन्त न कुतोऽपि विभाज्यमानत्वम्। ज्ञानकर्तृत्वे च ज्ञातृज्ञेयज्ञानानां विभागावश्यम्भावात्। यथा यत्र वान्यदिव स्यात्तत्रान्योऽन्यत् पश्येत् (बृ० ४।३।३१), यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति (बृ० २।४।१३) "यत्र नान्यत् पश्यति नान्यत् शृणोतीत्यादि" (छा० ७।२४।१) श्रुतेः। न चैकस्यैव ज्ञातृत्वं ज्ञेयत्वञ्चोपपद्यते, कर्मकर्तृविरोधात्। निरवयवस्य च ब्रह्मणो युगपद् ज्ञेयज्ञातृत्वानुपपत्तेः। तदेवं सत्यविशेषणेन ब्रह्मणो विकाराद् व्यावृत्तिः सिद्धा। विकारभिन्नत्वाच्च कारणत्व प्राप्तं कारणस्य कारकत्वाद् ब्रह्माचेतनं वस्तुत्वात् मृदादिवदिति अचिद्रूपता प्राप्ता। अतस्तन्निवृत्त्यर्थं ज्ञानं ब्रह्मेति।

एकस्मिन् कर्तृकर्मविरोधादेव ज्ञानकर्मत्वमपि न ब्रह्मणः, स्वात्मनि भेदाभावात्। ज्ञायतेऽनेनेति ज्ञानस्य करणत्वमपि न युक्तम्। ब्रह्मणः करणत्वे कर्तृत्वाभावात्। तदभावे च करणत्वायोगः। अनन्तत्वाद्यनुपपत्तिश्च सर्वत्र बोध्यमिति भावप्रसङ्गात्। तदभावे च करणत्वायोगः। अनन्तत्वाद्यनुपपत्तिश्च सर्वत्र बोध्यमिति ज्ञानस्य सर्वकारकत्वं निराकृतम्। ज्ञानं ब्रह्मेत्युक्तौ च लौकिकस्य ज्ञानस्य वृत्तिरूपस्यान्तवत्त्वदर्शनाद् अन्तवद् ब्रह्मेति प्राप्तम्, तन्निवृत्तये अनन्तमिति। अन्तो विभागः प्रध्वंसो वा यस्येति अनन्तमिति व्युत्पत्तिः। सत्यादिशब्दाश्च विशेषणीभूता अपि स्वार्थपरित्यागेन व्यावर्तकस्वरूपविशेषार्पणेन ब्रह्म लक्ष्यन्ति। ब्रह्म च प्रसिद्धमेवेति न शून्यार्थतापत्तिः। तत्र अनन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारा विशेषणम्, सत्यज्ञानशब्दौ च स्वार्थसमर्पणेनेति विशेषः। ज्ञानपदेन च लोके अन्तःकरणपरिणाम एवोच्यते। स एव च ज्ञाधात्वर्थः। इह तु तत्र प्रतिबिम्बितचैतन्यमेव ज्ञानपदार्थः, स च स्वरूपमेव ब्रह्मणः।

उक्तञ्च भगवत्पादैः तैत्तिरीये—"यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मणस्तथाप्यनित्यत्वं प्रसज्येत, पारतन्त्र्यञ्च, धात्वर्थानां कारकापेक्षत्वात्। ज्ञानं च धात्वर्थोऽतोऽस्यानित्यत्वं परतन्त्रता च, न, स्वरूपाव्यतिरेकेण कार्यत्वोपचारात्। आत्मनः स्वरूपं ज्ञप्तिर्न ततो व्यतिरिच्यते, अतो नित्यैव। तथापि बुद्धेरुपाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारेण परिणामिन्या ये शब्दाद्याकारावभासास्ते आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एवात्मविज्ञानेन व्याप्ता उत्पद्यन्ते। तस्मादात्मविज्ञानावभासाश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्मा विक्रियारूपा इत्यविवेकिभिः कल्प्यन्ते'[1]।

अतो ज्ञानादयो वृत्तिविशेषा बुद्धिधर्मा एव, नात्मधर्माः। "काम संकल्पः" (बृ० १ ५।३) इत्यादि श्रुत्या तेषां मनोधर्मत्वावबोधनात्। आत्मनश्च निर्गुणत्वप्रतिपादनात्।

ननु ब्रह्मणो ज्ञानकर्तृत्वाभावे नित्यज्ञानरूपत्वे सर्वज्ञत्वाद्यनुपपत्तिः। सर्वज्ञत्वं नाम सर्वज्ञानकर्तृत्वमिति चेत्, न, सर्वज्ञत्वस्य सर्वसाक्षिरूपत्वात् सर्वज्ञानकर्तृत्वार्थस्यासम्मतत्वात्। अथवा जीवस्य मनोरूपोपाधिवशाद् यथा ज्ञातृत्वं मुख्यं तथैव ब्रह्मणोऽपि मायोपाधिवशात् सर्वज्ञत्वमुपपद्यत एवेति न दोषः।

उक्तञ्च—"मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षण इति। एवञ्च ज्ञानरूपत्वे ब्रह्मणो न काचिदप्यनुपपत्तिः।

लौकिकानित्यमनःपरिणामरूपज्ञानविलक्षणत्वादेव न ज्ञानादिशब्देन वाच्यं ब्रह्मापि तु लक्ष्यमेव मुख्यार्थानुपपत्तेः। ज्ञानशब्देन चिदेव लक्ष्यते, न तूच्यते शब्दप्रवृत्तिनिमित्तजात्यादिधर्मरहितत्वात्। उक्तञ्च—जातिर्गुणः क्रियायोगः सम्बन्धास्तस्य हेतव इति।

सत्तावदर्थकसत्यशब्देनापि सत्तारूपं ब्रह्म लक्ष्यते। सत्यं ब्रह्मेति, एवमनन्तशब्देनापि बोध्यम्। एवञ्च यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादि श्रुतिरपि तस्यावाच्यत्वे मानम्। श्रुत्या चाभिधानमेव निषिध्यते, न लक्षणम्। अन्यथा वेदान्तानामानर्थक्यापत्तेः। सत्यादिशब्दाश्च परस्परसन्निधाने अन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्याद् निवर्तका ब्रह्मणो लक्षणार्था भवन्ति।

ननु विशेषणानां परस्परमन्वयाभावात् कथमन्योन्यनियम्यनियामका इति चेत्, न, सत्यादिपदानां मुख्ये ब्रह्मणि अन्वयेऽपि परस्परमन्वयात्। यथा अरुणयैकहायन्या सोमं क्रीणातीति वाक्ये अरुणादीनां पृथगेव भावनायामन्वयेऽपि या अरुणा, सा एकहायनीत्यादिरूपेण पार्ष्णिकबोधकाले परस्परमन्वयो

---

१. शां० भा० पृ० ४५०।

भवति, तथा सत्यादीनामपि । तथा हि ज्ञानेन विशेषणाद् न सत्यशब्दो जडे कारणे वर्तते । सत्येन विशेषणान्न ज्ञानशब्दो विषयसापेक्षे वृत्तिरूपे ज्ञाने वर्तते । ज्ञानेन विशेषणाद् न अनन्तशब्दो ज्ञातृव्यतिरिक्ते वर्तते । एवञ्च सत्यादिशब्देन यल्लौकिकं वाच्यं तद्विलक्षणं ब्रह्म लक्ष्यते ।

ननु सत्यादिशब्दानामखण्डैकरसे वृत्तिरित्युक्तम् । तत्र तावत् पृच्छ्यते, किं सत्यादिशब्दा भिन्नार्था एकार्था वा ? नाद्यः, भिन्नार्थत्वाद् एकरसे अखण्डे वृत्तिरेव न स्यात् । न द्वितीयः, पर्यायतापत्तेस्ततश्च सह प्रयोगानुपपत्तेः । उक्तञ्च—

पर्यायाणां प्रयोगो हि यौगपद्ये न चेष्यते ।
पर्यायेणैव ते यस्माद् वदन्त्यर्थं न संहताः ॥

न च सत्यादिशब्दा अन्योन्यनियम्यनियामकाः सन्तोऽखण्डैकरसं ब्रह्म लक्षणया बोधयन्तीति वाच्यम्, प्रमाणान्तरयोग्यस्य कार्ययोगितया क्लृप्तस्य च प्रसिद्धस्य तीरादेरिवात्र ब्रह्मणो लक्ष्यत्वायोगात् । किञ्च वाच्यस्य च वाक्यार्थे सम्बन्धानुपपत्तेर्बीजत्वाल्लक्षणायाः । अत्र च तथात्वाभावात् । न चाद्वितीयादि-श्रुत्या ब्रह्मणो निर्विशेषत्वप्रतिपत्तौ सत्यत्वादिविशिष्टप्रतिपत्तिर्विरुध्यत इति अस्त्येव तात्पर्यानुपपत्तिरिति वाच्यम्, लक्षणयोक्तप्रकारेणाखण्डैकरसव्यक्तिबोधे बोध्यस्य तावन्मात्रत्वे सत्यादीनां पदानां सहप्रयोगानुपपत्तेः । आधिक्ये तु तेषां वैयर्थ्यम् । पर्यायतापत्तेश्चेति चेत्, न, सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतौ सत्यं ब्रह्मेति सामानाधिकरण्यं प्रतीयते । तत्र भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति लक्षणम् । तत्रार्थशब्दो वस्तुवाचीति सामानाधिकरण्यादेव एकरसस्य प्रमेयत्वं सिद्धम् । अखण्डबोधकत्वञ्च लक्षणयेत्युक्तमेव । भिन्नप्रवृत्ति-निमित्तत्वादेव न पर्यायतापत्तिः । इतरव्यावृत्तिद्वारा पदान्तरस्यापि न वैयर्थ्यम् ।

न च मानान्तरयोग्यत्वाभावाद् लक्ष्यत्वासम्भव इति वाच्यम्, लक्ष्यत्वे प्रमाणान्तरयोग्यत्वस्य क्लृप्तकार्योपयोगित्वस्य वा अप्रयोजकत्वात् ।

न मानान्तरयोग्यत्वं प्रतीतिस्तु प्रयोजिका ।
प्रतीतेस्तदभावेन न लक्ष्यत्वे पराक्रिया ॥

इत्युक्तेः ।

एवञ्च असत्यत्वादिभेदभ्रमव्युदासाय तद्भ्रमविरोधिसत्यत्वादिधर्माः कल्पिता इति कल्पितेनैव सत्यत्वादिना तद्विरोधिभ्रमनिवृत्तिरिति सत्यादीनां पदानां न वैयर्थ्यम्, एकलक्ष्यत्वेऽपि ।

विभिन्नं वा लक्षणं सत्यं ब्रह्म ज्ञानं ब्रह्मेत्यादि । सत्यादिस्वरूपावबोधा-देवेतरव्यावृत्तिः । मिलितं वा लक्षणम्, तथापि न पदान्तरवैयर्थ्यम् । न चाखण्डार्थं-त्वव्याहतिभयाद् अर्थत एव व्यावृत्तिर्वक्तव्येति पुनः सत्यादिपदानां वैयर्थ्यं-

मागतमिति वाच्यम्, अर्थतो व्यावृत्तिसिद्धावपि शाब्दी आकाङ्क्षा शब्देनैव प्रपूर्यते इति न्यायाच्छब्दप्रयोगात्। न चैवं मिलितस्य सत्यत्वादिविशिष्टस्य लक्षणत्वे खण्डार्थत्वप्रसङ्ग इति वाच्यम्, वाच्यस्य खण्डार्थत्वेऽपि लक्ष्यस्याखण्डार्थत्वात्। वाच्यार्थवैशिष्ट्यस्य च लक्ष्यार्थाखण्डार्थसिद्धावुपायत्वान्न विरोधः।

नन्वेकरसेऽखण्डे वेदान्तानां तात्पर्यमित्युक्तम्, तत्रैकत्वं कीदृशम ? न संख्यारूपं भेदेऽपि एकत्वस्य केवलान्वयित्वात् सत्त्वात् नाभीष्टसिद्धिरिति चेत्, न, सजातीयद्वितीयराहित्यमेवैकत्वम, कैवल्यं वा। "प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वं वा। वृत्तिविषयत्वं च शक्तिलक्षणाकृत्तद्धितान्तसमासानामन्यतमज्ञानाधीनज्ञानविषयत्वम्। तथा च यादृशधर्मविशिष्टस्य शक्त्यादिज्ञानाधीनधीविषयत्वम् तादृशस्य यत्किञ्चद्धर्मविशिष्टभिन्नाविषयकप्रमाजनकत्वं पर्यवसितम्[1]"।

ननु शुद्धे ब्रह्मणि सम्बन्धाभावाद् न लक्षणापि, शक्यसम्बन्धस्यैव लक्षणात्वादिति चेत्, न, अतात्त्विकसम्बन्धेनैव लक्षणोपपत्तेः। शक्यसम्बन्धोऽध्यासिकः पारमार्थिको वेति आग्रहाभावात्। भ्रमप्रतीतरजतत्वेन सम्बन्धेन शुक्तौ रजतपदलक्षणावत्। शुद्धस्यैव सर्वकल्पनास्पदत्वेन न तत्र कल्पितसम्बन्धानुपपत्तिः।

ननु ज्ञानादिशब्दैर्न स्वरूपस्य लक्ष्यत्वम्। अनन्ताद् भिन्नं हि ज्ञानशब्देन लक्ष्यम्, एवं सत्यादिशब्दैरपि। तथा सति भिन्नत्वे गृहीते नैकत्वं सम्भवतीति चेत्, न, ज्ञानस्वरूपत्वं ज्ञानशब्देन लक्ष्यत्वप्रयोजकम्, नानन्ताद् भेदवत्त्वम्, ज्ञानस्वरूपे विद्यमाने अन्यस्माद् भेदाभावापराधेन अलक्ष्यत्वानुपलम्भात्। न च भेदाभावात् तदप्रतीतौ वा सत्यादिरूपस्य ज्ञानादौ प्रतीतिः स्यात्, स्वरूपस्यैकत्वादिति वाच्यम् सत्यादिबुद्धौ ज्ञानस्वरूपस्याभासार्थमौपाधिकभेदाङ्गीकारात्।

ननु गङ्गाशब्दलक्ष्यस्य न गङ्गात्वं यथा, तथा सत्यादिपदलक्षणायां न सत्यादिरूपता भवेदिति चेत्, न, लक्ष्यस्यैव मुख्यसत्यादिरूपत्वात्। वाच्यस्य च लक्ष्यस्वरूपैक्याध्यासाद् अमुख्यैव सत्यता। अतो यदधीनमस्य ज्ञानादिरूपत्वम् तस्यैव मुख्यज्ञानादिरूपता। गङ्गात्वं तु गङ्गायां न तीरैक्याध्यासनिबन्धनम्, किन्तु स्वत एव, तेन न तीरस्य गङ्गात्वमिति भेदः।

एवञ्च सत्यादिशब्दा अखण्डार्थबोधका लक्षणवाक्यत्वात्, प्रकृष्टप्रकाशादि वाक्यवदित्यनुमानेन सत्यादिपदानामखण्डार्थबोधकत्वं सिद्धम्।

सत्यादिपद संसृष्टार्थबोधकं प्रमाणवाक्यत्वात्, सम्मतवदित्यादि सत्प्रतिपक्षोऽपि अखण्डार्थश्रुतिबाधाद् अलक्षणवाक्यत्वस्य चोपाधित्वात् परास्तः। अत एवाद्वैतसिद्धौ सत्यादिपदानामखण्डार्थत्वोपपत्तिप्रकरणे श्रीब्रह्मानन्दसरस्वतीभिरुक्तम्—"ननु अस्तु सत्प्रतिपक्षः। तथाहि सत्यादिवाक्यतात्पर्य-

1. चन्द्रिका पृ० —६७४।

विषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात्, सम्मतवत्, सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गपरं स्वतात्पर्यविषयज्ञानाबाध्यस्वकरणकप्रमाविषयपदार्थनिरूप्यसंसर्गपरं वा, प्रमाणवाक्यत्वाद् अग्निहोत्रादिवाक्यवत्। विषं भुंक्ष्वेत्यादौ वाच्यार्थसंसर्गपरत्वाभावेऽपि स्वकरणकप्रमाविषयपदार्थसंसर्गपरत्वान्न व्यभिचारः। ख छिद्रम्, कोकिलः पिक इत्यादौ अनतिभिन्नार्थत्वे सामानाधिकरण्यायोगेन छिद्रकोकिलादीनां खपिकादिशब्दवाच्यत्वसंसर्गपरत्वान्न व्यभिचार इति चेत्, न, आद्यानुमाने संसृष्टरूप इति साध्ये संसर्गे संसर्गरूपे इति साध्ये च संसृष्टरूपे व्यभिचारात् तयोरुभयोरपि प्रमाणवाक्यतात्पर्यविषयत्वात्।

द्वितीयानुमाने प्रमाणवाक्यत्वस्याबाध्यपरत्वमात्रेण प्रमितिविषयपरत्वमात्रेण वोपपत्तौ विशिष्टसाध्यस्य तत्रातन्त्रत्वेनाप्रयोजकत्वात्। अलक्षणवाक्यत्वस्योपाधित्वाच्च। नापि वेदान्तजन्यप्रमा सप्रकारिका, विचाराजन्यत्वात् संशयनिवर्तकत्वाद् वा कर्मकाण्डजन्यत्वात्। वेदान्तजन्यप्रमा ब्रह्मप्रकारविषया ब्रह्मधर्मिकसंशयविरोधित्वाद् ब्रह्मविचारजन्यत्वाद् वा यदेवं तदेवं यथा कर्मकाण्डजन्यो निश्चय इति प्रतिसाधनमस्त्विति वाच्यम्, तव मते ज्ञानमात्रस्य सप्रकारत्वेन विचारजन्यसंशयविरोधित्वयोर्व्यर्थत्वात्, अप्रयोजकत्वात्। निष्प्रकारकज्ञानादपि संशयादिनिवृत्तिसम्भवात्, लक्षणवाक्याजन्यत्वस्योपाधित्वाच्च। अत एव द्वितीयानुमानप्यपास्तम्। ब्रह्मनिष्ठप्रकारविषयत्वसाधने दृष्टान्ताभावाच्च। सर्वेषु च प्रतिसाधनेषु प्रश्नोत्तरयोर्वैयधिकरण्यापत्तिः प्रतिकूलतर्कोऽवसेयः[1]"।

दृष्टान्ते प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्ये चाखण्डार्थत्वमुपपादितमेव। तेन वाक्येनोक्तार्थबोधो लक्षणयै, नाभिधया। लक्षणा च तात्पर्यानुपपत्त्यैव। ननु सत्यादिपदानां लक्षणया अखण्डैकरसब्रह्मावबोधे पदान्तरवैयर्थ्यापत्तिरितरव्यावृत्तिद्वारा वारिता। तत्र व्यावृत्तिबोधकत्वादेव वाक्यस्याखण्डार्थव्याघातः स्यादिति चेत्, न, न हि सत्यादिपदैः साक्षाद् व्यावृत्तिः क्रियते; अपि तु स्वरूपावबोधद्वारा। अतो अर्थत एव व्यावृत्तिः क्रियते। एवञ्च सत्यमित्यादिवाक्यैर्व्यावृत्तिर्न शाब्दबोधविषयः, अपि तु फलमेव। न च लक्षणया व्यावृत्तेः शाब्दत्वमिति वाच्यम्, व्यावृत्तः व्यक्तिविशेषस्वरूपबोधादेव सिद्धेः, तत्र तात्पर्याभावाद् लक्षणाया व्यर्थत्वात्।

ननु स्वरूपादेव व्यावृत्तिश्चेद् ब्रह्मेत्येतावत्युक्तेऽपि व्यावृत्तौ सत्यां सत्यादिपदानर्थक्यप्रसङ्ग इति चेत्, न, प्रत्येकं लक्षणमिति तात्पर्यात्। मिलितलक्षणेऽपि भ्रमसंशयादिनिवृत्तिद्वारेणेतरपदानां सार्थक्यात्।

---

१. अद्वैतसिद्धिः—पृ० ६८७।

एवञ्च सत्यादिवाक्यार्थो ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरवाक्यार्थत्वादित्याद्यनुमानपि समीचीनम्। न च—

एकं द्विकं त्रिकं वेति चतुष्कं पञ्चकं तथा।
नामार्थं इति सर्वेऽमी पक्षाः शास्त्रे व्यवस्थिताः॥

स्वार्थो द्रव्यं तथा लिङ्गं संख्या कर्मादयोऽपि च।
नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे॥

इत्यभियुक्तोक्तेः प्रातिपदिकार्थस्य विशिष्टत्वादिति वाच्यम्, ब्रह्मप्रातिपदिकार्थविशेष्यांशमात्रपरत्वस्य साध्यत्वात्। अत एव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे लिङ्गादेरपि प्रातिपदिकार्थत्वेन तद्ग्रहणं व्यर्थमित्याशङ्क्य प्रातिपदिकार्थपदस्य लिङ्गाद्यविशिष्टस्वरूपमात्राभिधायकत्वमिति वैयाकरणैः प्रतिपाद्यते। पञ्चकं प्रतिपदिकार्थं इति पक्षो न युक्तः, द्रव्यमित्युक्ते नीलं पीतं चलं वेति संशयानुदयप्रसङ्गात्। लिङ्गसंख्याबोधकानां प्रत्ययानामनुत्पत्तिप्रसङ्गाच्च, उक्तार्थानामप्रयोग इति न्यायात्। अन्ततस्तेषां द्योतकत्वपक्षस्याङ्गीकारापेक्षया वाचकत्वपक्षस्यैव युक्तत्वात्। प्रातिपदिकार्थस्य लिङ्गादिभ्यः पृथग्ग्रहणात् सूत्रकाराणामाचार्यशिरोमणीनामस्मदर्थे एव तात्पर्यात्। अत एव सत्ता प्रातिपदिकार्थं इत्युक्तम्।

ननु यदि लक्षणवाक्यं संसृष्टार्थबोधकं न स्यात्, तर्हि वाक्यत्वमेव जह्यात्, आकाङ्क्षायोग्यतासन्निधिमत्त्वाभावात्। एतासाञ्च संसर्गविषयकवाक्यार्थे एव सद्भावात्। आकाङ्क्षा हि अभिधानापर्यवसानम्, तच्च येन विना यस्य न स्वार्थान्वयानुभावकत्वम्, तदेव तस्यापर्यवसानम्। सन्निधिस्तु अव्यवधानेन अन्वयप्रतियोगिपदार्थोपस्थितिः। योग्यता चैकपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वमिति चेत्, न, अखण्डार्थेऽपि एतद् आकाङ्क्षादिसद्भावात्। तथा हि, नोक्तरूपा आकाङ्क्षा, अपि तु तात्पर्यविषयान्वयाननुभावकत्वमेवाकाङ्क्षा इत्यत्र अन्वयांशस्य व्यर्थत्वाद् येन विना यस्य तात्पर्यविषयाननुभावकत्वमित्येतावन्मात्रस्यैवाकाङ्क्षापदार्थत्वात्। तात्पर्याविषयश्च क्वचित् सखण्डोऽखण्डश्चेति। आसत्तिरपि अव्यवधानेन पदार्थोपस्थितिमात्रम्। नतु, अन्वयप्रतियोगीति तत्र विशेषणं देयम्, गौरवात्। योग्यतापि तात्पर्यविषयाबाध एव, न तूक्तरूपा। एवञ्चाकाङ्क्षादित्रिकस्य सत्यादिवाक्ये सत्त्वाद् वाक्यत्वमक्षतमेवेति न दोषः, अथवा अभेद एवान्वयपदेन गृहीत्वा उक्ताकाङ्क्षादिनिर्वाहः। वेदान्तानामखण्डार्थत्वे सिद्धे शतदूषणीकाराणां सर्वे आक्षेपाः परास्ताः, पर्यायत्वप्रसङ्गादिदोषाणां निरस्तत्वात्। पदान्तरप्रयोगवैयर्थ्यस्यापि निरस्तत्वात् प्रतिप्रयोगाणाञ्च निरासात्।

ननु चिन्मात्रात्मके ब्रह्मणि लक्ष्यतावच्छेदकाभावात् कथं लक्षणाप्रवृत्तिः स्यादिति चेत्, न, लक्ष्यतावच्छेदकसद्भाव एव लक्षणेति नियमाभावात्। यत्र हि लक्ष्यमनेकम्, तत्र लक्ष्यतावच्छेदकमपेक्षते, यथा छत्रिणो यान्ति, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्रच्छत्रिसमुदायौ। यत्र त्वेकमेव लक्ष्यम्, तत्र न तदपेक्ष्यते, यथा गभस्तिभिः सविताऽभ्यधावदित्यादौ। यथा घटादिशब्दो घटानामनेकत्वाद् घटत्वादिकमनुगतं जातिरूपं प्रवृत्तिनिमित्तमपेक्षते, न तथा आकाशादिशब्दः, आनन्त्यादिदोषाभावात् तत्कल्पस्याप्रसरात्, आकाशे जातेरसम्भवाच्च।

न च शब्दाश्रयत्वमुपाधिराकाशे सम्भवतीति वाच्यम्, आकाशत्वावच्छेदेन शब्दाश्रयत्वग्रहात् तस्य तत्त्वानुपपत्तेः। तस्मादाकाशस्वरूपमेव व्यवहारार्थं निमित्तीकृत्याकाशादिशब्दः प्रवर्तते। एवमेव सत्यमित्यादिपदानामपि लक्ष्यतावच्छेदकाभावेऽपि स्वरूपत एव ब्रह्म लक्ष्यमिति न कोऽपि दोषः। न च तात्पर्यतः स्वरूपमात्रावबोधे अभेदे लक्ष्यलक्षणभावायोग इति वाच्यम्, अन्तःकरणवृत्तिनिबन्धनाकारभेदेनोभयोपपत्तेः।

ननु सत्यादिपदानां लक्षणयैवाखण्डे वृत्तिर्वक्तव्या, अन्यथा अभिधया "यतो वाचो निवर्तन्ते" इति श्रुतिविरोधः स्यात्। किञ्चाबाधितत्वज्ञानत्वादिप्रवृत्तिनिमित्तं सत्यादिपदानाम्। ब्रह्मणि च निर्धर्मके अबाधितत्वादीनामसत्त्वात्। नाभिधया वृत्तिः।

एवञ्च लक्षणयैव वृत्तिर्वाच्या। सा च न सम्भवति पादान्तराभिहित एव लक्षणादर्शनात् प्रमाणान्तरसिद्धे वा इति चेत्, न, पदानभिहितेऽपि वाक्यार्थे अपूर्वे लक्षणादर्शनात्। पदान्तरेणाभिधाने च तस्यापूर्वत्वव्याहतेः। नानामीमांसकैर्लक्षणास्वीकारात्। पदान्तरेणाभिधाने च तस्यापूर्वत्वव्याहतेः। न च तद्वाचकं पदार्थघटितत्वाद् वाक्यार्थस्य केनापि पदेनाभिधातुमशक्यत्वात्। न च तद्वाचकं पदमस्ति। तार्किकसमयेऽपि गुडमाधुर्यादिजातिविशेषे पदान्तरानभिधेयेऽपि लक्षणया मधुरादिसामान्यशब्दप्रयोगदर्शनाद्, गुडो मधुर इति।

अतः पदान्तराभिहित एव लक्षणेति नियमाभावः, अपि तु सर्वत्र लोके वेदे चभिधेयाविनाभूते लक्षणेत्येव नियमः। तच्चाविनाभूतं पदान्तरोपस्थितमनुपस्थितं वेति नास्ति आग्रहः।

प्रकृते चास्त्येवाविनाभावः। ज्ञानत्वादिविशिष्टाविनाभूतत्वं शुद्धब्रह्मणः। यद्यपि ज्ञानत्वं न सम्भवति शुद्धे ब्रह्मणि, तदापि आध्यासिकं तदस्त्येवेति।

एवञ्च प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्येन प्रकर्षगुणप्रकाशत्वसामान्यवाचकाभ्यां प्रकृष्टप्रकाशपदाभ्यां जातिगुणादिमात्रशब्दार्थत्वपक्षे जहल्लक्षणया चन्द्रप्रातिपदिकार्थमात्रं बोध्यते। जातिगुणादिविशिष्टार्थत्वपक्षे च जहदजहल्लक्षणया जातिगुणांशपरित्यागेन विशेष्यापरित्यागेन च चन्द्रप्रातिपदिकार्थो बोध्यते। एवं

सत्यमित्यादावपि सत्यत्वादिशब्दार्थपक्षे जहल्लक्षणया अखण्डचिद्बोध्यते। सत्यत्वादिविशिष्टशब्दार्थपक्षे च सत्यत्वाद्यंशपरित्यागपूर्वकं विशेष्यांशापरित्यागेन जहदजहल्लक्षणया अखण्डार्थो बोध्यते। अनन्तपदे च न अन्तः त्रिविधो देशतः कालतो वस्तुतः परिच्छेदो यस्येति बहुव्रीहिणा त्रिविधपरिच्छेदराहित्यं बोध्यते। एवमेवोक्तप्रकारेण विज्ञानमानन्दं ब्रह्मेत्यादिस्थलेऽपि अखण्डार्थत्वं बोध्यम्।

ननु सत्यादिसर्वपदानां लाक्षणिकत्वे वाक्यार्थानुभवो न स्यात्, लाक्षणिकस्याननुभावकत्वादिति चेत्, न, लाक्षणिकत्वेऽपि अनुभावकत्वोपपत्तेः। शक्तत्वस्यैवानुभावकत्वप्रयोजकत्वात्, न तु तच्छक्तत्वस्य, गौरवाद् लाक्षणिकमपि क्वचिच्छक्तमेव। भट्टाचार्यैरपि वाक्यार्थस्य सर्वपदलक्ष्यत्वाभ्युपगमात्।

॥ इति सत्यादिपदानामखण्डार्थत्वनिरूपणम् ॥

## अथ तत्त्वमस्यादिवाक्यानामखण्डार्थत्वनिरूपणम्

विगीतं तत्त्वमस्यादिवाक्यम्(छा० ६।८।७) अखण्डार्थबोधकम्, समानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इति वाक्यवत्। दृष्टान्ते साध्यवैकल्यदोषस्तावन्निराकृत एव। अखण्डार्थत्वस्य लक्षितत्वात् प्रमितत्वाच्च न साध्याप्रसिद्धिः।

ननु वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वात् तत्पदार्थः त्वंपदार्थश्च वक्तव्यः। तत्पदार्थश्च जगज्जन्मादिकरणत्वादिविशिष्टचिद्रूपः। अवस्थात्रयविशिष्टो जीवस्त्वंपदार्थः। तौ च तत्त्वंपदार्थौ न मानान्तरेण प्रमितौ। मानान्तरप्रमितत्वाभावात् संकेतग्रहासम्भवात् पदेनानुपस्थितत्वात् तत्त्वमितिवाक्यार्थप्रमितिर्न स्यात्। मानान्तरप्रमिते हि पदार्थे गृहीतसंकेतसम्बन्धस्य पदस्य ज्ञानेन उपस्थिते सति वाक्यार्थः प्रमीयते।

ननु तत्पदार्थोऽनुमानेन ज्ञात एव। तथा हि, आद्यं कार्यं सकर्तृकम्, कार्यत्वाद् घटवदिति। यद् यत्कार्यं तत्तत् सकर्तृकं, यथा घट इति चेत्, न, कार्यत्वसकर्तृकत्वयोर्व्याप्यव्यापकभावाग्रहात्। कर्तृक्रियाया एव कारणत्वोपपत्तौ कर्तुरन्यथासिद्धत्वात्। किञ्चारम्भवादास्वीकाराद् आद्यकार्यस्य क्रियासंयोगादिप्रयोज्यत्वासम्भवात्। आत्मन आकाशः सम्भूत इति स्वीकारात्। न कदाचिदनीदृशं जगदिति मीमांसकाः। तथा च तन्मतेन आद्यकार्यस्यैवालीकत्वात् सृष्टिप्रलयास्वीकारात्। उक्तानुमानेन च नानाकर्तृत्वानुमानं स्यात्, बहुजनायाससाध्यप्रासादादिदृष्टान्ताद्। एवमनुमानेन न तत्पदवाच्यस्याभिमतस्य सिद्धिः। त्वंपदवाच्यस्यापि जाग्रदाद्यवस्थात्रयविशिष्टस्य मनोऽवच्छिन्नचैतन्यस्य नानुभूतिः।

यद्यप्येकैकावस्थाविशिष्टरूपेण साक्षिणा गृह्यत एव; तथापि अवस्थात्रयविशिष्टस्य न ग्रहणमिति चेत्, न, तत्त्वंपदार्थयोरन्यतोऽसिद्धयोर्यूपाहवनीयादिपदार्थवच्छास्त्रेणैव प्रमितिः कर्तव्या। यथा यूपे पशुं बध्नातीति वाक्याद् यूप संसर्गः, यूपं तक्षतीति वाक्यपर्यालोचनात् तक्षणादिजन्यसंस्कारविशिष्टकाष्ठ यूपपदवाच्यमिति श्रुत्यैवावधारणाद् बोध्यते। यथा वा "आहवनीये जुहोति" इत्यादिवाक्याद् आहवनीयपदार्थजिज्ञासायां "नक्तं गार्हपत्यमादधाति दिवा हवनीयम्" इति वाक्याद् दिवाधानादिसाध्याग्निराहवनीयपदवाच्य इति शास्त्रेणैव निर्णीयते। तथैव प्रकृतेऽपि बोध्यम्।

एवञ्च "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति" (तै० ३।१) इत्यादिश्रुतिस्तत्पदवाच्यस्य समर्पिका। "सत्यं ज्ञानम्" इत्यादि (तै० २।१।१) श्रुतिस्तु अखण्डार्थबोधनात् तत्पदलक्ष्यस्य समर्पिका।

एवमेव "तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वञ्चापरं चैवमेवायं पुरुष एतावुभौ अन्तौ अनुसञ्चरति स्वप्नान्तं च बुद्धान्तञ्चेत्याद्या" श्रुतिः (बृ० ४।३।१८) त्वंपदवाच्यार्थसमर्पिका। "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" (बृ० ४।३।७) "न दृष्टेर्द्रष्टारं पश्येः" इत्यादि (बृ० ३।४।२) श्रुतिस्तु त्वंपदलक्ष्यार्थस्य समर्पिका।

ननु सर्वेषां वेदान्तानामखण्डार्थे वृत्तिरित्युक्तम्, तद् बोधकत्वञ्च लक्षणयेति। एवञ्च यतो वा इमानीति वाक्यानामपि तात्पर्यमखण्डार्थे एव शुद्धे ब्रह्मणि स्यात्, तत् कथं तद्वाच्यार्थसमर्पकत्वम्। कथं न लक्ष्यार्थसमर्पकत्व स्वरूपलक्षणत्वं वेति चेत्, न, लक्षणं द्विविधम्—स्वरूपं तटस्थञ्चेति। तत्र स्वरूपलक्षणवाक्यमेव लक्ष्यार्थसमर्पकम्। तटस्थलक्षणं तु वाच्यार्थसमर्पकम्। वाच्यार्थसमर्पकत्वञ्च तत्त्वंपदवाच्यबोधद्वारकशुद्धचित्परत्वम्, तेन सत्यादिवाक्यस्य सत्यादिपदवाच्य-बोधद्वारकशुद्धचिद्बोधपरत्वेऽपि न वाच्यसमर्पकत्वम्, यतो वेत्यादिवाक्यस्य शुद्धबोधपरत्वेऽपि न स्वरूपलक्षणपरत्वम्। ब्रह्मस्वरूपं सत्यत्वाद्युपलक्षितात्यन्ता-भिन्नं न वेत्यादि संशयाद्यनिवर्तकत्वात्। स्वरूपे भ्रमसंशयनिवर्तकधीपरस्यैव स्वरूपलक्षणत्वात्।

एवञ्च सत्यमित्यादिवाक्येभ्योऽनुभूतयोः शुद्धजीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वियानुपपत्त्या लक्षणया स्मरणोपपत्तिः।

किञ्च सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यस्यानुभवाङ्गीकारच्च तत्पदेन लक्षणया स्मृतिसम्भवः। "सता सोम्य तदा सम्पन्नो भवति" (छा० ६।८।१) इत्यादि श्रुतेः। सुख महमस्वाप्सं न किञ्चदवेदिषमित्यादिसुप्तोत्थितस्य परामर्शाच्च सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवः।

ननु तथापि कथं सत्यादिपदैः शुद्धस्य स्मृतिः? तेषां सत्यत्वाद्युपाधिविशिष्ट-चैतन्य एव शक्तत्वेन विशिष्टांशस्यैवानुभवात् तदाहितसंस्कारोद्बोधेन शुद्धस्य चैतन्यमात्रस्य स्मरणानुपपत्तेः। अनुभवस्मृत्योः समानविषयकत्वनियमादिति चेत्, न, तात्पर्याधीनत्वाच्छब्दवृत्तेः। अयम्भावः—सत्यादिपदानां विशिष्टार्थशक्तत्वेऽपि तद्विषयकसंस्कारबोधकत्वेऽपि शुद्धब्रह्मतात्पर्यानुरोधेन तादृशसंस्कारस्य शुद्धचिदंश एव स्मृतिहेतुत्वम्। एवञ्च, विशिष्टसंस्कारस्यापि शुद्धस्मृतिहेतुत्वं स्वीक्रियत एव। निरूपितञ्चैतत् सिद्धान्तबिन्दौ न्यायरत्नावल्याञ्च[1]। तथा हि तत्र सिद्धान्तबिन्दौ—"इच्छन्ति हि आकाशादिपदादपि निर्विकल्पकं स्मरणम्, तात्पर्या-धीनत्वाच्छब्दवृत्तेः"।

१. सि० बि०, पृ० १४।

तत्रैव च न्यायरत्नावल्याम्—"शक्तिवादे हि मणावुक्तम्—आकाशादिपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः। कदाचिद् अष्टद्रव्यान्यद्रव्यत्वरूपेणाप्याकाशादिपदाच्छाब्दबोधोत्पत्तेस्तद्विशिष्टेऽपि शक्त्यापत्तेरेकस्यामाकाशादिव्यक्तौ केवलायामेव शक्तिसम्भवाच्छशक्त्यनुगमार्थमेव किञ्चद्धर्मविशिष्टे शक्ति स्वीकारात्। न च शुद्धे शक्तिज्ञानात् स्मृतौ सत्यां शुद्धस्यैव शाब्दबोधः स्यात्, न तु शब्दाश्रयत्वादिविशिष्टस्येति वाच्यम्, यद्यपि शब्दाश्रयत्वाद्यंशे न शक्तिर्गृह्यते; तथापि शब्दाश्रयत्वेनोपलक्षिताकाशव्यक्तौ शक्तिग्रहस्यैव शब्दाश्रयत्वादिविशिष्टविशेष्यकस्मृतिहेतुत्वसम्भवेन विशिष्टविषयकस्मृतिहेतुकशाब्दबोधसम्भवात्। अथवा आकाशादि पदादपि निर्विकल्पमेव स्मरणमास्ताम्। ततः शुद्धाकाशस्यैव सुबर्थोपरागेण शाब्दबोधे भानसम्भवात्। निर्धर्मितावच्छेदककस्य शब्दबोधास्वीकारेऽपि आकाशमस्तीत्यादिवाक्यादेकमस्तीत्याकारके अस्तित्वाश्रयत्वम्। एकवृत्तीत्याकारके वा शाब्दबोधे बाधकाभावादिति। तदत्र कल्पद्वये मणिकारोक्तेऽपि आद्ये शब्दाश्रयत्वाद्यंशे शक्त्यग्रहात् तद्विशिष्टस्य स्मृत्या शब्दबोधसम्भवः। यदंशे वृत्ति पूर्वं ज्ञायते, तत्स्मृतेरेव शाब्दबोधकजनकत्वात्।

द्वितीये शुद्धस्य पूर्वाननुभूतत्वेन स्मृत्यसम्भवः, तथापि तत्कल्पनेव मन्मतेऽपि युक्तं पूर्वोक्तकल्पनमिति भावः। अत्रापि शब्दस्य स्मरणमित्यस्योत्तरं योजनया उक्ताद्यकल्पमिच्छन्तीत्यपि लभ्यते[1]"।

इदं तत्त्वमसीति महावाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति। तथाहि पदयोः सामानाधिकरण्यं पदार्थयोर्विशेष्यविशेषणभावः, प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्च।

उक्तञ्च—

सामानाधिकरण्यञ्च विशेषणविशेष्यता।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्॥

तत्र भिन्नप्रवृत्तिनिमित्तानां समानविभक्त्यन्तानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। यथा सोऽयं देवदत्त इत्यादिवाक्ये तत्कालैतत्कालविशिष्टदेवदत्तवाचकयोस्तदेतच्छब्दयोरेकस्मिन् पिण्डे तात्पर्यसम्बन्धः। तथैव तत्त्वमसीति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकस्य तत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकैतच्छशब्दस्य चैकस्मिन् चैतन्ये तात्पर्यसम्बन्धः।

विशेष्यविशेषणभावसम्बन्धस्तु यथा सोऽयं देवदत्त इति वाक्ये तत्पदवाच्य तत्कालविशिष्टदेवदत्तस्यैतत्पदवाच्यैतत्कालविशिष्टदेवदत्तस्य विशेष्यविशेषणभावः। स चान्योन्यभेदव्यावर्तकतया तत्कालविशिष्टो देवदत्तो नैतत् कालविशिष्टाद्

१. न्यायरत्नावली—पृ० १५।

भिन्नः। तथा एतत्कालविशिष्टो देवदत्तो न तत्कालविशिष्टाद्भिन्न इति अन्योन्यभेदव्यावृत्तिः। तथैव प्रकृतेऽपि परोक्षत्वादिविशिष्टचैतन्यं नापरोक्षत्वादिविशिष्टचैतन्याद् भिन्नं तथाऽपरोक्षत्वादिविशिष्टचैतन्यं न परोक्षत्वादिविशिष्टचैतन्याद् भिन्नमिति परस्परतत्त्वंपदार्थभेदव्यावर्तकतया उभयोर्विशेष्यविशेषणभावो युक्त एव।

लक्ष्यलक्षणभावस्तु यथा सोऽयं देवदत्त इति वाक्ये विरुद्धतत्कालैतत्कालविशिष्टांशपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः, तथैव प्रकृतेऽपि तत्त्वंपदयोस्तत्पदार्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वविशिष्टत्वांशपरित्यागेन अविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः। तत्र तत्त्वंपदार्थयोर्विशेष्यविशेषणभावे वक्तुरिच्छाविषयीभूते तत्कालैतत्कालविशिष्टत्वांशे विरोधाद् उक्तसम्बन्धबाधे जाते सति अविरुद्धांशे विरुद्धांशपरित्यागेन लक्षणया वाक्यतात्पर्यं बोध्यते।

एवञ्च सामानाधिकरण्यस्य विशेष्यविशेषणभावस्य चैकस्मिन् अविरुद्धे अर्थे लक्षणया तात्पर्यविषयीभूते तात्पर्यम्। अत एवोक्तं संक्षेपशारीरके—

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः।
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः॥
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः।
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमः सूरिभिः।

एवञ्च सामानाधिकरण्यं विशेष्यविशेषणभावे हेतुः, स च लक्ष्यलक्षणभावे विरोधानुसन्धानद्वारा हेतुरिति बोध्यम्।

तत्त्वमुभयोः पदयोर्लक्षणया सच्चिदानन्दो बोध्यते। तत्र त्वंपदेन अन्तःकरणवृत्तिविषयसम्बन्धसाक्षी अहं जानामीति प्रतीयमानो न जानामीति अज्ञानसाक्षी प्रतीयमानः परिच्छिन्नो वाच्यत्वेन प्रतीयते। श्रुत्या च तस्य परमप्रेमास्पदत्वेन सुखरूपत्वेन च प्रतीतिः। तस्य च नान्तःकरणाद्यात्मकत्वं सम्भवति साक्ष्यस्य साक्ष्यात्मकत्वायोगात्। अतो अज्ञानादिप्रपञ्चं विलाप्यापरिच्छिन्नसच्चिदानन्दलक्षणस्य तस्य लक्षणया बोधः। एवं तत्पदेनापारोक्ष्यादि परित्यागेन सच्चिदानन्दस्वरूपस्य लक्षितत्वात्, तदैक्यं बोध्यते। ऐक्ये च सामानाधिकरण्यम्। एवञ्च सामानाधिकरण्यमैक्ये बीजं विशेष्यविशेषणभावश्च लक्षणायामिति बोध्यम्। विरुद्धांशपरित्यागाभावे तत्त्वंपदयोः सामानाधिकरण्यानुपपत्तिः। तथा च तत्त्वंपदाभ्यां स्वस्ववाच्यार्थगतविरुद्धांशपरित्यागेन लक्षणया सामानाधिकरण्यबलात् लक्ष्यैकत्वं बोध्यत इति तदेव वाक्यार्थः।

ननु तत्त्वंपदयोर्लक्ष्यमाणयोर्वाच्ययोश्च पदार्थयोर्भेदोऽस्ति, न वा? नाद्यः, तथा सति ऐक्यप्रमितिर्न स्यात्। न द्वितीयः, तथा सति पदार्थ एव वाक्यार्थः

स्यादतो वाक्यार्थस्यापूर्वत्वाभावाद् अनुवादकत्वप्रसङ्गः। पदद्वयप्रयोगश्च व्यर्थः स्यादिति चेत्; न, वाक्यार्थस्य पदार्थत्वेऽपि दोषाभावात्। पदार्थस्यैव वाक्येन जीवब्रह्मणोरैक्यस्य लक्षणया प्रतिपादनात्। न च पदान्तरवैयर्थ्यम्, त्वंपदस्य वाच्यार्थपरित्यागेन चिल्लक्षकत्वं तत्पदसामानाधिकरण्ये सति घटते तथा तत्पदस्यापि वाच्यविरुद्धांशपरित्यागेन चिल्लक्षकत्वं त्वंपदसामानाधिकरण्ये सति घटते। अन्यथा सामानाधिकरण्याभावाद् विशेष्यविशेषणाभावाद् विरोधप्रतिसन्धानाभावाच्चैतन्यलक्षकत्वमेव पृथग् उभयोः पदयोर्न स्यात्, अतो न पदस्य वैयर्थ्यम्।

ननु पदार्थवाक्यार्थसांकर्यादेव जीवब्रह्मणोर्भेदाभेदविषयं सामानाधिकरण्यम्, तच्च तादात्म्यमेव। धर्मद्वारकभेदविशिष्टस्वरूपाभेद एव तादात्म्यं, धर्मतो भेदः स्वरूपतोऽभेद इति भावः। यथा नीलो घट इत्यादौ। न हि सर्वथा अभेदे घटो घट इत्यादौ सामानाधिकरण्यं दृष्टम् अत एव गुणगुण्यादिभेदाभेदसाध्यकेऽनुमाने सामानाधिकृतत्वादिति हेतुरुपादीयते मीमांसकैर्गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादिति। न च भेदे तयोर्विरोधात् समावेशो न घटत इति वाच्यम्, नीलघटयोस्तथाप्रतीतेरेवाविरोधात्। धर्मतो भेदः स्वरूपतोऽभेद इति वा अविरोध एव।

तथा प्रतीतेरेव भेदाभेदवादे सर्वे विरोधिविकल्पाः परास्ताः। किञ्चाभेदे सामानाधिकरण्यमपि अनुपपन्नमेव। सोऽयं देवदत्त इत्यादि वाक्ये तु देशकालदशादिकमेव भेदकं तत्त्वम्, त चैकस्मिन् धर्मिणि न सम्भवतीति ऐक्यपरं वाक्यम्। नच स्वप्रकाशे चिदेकरसे ब्रह्मणि देशकालादिकंकिञ्चित्तत्त्वं भेदकं सम्भवति। न चाज्ञानमेव भेदकमिति वाच्यम्, ज्ञानरूपे स्वतःप्रकाशेऽज्ञानासम्भवात् तेजसि तमोऽभावात्। विशिष्टे अन्योन्याश्रयात्। जीवब्रह्मणोश्च भेदोऽपि श्रुत्या बोधित एव। य आत्मनि तिष्ठन् आत्मानं यमयतीति ( बृ० उ० ३।७।६ ), द्वा सुपर्णा सयुजाइति ( मु० उ० ३। ।१ )।

यथोक्तम् सिद्धित्रये यामुनाचार्यै संवित्सिद्धिप्रकरणे—

अज्ञत्वसर्ववेदित्वदुःखित्वसुखितादिके ।<br>
विशेषणे वा चिद्धातोरथवाऽप्युपलक्षणे ॥<br>
विरुद्धगुणसक्रान्तेर्भेदः स्यात् त्वंतदर्थयोः।<br>
वाच्यैकदेशत्यागेन चिदेकव्यक्तिनिष्ठता ॥<br>
सोऽयं गौरितिवत्तत्वं पदयोरित्यपेशलम्।<br>
देशकालदशाभेदादेकस्मिन्नपि धर्मिणि ॥

विरुद्धद्वन्द्वसंक्रान्तेः सोऽयं गौरिति युज्यते ।
स्वप्रकाशस्य चिद्धातो विरुद्धद्वन्द्वसंगनौ ॥

न व्यवस्थापकं किञ्चिद् देशकालदशादिके ।
निर्धूतनिखिलद्वन्द्वस्वप्रकाशे चिदात्मनि ॥

द्वैतानर्थभ्रमाभावाच्छास्त्रं निर्विषयं भवेत् ।
एतेन सत्यकामत्वजगत्कारणतादयः ॥

मायोपाधौ परे ध्वस्ताः शोकमोहादयः पुनः ।
अविद्योपाधिके जीवे विनाशे नेति तन्मतम् ॥

शुद्धब्रह्मविदामेतन्मत प्रागेव दूषितम् ।
चित्स्वरूपे विशिष्टे वा मायाविद्याद्युपाधयः ॥

पूर्वस्मिन् सर्वसाङ्कर्यं परजीवाविभागतः ।
उत्तरस्मिन्नपि तथा विशिष्टमपि चिद्यदि ॥

चित्स्वरूपं हि निर्भेदं मायाऽविद्याद्युपाधिभिः ।
विभिन्नमिव विभ्रान्तं विशिष्टश्च मतं तव ॥

तत्त्वं पदद्वयं जीवपरतादात्म्यगोचरम् ।
तन्मुख्यवृत्तितादात्म्यमपि वस्तुद्वयाश्रयम् ॥

भेदाभेदविकल्पस्तु यस्त्वया परिचोदितः ।
अभेदाभेदिनो सत्ये बन्धे सति निरर्थकः ॥

अभेदो भेदमर्दी तु स्वाश्रयीभूतवस्तुनोः ।
भेदः परस्परानात्म्यं भावानामेवमेतयोः ॥

निर्दोषापौरुषेयी च श्रुतिरित्यर्थमादरात् ।
असकृत्तत्त्वमित्याह तादात्म्यं ब्रह्मजीवयोः ॥

ब्रह्मानन्दह्रदान्तःस्थो मुक्तात्मा सुखमेध्यते[१] ॥

अतो भेदाभेदविषयमेव सामानाधिकरण्यमिति चेत्, अत्रोच्यते, एकमेवाद्वितीयमित्यादिश्रुत्या ब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यत्वावधारणात् । जीवब्रह्मणोर्धर्मभेद इति तावद् व्याहतम् । ब्रह्मविद् ब्रह्मैव भवतीति श्रुत्या च मुक्तात्मपरात्मनोर्भेदं वारयति । सर्वभेदस्य च निराकरणाद् भेदाभेदपक्षोऽसंगत एव । किञ्च भेदाभेदविषयेण वाक्यजन्यज्ञानेन तदभ्यासजन्यापरोक्षज्ञानेन वा स भेदो निवर्त्यते न वा ? निवर्त्यते चेत् कथं विज्ञानस्य स्वविषयनिरासिता, न हि घटज्ञानेन घटो निवर्तते । तृतीयज्ञानेनाभेदमात्रविषयेण भेदो निवर्तत इति चेत्, न,

१. सिद्धित्रये—पृ० २९४ ।

यथाप्रमाणं तृतीयज्ञानस्यापि अभ्यासजन्यस्य भेदाभेदविषयकत्वात्। अन्यथा प्रमाणे अन्यथाभ्यासजन्यज्ञाने च भेदाभेदप्रमाणवैकल्यात्। ननु ज्ञानेनाज्ञानं भेदस्तु कर्मभिर्निवर्त्यते इति चेत्, न, ब्रह्मविद् ब्रह्मैव भवतीति उद्देश्यतावच्छेदक-प्रयोजकत्वं विधेये भासत इति नियमाद् ब्रह्मीभावे ब्रह्मवेदनस्यैव प्रयोजकत्वात्।

किञ्च जीवब्रह्मणोर्भेदाभेदस्य न शास्त्रेणापि प्रतिपादनीयता युक्ता, अपूर्वताया अभावात्, तस्य लोकत एव सिद्धेः। न हि कश्चिदपि लौकिको मन्यते ब्रह्मास्मीति। न च परमार्थतो भेदाभेदो विरोधाद् उपपद्यते। तस्माद् एकस्यापि ब्रह्मण उपाधिजनितकल्पितभेदभिन्नरूपाभिधेयपरामर्शेन लक्षणया एकवस्तु पर्यवसानमेव बोध्यम्। एवञ्च तत्त्वंपदाभ्यामेकमेव ब्रह्मोपाधिपरामर्शेन प्रतिपाद्यत इति सिद्धम्। न च स्वप्रकाशे ब्रह्मणि अज्ञानोपाधिर्न सम्भवतीति वाच्यम्, अजामेका मित्यादिश्रुत्या (श्वे० उ० ४।५), हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् इत्यादि-श्रुत्या (ईशा०) च अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः (गी० ५।१५) इति स्मृत्या च अनाद्यज्ञानस्य भावरूपस्य जगदुपादनभूतस्य ब्रह्मणि सत्त्वात्। प्रतिज्ञादृष्टान्तानुरोधेन च तस्य मिथ्यात्वावगमात्। तत्त्वमस्यादिवाक्येन जीवब्रह्मणोरैक्यबोधे बाधकाभावात्। "एकधैवानुद्रष्टव्यम्", "नेह नानास्ति किञ्चनेत्यादि" (बृ० उ० ४।४।१९) श्रुतिभिरपि तयोरेकत्वं प्रतिपाद्यते। भेदश्रुतिस्तु कल्पितभेदमादायापि उपपद्यते।

किञ्च विवादपदं भेदाभेदप्रतिपादक समानाधिकरणवाक्यत्वाद् नीलो घट इति वाक्यवदित्यनुमाने भेदस्य सिद्धत्वाद् अंशतः सिद्धसाधनमपि बोध्यम्। सोऽयं देवदत्त इति वाक्ये व्यभिचारश्च। अभेदबोधकश्रुतिबाधश्चेति दिक्।

ननु 'प्रज्ञानं ब्रह्म' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति वाक्यानां महावाक्यत्वमेव कथमिति चेत्, न, सर्वेषामवान्तरपदार्थप्रतिपादकानां सत्यं ज्ञानमित्यादिवाक्यानामेतदाकाङ्क्षतया एतैरेकवाक्यतापन्नत्वात्। यथा समिधो यजतीत्यादिवाक्यानां दर्शपौर्णमासवाक्येन तदाकाङ्क्षया एकवाक्यतापन्नत्वाद् भवति दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम इति वाक्यस्य महावाक्यत्वम्, तद्वत्। तथा च सर्वोऽपि वेदान्तगतः पदसमुदायो ब्रह्मात्मैकत्वप्रतिपादनपरः। एतेषामेव तत्त्वमस्यादिमहावाक्यानां भवतीति बोध्यम्।

नन्ववान्तरवाक्यैकवाक्यतापन्नतत्त्वमस्यादिमहावाक्यानां ब्रह्मात्मैकत्व-प्रतिपादनमुक्तम्। भगवत्पादैः ब्रह्मणः शास्त्रयोनित्वमाक्षिप्य "तत्तु समन्वयात्" इति सूत्रे "तद् ब्रह्म सर्वज्ञं सर्वशक्तिजगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथम्? समन्वयात्। सर्वेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि[१] इति" तत्र कथं वेदान्तवाक्यानां ब्रह्मैकत्वपरत्वमवधार्यत इति चेत्, अत्रोच्यते, सम्यगन्वयः समन्वयः। अन्वये सम्यक्त्वञ्चोक्तानाम-

१. शां० भा० पृ० १०३।

नेकपदानामखण्डरसैकार्थपर्यवसायित्वम् । पर्यवसानञ्च तात्पर्येण । एवञ्च तात्पर्येण वेदान्तवाक्यानां समन्वयादित्यर्थः ।

ननु तात्पर्यस्य विवक्षारूपत्वात् तस्याश्च पुरुषधर्मत्वात् कथं तात्पर्येण अपौरुषेयवेदान्तानां समन्वय इति चेत्, न, तात्पर्यस्य तदर्थप्रमितिजेयतारूपत्वात् शब्दधर्मत्वम् । तथा च प्रतीयमानो योऽर्थः, तत्प्रमितिजननसामर्थ्यं तात्पर्यम् । तच्च शब्दधर्म एव । ननु तथापि तात्पर्यं न तुलाधृतमिति न्यायात् कथं जीवब्रह्मणोरैक्ये एव तात्पर्यावधारणमिति चेत्, न, उपक्रमोपसंहारादिषड्विधलिङ्गात् । तथा हि—

उपक्रमोपसंहाराभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

तदेव च लोके वेदे वा अतत्परमुच्यते, योऽर्थो येन न विवक्ष्यते, यथा विषं भुङ्क्ष्वेत्यादौ विषभोजनादि । यथा वा वायुर्वै क्षेपिष्ठा देवता इत्यादौ वायुक्षेपिष्ठत्वादि । स्वार्थस्याविधित्सितत्वात् ।

न ह्यतात्पर्यविषय उपसंह्रियत उपक्रम्यते, न वा पुनः पुनः कथ्यते । न च तदपूर्वं भवति, नापि फलवत्त्वेन उपस्तूयते, न चोपपत्तिभिरुपपाद्यत इति ।

अतः उक्तषड्विधं तात्पर्यावधारणे लिङ्गम् । एतानि च लिङ्गानि सम्भूय ब्रह्मणि वर्तन्ते । तथा हि, छान्दोग्ये षष्ठप्रपाठके "सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" इत्युपक्रमः । ऐतदात्म्यमिदं सर्वं "स आत्मा तत्त्वमसी"ति तत्रैवोपसंहारः । तस्यैव "तत्त्वमसी"ति वाक्येन नवकृत्वोऽभ्यासः । प्रमाणान्तरानधिगतत्वात् तस्यापूर्वत्वं प्रतिपाद्यते । "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति निरतिशयपुरुषार्थावाप्तिर्ब्रह्म विज्ञानस्य फलम् । येनाश्रुतं श्रुतं भवतीत्याद्यर्थवादः । "यथा सोम्य एकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्याद्युपपत्तिः ।

बृहदारण्यकेऽपि मैत्रेयीब्राह्मणे "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यात्मन उपक्रमः, "विज्ञातारमरे केन विजानीयात्" इत्युपसंहारः, "आत्मनि दृष्टे श्रुते मते विज्ञाते", "अय आत्मा अनुच्छित्तिधर्मा", "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिरभ्यासः । अपूर्वत्वं तु प्रमाणान्तरानधिगतत्वाद् व्यक्तमेव । यत्र त्वस्य सर्वमात्मैवाभूत्" इति सर्वात्मभावफलश्रुतिः । एतावदरे अमृतत्वमित्यर्थवादः । 'यथा दुन्दुभे र्हन्यमानस्ये' त्याद्युपपत्तिः । एव-

मन्यत्राप्यूह्यम्। एवञ्च षड्विधैर्लिङ्गैर्वेदान्तवाक्यानां पदसमन्वयाद् ब्रह्मात्मैक्ये तात्पर्यमिति सिद्धम्।

ननु तथापि तत्त्वमसीति वाक्येन नाखण्डार्थत्वसिद्धिः। जीवब्रह्मणोर्भेदस्यैव शास्त्रतात्पर्यविषयत्वात्। नाहं सर्वज्ञ इत्याद्यनुभवाच्च। न च षड्विधलिङ्गैरुपपादितमेवैक्ये तात्पर्यमिति वाच्यम्, उक्तलिङ्गैरपि भेद एव तात्पर्यावधारणात्। तथा हि आथर्वणे "द्वा सुपर्णे" त्युपक्रमः। "परमं साम्यमुपैति" इत्युपसंहारः। "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इत्यादिरभ्यासः। शास्त्रैकगम्येश्वरप्रतियोगिकभेदस्यापूर्वत्वम्। पुण्यपापे विधूयेति फलम्। "अस्य महिमानमिति वीतशोकः" इति स्तुतिरूपोऽर्थवादः। "अत्ति अनश्नन्निति" युक्तिरपि विद्यते।

अन्तर्यामिब्राह्मणेऽपि "वेत्थ नु त्वं गार्ग्य" इत्युपक्रम्य "एष ते अन्तर्याम्यमृतः" इत्युपसंहारः। एष ते अन्तर्यामीति बहुधा अभ्यासः। अन्तर्यामित्वस्य चान्यतोऽनधिगतत्वाद् अपूर्वता। स वै ब्रह्मविद् सर्वविदिति फलम्। "तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति निन्दारूपोऽर्थवादः। यस्य पृथिवी शरीरं यं पृथिवी न वेदे" त्यादिरुपपत्तिरिति अन्तर्यामिप्रतिपादने तात्पर्यावधारणम्। अन्तर्यामी च अन्तर्यमयति नियमयतीति परमेश्वर एव बोध्यो न तु जीवः।

जीवेश्वरौ परस्परभिन्नौ विरुद्धधर्मत्वाद् जलाग्निवदित्यनुमानेनापि भेद एव सिध्यति। न च भेदः कल्पितः, षड्विधलिङ्गैरकल्पितभेदे तात्पर्यस्य उक्तत्वात्। न च तत्त्वमस्यादिवाक्यैरभेदो बोध्यते; अपि तु भेद एव। तथाहि सदेव सोम्येदमग्र आसीद् इत्यादिश्रुतिर्नभिदबोधिका। उत तमादेशमप्राक्षीः, सन्मूला सोम्येमाः प्रजाः सदायतना सत्प्रतिष्ठा, ऐतदात्म्यमिदं सर्वं तत् सत्यं, स आत्मा तत्त्वमसीत्युपक्रममध्योपसंहाराणां सविशेषब्रह्मपरत्वात्। न च प्रजाशब्दाभिहितानां जीवानां ब्रह्मणा सह मूलमूलिभावः सम्भवति। तत्त्वमसीति तु तस्मै त्वं तस्मात् त्वं तस्य त्वं वेति अन्तर्यामिब्राह्मणानुसारेण शरीरशरीरिभावपरतया योजनीयम्। न च प्रतिज्ञाहानिः, तद्वाक्यमपि ब्रह्मणि ज्ञाते उपादानतया कार्यमनुप्रविष्टो ब्रह्माकारो भवतीति सद्ब्रह्मण उपादानता निरूपणपरम्। न चैकमेवाद्वितीयेतिश्रुतिविरोधः, एकशब्दस्यान्यत्वपरत्वात् द्वितीयशब्दस्य च सहायवाचकत्वाद् अन्यसहायाभाव एव ब्रह्मणो बोधनात्। सदृशद्वितीयाभावो वा बोध्यते, यथा असिद्वितीयोऽनुचचार पाण्डव इत्यत्र द्वितीयशब्दः सहायवाची। न च तत्त्वमसीति वाक्यस्य शरीरशरीरिभावपरत्वे जीवशरीरपरमात्मेत्यर्थस्य विवक्षणाद् असीति मध्यमपुरुषप्रयोगानुपपत्तिरिति वाच्यम् युष्मच्छब्दसामानाधिकरण्यमात्रेण संबोध्यार्थपरत्वाभावेऽपि परम्परया क्रियान्वयमादायापि तदुपपत्तेः। तच्छरीरभावापन्नस्त्वमसीति वाक्यार्थात्। ब्रह्म वेद ब्रह्मैव

भवतीत्यत्र एव शब्दः सादृश्यवाची। अत्यन्तसन्निधानाद् वा तदेव भवतीति श्रुत्या उक्तम्, न तु अभेदः प्रतिपाद्यते। अतः सर्वेषां वेदान्तानां सविशेष एव ब्रह्मणि तात्पर्यात् कथं तत्त्वमस्यादिवाक्यानामखण्डार्थे तात्पर्यावधारणमिति चेत्, अत्रोच्यते, न हि वेदान्तानां जीवब्रह्मणोर्भेदे तात्पर्यम्। नाऽहं सर्वज्ञ इत्यादेरनुभवे मनोऽवच्छिन्नचैतन्यस्य मायावच्छिन्नचैतन्येन सह भेदो भासते; न तु निरुपाधिकजीवस्य ब्रह्मणो वा। अतः कल्पितभेद एव तादृशानुभवस्य विषय इति न किञ्चिदनुपपन्नम्। एवञ्च जीवेश्वरौ भिन्नाविति अनुमानमपि उपाधिकृतभेदमेव विषयीकरोति। किञ्च निर्धर्मके चैतन्ये परमार्थतः कस्यापि धर्मस्याभावाद् हेत्वसिद्धिः, अद्वैतश्रुतिविरोधश्च। किञ्च भेदस्य प्रत्यक्षादिभिरेव सिद्धत्वात् सिद्धसाधनमपि। न च षड्विधलिङ्गैर्भेदे तात्पर्याद् भेदस्य पारमार्थिकत्वमिति वाच्यम्, आथर्वणे प्रथममुण्डके कस्मिन्नु भगव विज्ञाते सर्वमिदं विज्ञातं भवतीति शौनकप्रश्नानन्तरं द्विविधविद्याबोधनप्रसङ्गे "अथ परा यया तदक्षरमधिगम्यते यत् तद्रेश्यमग्राह्यमश्रोत्रमवर्णम्" इत्यादिना परविद्याविषयत्वमक्षरस्य वर्णितम्। अक्षरशब्दस्य च निर्विशेषब्रह्मपरत्वं भगवत्पादैः "अक्षरमम्बरान्तधृतेरिति" ( ब्र० सू० १।३।१० ) सूत्रभाष्ये व्यवस्थापितमेव, इति तत्रोपक्रमोऽभेदपर एव।

द्वितीयमुण्डकेऽपि "पुरुष एवेदं सर्वमित्यादिना मध्ये अभेद एव परामृष्टः। तृतीयमुण्डकेऽपि अन्ते "एवं परे अव्यये सर्वे एकीभवन्ती" त्यादिना अभेदे एवोपसंहार इत्यभेद एव पारमार्थिकः। अतो भेदपरकत्वं व्याख्यानं न युक्तम्। अतः तत्त्वमस्यादिस्थलस्यापि अभेद एव तात्पर्यं बोध्यम्। द्वा सुपर्णा इत्यादि द्वैताभासबोधकवाक्यन्तु व्यावहारिकभेदमादायापि उपपद्यते। अन्तर्यामिब्राह्मणमपि अभेदपरमेव। तथाहि आत्मेत्येवोपासीतेति सूत्रितब्रह्मविद्याविवरणरूपायां चतुरध्याय्यां "अनेन हि एतत् सर्वं वेद" इति प्रतिज्ञाय "ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति" उपक्रमेण षष्ठाध्यायान्ते मैत्रेयी ब्राह्मणे "यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्" इत्याद्युपसंहारेण चाभेदपरत्वमेव निर्णीयते। एवञ्च तत्त्वमसीत्यादिवाक्येनापि जीवब्रह्मणोरैक्यमेव प्रतिपाद्यते।

सदेव सोम्येदमग्र आसीत् इत्यत्र सच्छब्दो निर्विशेषवस्तुपरः, न सगुणवस्तुपरः। "सदेवेदमिति वाक्योपक्रमे एकमेवाद्वितीयमित्युपसंहारात्। एकमेवाद्वितीयमिति श्रुतिस्तु पदसमन्वयबलात् सजातीयविजातीयस्वगतभेदनिषेधपूर्वं निर्विशेषवस्तुपरमित्यद्वैतसिद्ध्यादिग्रन्थे विशेषेण प्रतिपादितम्। किञ्च अभेदे तात्पर्येऽवगते प्रतिज्ञादृष्टान्तवाक्यान्यपि सुतरां समञ्जसानि भवन्ति। भेदवादे च विलष्टकल्पना कर्तव्या भवतीति।

किञ्च तस्मै त्वमित्यादिव्याख्यानं न युक्तम्। त्वंपदार्थस्यैकदेशेन असिपदार्थेनान्वयासम्भवात्। शरीरशरीरिभावे च समानाधिकरण्यमपि न युक्तम्, अकायम-

व्रजेत्यादि श्रुतिविरोधात् । असिपदप्रयोगानर्थक्यं तु उक्तमेव । न च परस्परया क्रियान्वयाद् युष्मद्पदसामानाधिकरण्यमात्रेण मध्यमपुरुषप्रयोगः साधुः । त्वमहमस्मि इत्यत्रापि तदापत्तेः । एवञ्च सर्वथा हि तत्त्वमसीति वाक्यमुक्तषड्विधलिङ्गैरभेदे एव तात्पर्यं बोधयतीत्यनवद्यम् । अतस्तस्य वाक्यस्याखण्डार्थबोधकत्वे न किञ्चिदपि बाधकम् ।

ननु तत्त्वमस्यादिवाक्येनाखण्डैकरसब्रह्म लक्ष्यते इत्युक्तम् । तत्र कीदृशी लक्षणा । द्विविधा हि लक्षणा—जहत्स्वार्था अजहत्स्वार्था च । तत्र जहत्स्वार्था नाम स्वार्थमभिधेयं हित्वा तदविनाभूते वृत्तिः । यथा गङ्गायां घोष इत्यादौ । विषं भुङ्क्ष्वेत्यादौ च । न जहति स्वार्थं पदानि यस्यां सेयं वृत्तिरजहत्स्वार्था,यथा काकेभ्यो दधि रक्ष्यताम्, शोणो धावतीत्यादौ । वेदान्तपरिभाषायान्तु काकेभ्यो दधि रक्ष्यतामिति जहदजहल्लक्षणोदाहरणं प्रदर्शितम्,तदपि युक्तम् । तत्र जातिशक्तिवादे शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेण काकेऽकाकेऽपि काकशब्दस्य प्रवृत्तेः । न चैतयोरेकतरलक्षणापि प्रकृते सम्भवति । तथाहि, न तावत् तत्त्वं पदाभ्यां जहल्लक्षणया जीवेश्वरत्वरूपैक्यं बोधयितुं शक्यते, तयोः स्वार्थैकदेशत्वात् नाप्यजहल्लक्षणया अंशतो विरोधादिति ।

न च नीलमुत्पलमित्यादिवद् वाक्यार्थबोधोऽत्र सम्भवति । एकत्र परोक्षत्वापरोक्षत्वयोः प्रत्यक्षविरोधात् । न च जहदजहल्लक्षणाख्या भागत्यागलक्षणा सम्भवति, तस्या अनङ्गीकारादिति चेत्, न, सोऽयं देवदत्त इत्यादावेव भागलक्षणायाः प्रसिद्धत्वात्, तयैवाभेदबोधात् । सोऽयमित्यनेन न तावत् तत्तेदन्ताविशिष्टयोरभेदः प्रतिपादयितुं शक्यते विरोधात्, भेदकधर्मविशिष्टस्यापि अभेदबोधेऽतिप्रसङ्गाच्च । बाधाद् भ्रान्तित्वापत्तेश्च । किन्तु तत्तेदन्तोपलक्षितदेवदत्तस्वरूपमात्रं विषयीक्रियते अबाधात् । एवञ्च प्रत्यभिज्ञया यदभेदो विषयीक्रियते, स एव परप्रत्ययार्थं प्रयुक्तेन प्रत्यभिज्ञावाक्येनापि विषयीकर्तव्योऽन्यथा अप्रामाण्यापत्तेः प्रतारकत्वा-पत्तेश्च, स्वमन्यथा प्रतीत्य परं प्रत्यन्यथोक्तेः । न च सोऽयमित्यादिवाक्येन तत्कालविशिष्टैतत्कालविशिष्टयोस्तदिदंपदवाच्ययोर्लक्षणां विना अभेद उपस्थापयितुं शक्यते ।

ननु सोऽयमित्यादिस्थले न लक्षणा । अभिधयोपस्थापितविशिष्टपदार्थयोरभेदान्वयानुपपत्तौ विशेष्ययोश्चोपपत्तौ अविरोधाद्विशेष्यांशमादायैवाभेदो बोध्यते । यथा अनित्यो घट इत्यादिवाक्ये घटपदवाच्यैकदेशे घटत्वे अनित्यत्वान्वयायोग्यत्वेऽपि घटव्यक्तिमादायान्वये वाक्यप्रामाण्यम् ।

एवञ्च विशेषणकोटिप्रविष्टयोस्तत्तेदन्तयोः पदार्थतावच्छेदकत्वेन तत्र प्रधानान्वयायोगाद् विरोधाभावाद् विशेष्यांशयोरभेदः । अन्यथा गामानय,

राजपुरुषमानय इत्यादौ लक्षणापत्तेः। गोत्वस्यानयनासम्भवात्। राज्ञश्चानयनादौ अन्वये सति द्वन्द्वसमासापत्तेः। गेहे घटो घटे रूपमित्यादौ च घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां लक्षणयैव विशेष्यमात्रपरत्वं स्यात्।

तथा च सोऽयमित्यादावपि अभिधयैव [वि]शेष्यांशमादायाभेदो बोध्यते। तत्त्वमसीत्यादौ अपि बोध्यम्। न च सम्प्रदायविरोध इति वाच्यम्। अभ्युपगमवादेन सम्प्रदायप्रवर्तनाद् इति चेत्, न, लक्षणां विनैव विशिष्टवाचकपदानां विशेष्यमात्रपरत्वे घटात्यन्याभाववत्यपि देशे अत्र घटो ध्वस्त इति प्रयोगापत्तेः। तथाहि ध्वंसपदार्थ उत्पत्तिमदभावः। अत्रोत्पत्तिमान् चासौ अभाव इति विग्रहो न तु उत्पत्तिमतामभावः अन्यथा प्रागभावस्यापि उत्पत्तिमतां घटादीनामभावरूपत्वात् ध्वंसाभावत्वापत्तिः। कर्मधारये तु तस्यानादित्वाद् अत्यन्तान्योन्याभावयोश्च नित्यत्वान्नातिप्रसङ्ग इति **गुरवः**। तथा च ध्वंसशब्देन लक्षणां विनैव कदाचिद् अभावमात्रस्यापि बोधे बाधाभावात्। घटात्यन्ताभावस्थलेऽपि घटो ध्वस्त इत्यापत्तेश्च।

एवमेव मूषकः पशु इत्यादेरपि प्रामाण्यापत्तेः। लोमवल्लाङ्गूलविशिष्टस्य पशुपदेनोपस्थितत्वात् कदाचिल्लाङ्गूलविशिष्टस्यापि उपस्थानात्। तस्माद् विशिष्टवाचकपदानां विशेष्यमात्रपरत्वं लक्षणयैवेति बोध्यम्। गेहे घट इत्यादि स्थले तु लक्षणाया नावश्यकता, तत्र गेहत्वविशिष्टे घटत्वविशिष्टान्वये बाधकाभावाद् अविरोधात्। इह तु परोक्षत्वापरोक्षत्वयोर्विरोधः स्पष्ट एव। किञ्च गेहे घट इत्यादिस्थले न हि ऐक्यं वाक्यतात्पर्यविषयः, येन विरोधोद्भावनं युक्तं स्यात्। विशिष्टयोरन्वये युक्ते सति विशेषणांशमादाय विरोधभावनमयुक्तम्। एवमेव गामानयेत्यादिस्थलेष्वपि बोध्यम्।

न च भेदसम्बन्धस्थले मा भूत् पर्यनुयोगः, नीलो घट इत्यादिस्थलेऽपि नीलत्वघटत्वयोर्विरोधाद् विशेष्यमात्रपरत्वं लक्षणयैव स्यादिति वाच्यम्, इष्टापत्तेः। तत्र नीलपदेन नीलगुणोपस्थितौ नीलवति लक्षणैव श्वेतो धावतीतिवत्। न चानित्यो घट इत्यादौ लक्षणापत्तिरिति वाच्यम्, तत्र लक्षणां विनैव सिद्धेः विशिष्टयोर्विरोधाभावात्। ननु विशेषणांशमादायैव विरोधः, सोऽयमित्यत्रापि प्रतिपाद्यते तर्हि गेहे घट इत्यादिस्थलेऽपि विशेषणांशान्वयमादाय विरोधः स्यादेवेति चेत्, न, साक्षाद् विरोधाभावात्। नहि नित्यत्वानित्यत्वयोर्यथा विरोधः, तथा अनित्यत्वघटत्वयोः गेहत्वघटत्वयोः सम्भवति, उदासीनत्वात्। विरोधश्चात्र न सहानवस्थानलक्षणः. किंतु नियमेनैकाप्राप्तौ अन्यप्रसक्तिरूपम्। यथा परोक्षत्वापरोक्षत्वयोः नित्यत्वानित्यत्वयोः सुखित्वदुःखित्वयोः। गेहत्वघटत्वयोश्च नियमेन तथात्वं नास्ति। एवञ्च तादृशविरोधो यदि, तदा लक्षणाश्रयणमन्यत्र च विशेष्यांशमादायान्वयबोध इति। किञ्चाभिधयैव सोऽयमित्यादौ तत्त्वमसीत्यादौ

नाभेदबोधे पदोपस्थापितपदार्थसंसर्गस्यैव वाक्यार्थत्वाद् अखण्डार्थत्वहानिर्दुर्वारा। लक्षणया बोधे तु न तथा।

किञ्च 'यतो वाचो निवर्तन्ते अप्राप्यमनसा सह' इति ब्रह्मणो वाग्विषयत्व-निषेधकश्रुतेरनुपपत्तिः। वाग्विषयत्वे च घटादिवदनित्यत्वापत्तिर्दुर्वारैव। किञ्च, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' अन्यथा नित्यो घट इति वाक्यप्रामाण्यापत्तेः। पदजन्यप्रतीतिविषयत्वं पदार्थत्वमिति समुदितस्यैव पदार्थत्वं वाच्यम्। अत एव घटत्वादिकं घटपदपदार्थैकदेश उच्यते। तथा पदार्थेन पदार्थस्यान्वये योग्ये बोधः, इतरत्र बाध इति अनुगमः। सर्वत्र गेहे घटः, गामानय, राजपुरुषमानय, घटे रूपम्, अनित्यो घट इत्यादिस्थले पदार्थयोरन्वये विशिष्टयोर्न योग्यताहानिः। 'सोऽयं देवदत्तः' इत्यादिस्थले तु विशिष्टयोरन्वये योग्यताबाधः स्पष्ट एवेति तत्र स्थले लक्षणाऽऽश्रयणं युक्तम्। योग्यताबाधश्च विरोधात्, स च उक्त एव, अन्यथा सर्वत्र लक्षणोच्छेदप्रसङ्गात्। गङ्गायां घोष इत्यादावपि आक्षिप्तेन तीरेणान्वयात्। गङ्गायास्तु तीरावच्छेदेन योग्यतयान्वयोपपत्तौ लक्षणासम्भवात्। अतो येन रूपेण पदाभ्यां पदार्थावुपस्थितौ, तयोः पदार्थयोस्तेन रूपेण अन्वये योग्यतायां सत्यां बोधः, असत्यां च बाधः, लक्षणया वा योग्यपदार्थान्तरं कल्पयित्वा बोध इति मन्तव्यम्।

प्रकृते च तत्तेदन्ताविशिष्टावेव पदार्थौ, न विशेष्यमात्रम्। तस्य पदार्थैकदेशत्वात् तस्यापदार्थत्वात्। अन्यथा ग्रामो दग्धः इत्यादावपि लक्षणा न स्यात्। पदार्थैकदेशस्यापि पदार्थत्वे एकदेशेऽन्वयाद् अभिधयैव बोधोपपत्तौ लक्षणाया भागत्यागरूपाया वैयर्थ्यात्। पदार्थतावच्छेदकस्य तु पदार्थत्वमङ्गीक्रियत एव, अन्यथा घटत्वादेरपदार्थत्वप्रसङ्गात्। पदार्थतावच्छेकस्य प्रवृत्तिनिमित्तत्वात् तस्य च वाच्यत्वाङ्गीकारात्। उपस्थितिरपि घटत्वादेर्घटादेश्च विशेष्यविशेषणभावेनैव। स्वतन्त्रोपस्थितौ तु नानार्थत्वप्रसङ्गात्। एवञ्च विशिष्टस्यैव पदार्थत्वात् पदार्थतावच्छेदकस्यापि पदार्थान्तर्भावात् सोऽयमित्यादौ विरोधः स्यादेव। न च पदार्थतावच्छेदकस्य पदार्थान्तर्भावेऽपि न वाक्यार्थान्तर्भाव इति वाक्यार्थे तत्तेदन्तयोरप्रवेशाद् न विरोध इति वाच्यम्, संसृष्टपदार्थस्यैव वाक्यार्थत्वात्। संसर्गश्च विशेष्यविशेषणभावरूप एव। अन्यथा सोमेन यजेतेत्यादिना विशिष्टविधानासम्भवात्। सोमस्य यज्धात्वर्थयागेऽन्वये भावनायामन्वयायोगात्।

किञ्च, अरुणया पिङ्गाक्ष्येत्यादिवाक्ये द्रव्यावच्छेदकस्य गुणादेः क्रियान्वयायोग्यस्य निरपेक्षतृतीयाश्रुत्या क्रियाकरणत्वं विरुध्येत, पदार्थतावच्छेदकस्य क्रियान्वयायोगात्। एवञ्च तत्र साक्षात्क्रियायामन्वयासम्भवेऽपि कारकावच्छेकस्यापि कारकत्वाभ्युपगमात् क्रियान्वये कारकमन्तराकृत्य परम्परया वाऽन्वयसम्भवे तृतीया उपपादनीया। एवञ्चेयं सरणिर्नान्यत्र वारिता। तथा च

गामानयेत्यादिस्थलेऽपि द्रव्यावच्छेदकस्य गोत्वादेरुक्तरूपेण क्रियादौ अन्वयसम्भवे तत्र लक्षणायाः प्रसक्तिर्नास्ति।

न च पदार्थतावच्छेदकस्यापि प्रधानान्वये राजपुरुषमानयेत्यादौ राजपदार्थस्यापि उक्तरूपेणानयनादौ अन्वये द्वन्द्वापत्तिरिति वाच्यम्, तत्र राजपदस्य स्वसम्बन्धिनि उपलक्षणत्वात्। एवञ्च राजपदोपस्थापितस्वसम्बन्धस्यैव पुरुषावच्छेदकत्वात् तस्य चोक्तरूपेण आनयनपदार्थेऽन्वयेऽविरोधात्। अत एव कर्मधारयातिरिक्तसमासस्थले सर्वत्र लक्षणाश्रिता।

सोऽयमित्यादौ तु न तथा सम्भवति विशिष्टे पदशक्तिस्वीकाराद् विशिष्टयोश्च विरोधात्। परोक्षत्वापरोक्षत्वयोरेकव्यक्तौ विरोधात्। गेहे घट इत्यादौ च पदार्थतावच्छेदकगेहत्वविशिष्टस्य घटत्वविशिष्टेऽन्वये न विरोधः। पदार्थतावच्छेदकस्यापि परम्परया स्वाश्रयाधिकरणतानिरूपकत्वसम्बन्धेनान्वयः। यथा घटाभाव इत्युक्तौ घटत्वस्यापि स्वाश्रयप्रतियोगिकत्वसम्बन्धेनाभावेऽन्वयो व्युत्पन्नः। प्रकृते तु परोक्षत्वस्य देवदत्तेऽन्वये सति तत्रैवापरोक्षत्वस्यापि अन्वयाद् विरोधः। परोक्षत्वस्यापरोक्षत्वेन सहान्वये तु स्पष्ट एव विरोधः स्यादिति विना लक्षणां विरोधपरिहारासम्भवः।

न च तत्पदस्यैव देवदत्तमात्रे लक्षणया एतत्पदस्यैव वेति विरोधपरिहारे सम्भवति उभयपदलक्षणा व्यर्थेति वाच्यम्, तथा सति अखण्डदेवदत्तमात्रबोधस्तात्पर्यविषयो न सिध्येत्, संसृष्टत्वस्य तत्र सम्भवात्। अत उभयपदलक्षणावश्यं भाव्या।

अयमत्र निष्कर्षः—पदार्थतावच्छेदकस्यापि पदार्थे वाक्यार्थे कथमपि अन्वयो भवत्येव। तथा च यत्रान्वयविरोधस्तत्र लक्षणा। यत्र च न विरोधस्तत्र न लक्षणा, यथा 'गेहे घटः' इत्यादौ।

किञ्च, तत्तेदन्ता न पदार्थावच्छेदकम्, तयोः प्रवृत्तिनिमित्तत्वायोगात्, अपितु पदार्थ एव। तथा च विशिष्टस्यैव पदार्थत्वाद् विरोधः स्पष्ट एव। गेहे घट इत्यादौ तु गेहत्वस्यैव गेहपदप्रवृत्तिनिमित्तत्वात्। सोऽयं देवदत्त इत्यादौ तु पदप्रवृत्तिनिमित्तं तच्छब्दस्वरूपमेव। सोऽयं गौरित्यादौ तु गोत्वमेव। न च तत्तेदन्तयोरुपलक्षणविधयाऽवच्छेदकत्वं सम्भवति, विशिष्टस्यैव पदार्थत्वात्, निर्विशेषस्य च लक्ष्यार्थत्वात्।

अतस्तत्त्वमसीति वाक्ये सम्प्रदायानुसारं लक्षणैव मन्तव्या, यतो वाचो निवर्तन्ते इति श्रुत्यनुरोधात्।

ननु तत्त्वमसीत्यादौ तत्-त्वंपदार्थसमर्पकावान्तरवाक्यैरेव ब्रह्मात्मबोधात् तस्यैवानुवादकत्वं महावाक्यस्येति तस्य वैयर्थ्यमेव स्यात्। अखण्डार्थाभ्यु-

पगमेन पदार्थस्यैव वाक्यार्थत्वादिति चेत्, न, पदार्थस्य वाक्यार्थत्वेऽपि महावाक्यस्य जीवब्रह्मणोर्भेदभ्रमनिरासार्थत्वात् सार्थकत्वम्। यथा द्विचन्द्रभ्रम एकचन्द्र-साक्षात्कारादेव निवर्तते, नान्यथा, तथैव प्रकृतेऽपि। अनाद्यविद्या एकमपि तत्त्वम् आश्रयविषयभावेन व्यवच्छिद्य संसारकारणभेदभ्रमरूपापन्ना भवति। तत्र तत्त्वंवाक्यादैक्यसाक्षात्काराद् अहं ब्रह्मास्मीत्येवंरूपाद् भेदभ्रमो निवर्तते।

ऐक्यसाक्षात्कारस्तु दशमस्त्वमसीतिवाक्यवद् महावाक्यादेव भवति। यथा कश्चिद् नवभिरन्यैर्वनं गत व्याघ्रादिनापादनशङ्कया गणनाप्रसङ्गे आत्मान-मगणयित्वा नवसंख्यामेव प्रतिपन्नो दुःखितः केनचिद् सुहृदाप्तेन चोपदिष्टो दशमस्त्वमसीति दशमोऽहमेवेति प्रतिपद्यमानो दशमत्वेनात्मानमेव साक्षा-त्करोति, तथैव अनाद्यविद्यावशाद् आत्मानं सुखित्वदुःखित्वादिधर्मयुक्तं जरामरणगर्तनिमग्नं मन्यमानो जीवो दयालुना गुरुणा उपदिष्टस्तत्त्वमसीति वाक्येन अहं ब्रह्मास्मीति तत्त्वं साक्षात्करोति।

तत्र द्विविधं दर्शनम्—तत्त्वमसीति वाक्याद् अपरोक्षं ज्ञानं जायते, परोक्ष-मिति च ? तथा चोक्तं—वेदान्तपरिभाषायाम्—"तच्च प्रत्यक्षं द्विविधम् सविकल्पक-निर्विकल्पकभेदात्। तत्र सविकल्पकं वैशिष्ट्यावगाहिज्ञानं, यथा घटमहं जानामि इत्यादि। निर्विकल्पकं तु संसर्गानवगाहिज्ञानम्। यथा सोऽयं देवदत्तः, तत्त्व-मसीत्यादिवाक्यजन्यम्। ननु शाब्दमिदं ज्ञानं कथं प्रत्यक्षमिन्द्रियाजन्यत्वादिति चेत्, न, नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रम्, दूषितत्वात्। किन्तु योग्यवर्तमानविषय-कत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथा च सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन वृत्त्यवच्छिन्नदेवदत्तावच्छिन्नचैतन्ययोरभेदे सोऽयमिति वाक्यजन्यज्ञानस्य प्रत्यक्ष-त्वम्। एवं तत्-त्वमिति वाक्यजन्यज्ञानस्यापि। तत्र प्रमातुरेव विषयतया तदुभयो-र्भेदस्य सत्त्वात्[1]"।

एवञ्च सन्निकृष्टविषयत्वाद् अनुभवाद् अन्वयव्यतिरेकाच्चात्र शाब्दज्ञानस्य प्रत्यक्षत्वङ्गीक्रियत आचार्यैः। तथा हि दशमस्त्वमसीति वाक्यश्रवणसमनन्तरं श्रोतुः स्वात्मविषयकं प्रत्यक्षं जायते। न च तत्प्रत्यक्षं प्रमाणान्तराज्जातमिति युक्तम्, अनुभवविरोधात्, त्वदुक्ताच्छब्दाद् आत्मानं साक्षात्कृतवानहमित्य-नुभवात्। अन्वयव्यतिरेकादपि उक्तवाक्यश्रवणात् पूर्वं चक्षुर्मनोभ्यां ज्ञाना-दर्शनात्। तदुत्तरकाले च आत्मज्ञानदर्शनादिति शब्दादेव ज्ञानं जातमिति निर्धारणात्।

न च परोक्षज्ञानजनकत्वरूपशब्दस्वभावभङ्गप्रसङ्ग इति वाच्यम्, शब्दस्य

१. वेदान्तपरिभाषा—पृ० ३३।

परोक्षज्ञानजनकत्वमेवेत्यस्यासिद्धेः। मनोवदुभयजनकत्वमेव फलबलात् कल्प्यम्। न च शाब्दत्वापरोक्षत्वयोर्जात्योः संकरः। तथाहि, गामानयेति शाब्दे ज्ञाने शाब्दत्वमस्ति, अपरोक्षत्वं विना। घटोऽयमिति इन्द्रियजन्ये ज्ञानेऽस्ति अपरोक्षत्वं शाब्दत्वं विना। इह तूभयमिति भवति सांकर्यमिति वाच्यम्, तत्त्वमसीतिज्ञाने शाब्दत्वानङ्गीकाराच्छाब्दत्वजातेः परोक्षत्वव्याप्यत्वात्। उपाधिसंकरवज्जातिसाङ्कर्यस्यादूषकत्वात्।

नन्वेवं सति शब्दादेवापरोक्षज्ञाने जाते सति श्रवणमननिदिध्यासनानां क्वोपयोग इति चेत्, अत्रोच्यते—तत्त्वमसीति वाक्याद् अपरोक्षज्ञाने जातेऽपि असम्भावनाविपरीतभावनानिवर्त्तकत्वात् श्रवणादीनामुपयोगः। तथा च प्रथमं शब्दादपरोक्षज्ञानं जायते विचारप्रयोजकम्। तदनन्तरमसम्भावनोदये विचारशास्त्रं प्रवर्तते। तत्र प्रमाणगताऽसम्भावना श्रवणेन प्रमेयगताऽसम्भावना मननेन निवर्तते। विपरीतभावना च निदिध्यासनद्वारेति बोध्यम्। एतदनन्तरं पुनरपि महावाक्यमनुसन्धीयमानमविद्यानिरसनसमर्थं तत्त्वसाक्षात्कारमुत्पादयति।

न च "दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" (कठ०उ० १।३।१२), "मनसैवेदमाप्तव्यम्" (कठ० ४।११) इत्यादिश्रुत्या च मनोगम्यत्वमेव प्रतिपाद्यते, तत् कथं शब्दाद् अपरोक्षमिति वाच्यम्, तत्र तत्त्वमस्यादिवाक्याज्जनयितव्ये साक्षात्कारे सहकारित्वस्य मनसोऽपि श्रुत्या प्रतिपादनाद् विरोधाभावात्।

भामतीकारास्तदनुयायिनस्तु नैतन्मतं सहन्ते। तथा हि शब्दस्वाभाव्यात् तस्मात् परोक्षमेव ज्ञानं जायते। अपरोक्षज्ञानं तु श्रवणमनननिदिध्यासनाभ्यासजन्यसंस्कारप्रचयोपचितमनोजन्यमेव। अन्यथा श्रवणादीनां वैयर्थ्यापत्तेः। एतत् पक्षेऽपि असम्भावनादिनिवर्तकतोपपत्तेस्तेषाम्। श्रुत्या च मनसैवेदमाप्तव्यमित्यादिरूपया मनोजन्यत्वमेव प्रतिपाद्यते। न च सहकारित्वमेव मनसो बोध्यत इति वाच्यम्, तस्य सिद्धत्वाद् बोधनवैयर्थ्यात्। मनसैवेति एवकारेण शब्देन्द्रियादीनां व्यावृत्तेः स्पष्टत्वात्।

एवञ्च तत्त्वमस्यादिवाक्यम्, अपरोक्षज्ञानजनकं दशमस्त्वमसीति वाक्यवत् सन्निकृष्टविषयप्रतिपादकवाक्यत्वाद् इत्याद्यनुमानस्यापि अप्रयोजकत्वम्। शब्दस्य परोक्षज्ञानजनकत्वस्य स्वभावसिद्धत्वाद् दृष्टान्तासिद्धेश्च। दशमस्त्वमसीत्यादिवाक्ये शब्दसहकृतान्नेत्रादेव साक्षात्कारः। ननु मनोजन्यत्वे आत्मसाक्षात्कारस्य कामिनीसाक्षात्कारवदनाश्वासप्रसङ्ग इति वाच्यम्, श्रुतिमूलकत्वेनाश्वाससद्भावात्। न च यन्मनसा न मनुते (केन १।४) इत्यादि श्रुतिविरोधः। "यतो वाचो निवर्तन्ते"(तै०२।४।१) इति तव मते श्रुतिविरोधसद्भावात्। तस्माच्छास्त्राचार्याहितसंस्कारासमवहितमनोगम्यत्वं श्रुत्या निषिध्यते, तादृशसंस्कारसहितमनोगम्यत्वञ्च बोध्यत इति युक्तम्।

एतन्मते च महावाक्यार्थबोधे जाते मननादिना ऐक्यसाक्षात्कारादनन्तरं भेदभ्रमव्युदास इति सर्वथा तत्त्वमसीत्यादिमहावाक्यानां न वैयर्थ्यम्। अवान्तर-वाक्याज्जायमानाद् बोधाद् विशेषात्। अत एव न वाक्यस्याप्रामाण्यमपि भेदभ्रम-निवारणद्वारा अपूर्वबोधात्।

असिपदमत्र सर्वदा संसारासंसारदशायामुभयोरैक्यबोधनाय। नित्ययोरैक्य-सत्ताया सर्वकालिकत्वात्। अन्यथा असिपदाभावे तत्त्वमित्युक्तौ किं तदहमासमित्यु-पदिशति, किं वा अतदप्यहं संपदाद्युपासनाय तदहं भविष्यामीति। किं वा त्रिष्वपि कालेषु तदहमस्मीत्यादिसंशयात् तदर्थाप्रतिपत्तेः। असिपदोपादाने तु तत्संशयोच्छेदात् सर्वदैक्यं प्रतीयते। एवं च सति महावाक्याज्जीवात्मनोरैक्यावगमे सति तत् सत्यं स आत्मा तत्त्वमसीत्यादौ अतत्त्वमसीत्यादिच्छेदः, तस्य त्वमित्या-दिविग्रहोऽपि परास्तो वेदितव्यः, अतात्पर्यविषयत्वाद् भेदस्य।

"ननु तत्त्वमसीत्यादिवाक्येन न तावद् जीवेश्वरयोरैक्यं बोध्यते; अपि तु शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यन्तत्वदर्शनाद् ब्रह्मशरीरभूतजीव-वाचकत्वंपदस्य ब्रह्मपर्यन्तत्वेन तत्त्वमिति निर्देशः शरीरशरीरिभावमूलक एव, यस्यात्मा शरीरमित्यादिश्रुतेः। एवञ्च लक्षणाश्रयणमभेदबोधनञ्च व्यर्थमेवेति चेत्, न, शरीरिपर्यन्तत्वे शरीरशब्दस्य लक्षकत्वं वा शक्तत्वं वा शरीरविषयवृत्त्यैव तत्प्रतिपादकत्वं वा। नाद्यः, मुख्यात्वानुपपादनात्। न द्वितीयः, शरीरवाचिना-मित्यसाधारण्येन निर्देशानुपपत्तेः। प्रवृत्तिनिमित्तमनुष्यत्वादिजातेः शरीरिण्य-वृत्तेश्च। न तृतीयः, अन्यविषयवृत्तेरन्यानुपयोगेन शरीरशरीरिणोरनादिभ्रमसिद्धा-भेदनिबन्धनोऽयं प्रयोगो वाच्यः। तथा चात्रापि अभेदनिबन्धन एवायं प्रयोगः। अभेदस्तु बाधकाभावात् अत्र तात्त्विक इति विशेष इत्यद्वैतसिद्धिग्रन्थे स्पष्टम्[1]"। एतेन शरीरशरीरिभावमूलकोऽयं प्रयोग इत्यपास्तम्। एवञ्च तत्त्वमसीत्यादि-वाक्यैरुभयपदलक्षणयाखण्डार्थबोधो जायत एव।

ननु तत्त्वमसीत्यादौ पदानां लाक्षणिकत्वेनानुभावकत्वं न स्यात्। अनुभावकत्वस्यैव अभिहितान्वयवादे अन्विताभिधानवादे च शक्तित्वात्। यदि लाक्षणिकेष्वपि तत् स्यात्, तदा मुख्यामुख्यविभागानुपपत्तिरिति चेत्, न, लाक्षणिकं नानुभावकमित्यस्य लाक्षणिकं पदं स्वजन्यया स्मृत्या नानुभावकमित्यर्थकत्वात्। स्वजन्यशक्यस्मृतिजन्यलक्ष्यस्मृत्या लाक्षणिकस्यापि अनुभावकत्वस्वीकारात्। स्वजन्यशक्यस्मृतिमात्रद्वारकानुभावकत्वस्यैव शक्तित्वात्। अतो न लाक्षणिकस्य लक्ष्यार्थशक्तत्वमित्यादिन्यायरत्नावल्यां विवेचितम्। तथा चोभयपक्षे लाक्षणिक-सर्वपदयुक्तवाक्यस्थले पदानामनुभावकत्वाभावेऽपि पदजन्यशक्योपस्थितिजन्यलक्ष्यो-पस्थितेरेव वाक्यार्थानुभावकत्वम्।

१. अद्वैत० पृ० ८३५।

अत्राचार्याणां मतभेदेन तत्-त्वंपदवाच्यार्थभेदानुपस्थाप्य तत्र लक्षणा कीदृशीति विचार्यते।

तत्र वार्तिककारपादानां मते—अज्ञानोपहित आत्मा, अज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेकादन्तर्यामी साक्षी, ईश्वरो जगत्कारणश्च कथ्यते। बुद्ध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यते, अत्राज्ञानोपहित इत्यनेन अज्ञानोपाधौ प्रतिबिम्बभावापन्नत्वाद् अन्तर्गत-स्तादात्म्यापन्नो योऽज्ञानोपहितात्मन आभासः प्रतिबिम्बः, स एव गृह्यते। एवमेव जीवपक्षेऽपि बोध्यम्। आत्मा च विवक्तः, बिम्बप्रतिबिम्बाभेदस्य यावदुपाधिसत्त्वं भानात् सोऽन्तर्यामी। तस्य अज्ञाने चिदाभासस्य बुद्धौ चिदाभासस्य च स्वरूपतो मिथ्यात्वम्, बिम्बाभेदग्रहाच्च साक्षित्वकर्तृत्वादि चोपपद्यते। अयमेवाभासवाद उच्यते। अस्मिन् पक्षे तत्त्वमादिपदे जहल्लक्षणैव। साभासस्योपाधेर्वाच्यार्थस्य हानात् चितश्च वाच्यार्थकोटिप्रवेशाभावात्। उक्तञ्च संक्षेपशारीरके—

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तदाहम्।
शब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे॥

अस्मिन् पक्षे चिदाभास एव चिदभेदेन यावदुपाधिसत्वं प्रतीयमानस्त-त्पदवाच्यः। एवमहङ्कारोपाध्यन्तर्गतप्रतिबिम्ब एव जीवस्त्वंपदवाच्य इति जहती लक्षणा। न चात्र पक्षे आभासस्य बद्धत्वात् केवलचैतन्यस्य बिम्बस्थानीयस्य मुक्तत्वाद् बन्धमोक्षयोर्वैयधिकरण्यं स्यात्। तथा च स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम्। केवलचैतन्यस्यैवाभासद्वारा बद्धत्वस्वीकारात्। अथ चास्मिन् पक्षे यदि आभासाविविक्तचैतन्यमपि तत्त्वंपदवाच्यकोटिप्रविष्टम्, तदा जहदजहल्लक्षणैव मन्तव्या, वाच्यैकदेशस्य चैतन्यस्यापरित्यागात्।

विवरणकारास्तु अज्ञानोपहितं बिम्बचैतन्यमीश्वरः। अन्तःकरणं तत् संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवः। तत्र बिम्बचैतन्यमज्ञानोपाध्यन-न्तर्गतचैतन्यम्, तस्य स्वरूपतः सत्यत्वेऽपि प्रतिबिम्बत्वरूपेण मिथ्यात्वम्। अन्तः-करणं मनः, तत्संस्कारश्चेत्यन्यतररूपे अज्ञाने प्रतिबिम्बितत्वमित्यर्थः। तत् संस्कारश्च सूक्ष्मावस्थं मनः। अस्मिन् मते बुद्धिभेदात् जीवनानात्वं सिध्यति। तत्र स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वाद आभासवादः। स्वरूपतः सत्यं प्रति-बिम्बत्वरूपेण मिथ्याभूत बिम्बमेव प्रतिबिम्बमिति विवरणकारस्य प्रतिबिम्बवाद इति विवेकः। अस्मिन् मतेऽपि तत्त्वमसीत्यादिवाक्ये जहदजहल्लक्षणैव।

संक्षेपशारीरककारास्तु अज्ञानप्रतिबिम्बितंचैतन्यमीश्वरः। बुद्धिप्रतिबिम्बितं चैतन्यं जीवः। बुद्धिभेदाज्जीवभेदाः। "रूपं रूपं प्रतिरूपो बभूव" (क० ५।१०) इत्यादिश्रुतयोऽत्र मानम्। अस्मिन् पक्षेऽपि प्रतिबिम्बस्वरूपचितः पारमार्थिकत्वाद्

जहदजल्लक्षणैव। विवरणसंक्षेपशारीरकमतमेव प्रतिबिम्बवादशब्देनोच्यते। भामतीकारास्तु—अज्ञानविषयीकृतं चैतन्यमीश्वरः, अज्ञानाश्रयीभूतञ्च जीव इति। अस्मिन् मतेऽपि उक्तस्थले जहदजहल्लक्षणैव। अयमेवावच्छेदवाद उच्यते।

ननु ब्रह्मणः सर्वाधिष्ठानत्वाद् अज्ञानाश्रयत्वमपि तस्यैव युक्तम्। अत एवोक्तं संक्षेपशारीरके "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला" इति चेत्, न, ब्रह्म नास्ति, अहमज्ञ इत्यादि व्यवहारो यदाश्रितः, अज्ञानमपि तत्कारणं तदाश्रितमेवेति युक्तत्वात्, कार्यकारणयोः सामानाधिकरण्यात्। उक्तव्यवहारश्च जीवाश्रित इत्यज्ञानमपि जीवाश्रितमेव। न चाज्ञानाश्रयस्यैव जीवत्वाज्जीवाश्रितमज्ञानमिति अन्योन्याश्रयः, अज्ञानाश्रयत्वे जीवत्वं जीवत्वे चाज्ञानाश्रयत्वमिति।

किञ्च आत्माश्रयदोषोऽपि अज्ञानाश्रये जीवे अज्ञानाश्रयात् स्वस्मिन् स्वाश्रयादिति वाच्यम्, अनादित्वाज्जीवस्याज्ञानादेश्चान्योन्याश्रयाभावात्। अज्ञानोपहितत्वमेवजीवत्वम् न तु अज्ञानाश्रयत्वमिति जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावान्नात्माश्रयः। नहि दण्डत्वोपहितस्य घटकारणत्वे दण्डत्वस्यापि कारणत्वम्। अज्ञाननानात्वाच्च जीवनानात्वमस्मिन्पक्षे। प्रतिजीवञ्च प्रपञ्चभेदः। सादृश्याच्च प्रत्यभिज्ञानम्। एवञ्च जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वम्। ईश्वरस्य तु सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारः। "यतो वा इमानि" इत्यादिश्रुतिः जीवेश्वराभेदपरा। उक्तञ्च भामत्यां "विप्रतिषेधाच्चासमञ्जसम्[1]" इति सूत्रभाष्ये विभागे विद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पो न तु प्रतिबिम्बः" इति। तत्त्वज्ञानञ्च स्वाश्रयजीवमात्रदृश्यस्यैवोच्छेदकम्। एवञ्च प्रपञ्चभेदे सति एकस्य ज्ञानेन प्रपञ्चनाशेऽपि अपरस्यानाशाद् व्यवस्था। निरूपितञ्चैतत् सर्वं सिद्धान्त बिन्दौ[2]।

ननु यदि अविद्या जीवाश्रिता, तर्हि भामतीकारसंक्षेपशारीरककारयोराचार्ययोर्मतभेद इति चेत्, अत्रोच्यते गुरुचरणैः श्रीमद्देवस्वरूपमिश्रैर्वेदान्तमूर्तिभिः। तथा हि अविद्या हि आच्छाद्यते जीवचैतन्यम् इति। आच्छाद्यतासम्बन्धेन तस्या अविद्याया जीवाश्रितत्वमित्येव भामतीकाराणां तात्पर्यम्। एवञ्च ब्रह्मणोऽविद्याश्रयत्वपक्षोऽपि न विरुध्यते। आश्रयत्वविषयत्वभागिनीति संक्षेपशारीरकमतमपि समञ्जसं भवतीति युक्तमिति।

अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बचैतन्यं जीव इति अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानोपहितं जीव इति वा पक्षो दृष्टिसृष्टिवाद एक जीववादाख्य उच्यते। अस्मिन् पक्षे जीव एव स्वाज्ञानवशाद् जगतोऽभिन्ननिमित्तोपादानम्। दृश्यं च सर्वं प्रातिभासिकम्। जीवनानात्वं भ्रमः। देहभेदाद् भ्रमोपपत्तिः। न चास्मिन् पक्षे एकजीववादे एकस्य मुक्तौ सर्वमुक्तिप्रसङ्गः, संसारो-

१. ब्र० सू० १।२।२;  २. सि० बि० पृ०—६१।

च्छेदप्रसङ्गश्चेति वाच्यम्, एकस्यैव मोक्ष इति सिद्धान्तात्। शुकादीनाञ्च मोक्ष-श्रवणमर्थवादः। अद्यावधि कोऽपि न मुक्त इति कल्पनात्। महावाक्ये च तत्-पदमनन्तसत्यादिपदवद् अज्ञानानुपहितचैतन्यस्य लक्षणयोपस्थापकम्।

ननु जीवस्य जगत्कारणत्वे सति यः सर्वज्ञ इत्यादिश्रुत्या सर्वज्ञत्वापत्तिरिति चेत्, न, उक्तश्रुतौ सर्वविषयकज्ञानवत्त्वमात्रं विवक्षितम् न तु युगपत्सर्वज्ञानवत्त्वम्। तथा च जीवस्यापि क्रमेण तत्सम्भवान्न दोषः। अथवा यः सर्वज्ञ ईश्वरस्तेन सहा-भेदो बोध्यते जीवस्यानया श्रुत्या। एवमेव यतो वा इमानीत्यादिश्रुत्यापि अभेद एव बोध्यते। अस्मिन् पक्षे च रजतादिवत्प्रातिभासिकत्वमेव प्रपञ्चस्य स्वीक्रियते। तथा हि, व्यावहारिकत्वेन संप्रतिपद्यमानानां घटादीनां प्रपञ्चानां स्वस्वकारणा-दुत्पद्यमानानां प्रत्यक्षादिकारणसमवधानदशायां प्रत्यक्षादिकम्, अन्यदा तु विद्य मानानामपि तेषां न प्रत्यक्षादिकमिति तत्तदाकारवृत्तिदशायामेव तत्सृष्टिः। कल्पितस्याज्ञाततादशायां स्थितौ मानाभावात्। साक्षादेवाविद्याजन्यत्वमुपेयं तेषां न त्ववयवक्रमेणेति बोध्यम्। अत्र च प्रमाणम्—"यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः" (बृ० २।१।२०) इत्यादिश्रुतिरेव सुप्तोत्थितजीवात् प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम्। स्वप्न-वज्जगत्प्रतीतिरिति बोध्यम्। एवञ्च तत्त्वमसीत्यादिवाक्यैः सृष्टिदृष्टिपक्षे दृष्टि सृष्टिपक्षे वा लक्षणयैव जीवात्मपरमात्मनोरैक्यं बोध्यते।

तदेवं महाकारुणिकश्रोत्रियब्रह्मनिष्ठाचार्योपदेशाच्छ्रवणमननादिसहकृत निष्कामकर्मोपासनानुष्ठानविशुद्धप्रशान्तान्तःकरणस्य शिष्यस्य सर्वानर्थव्रातबीज-भूतसविलासाविद्याविध्वंसिनी परमानन्दाखण्डस्वस्वरूपाविर्भावपुरस्कारिणी सिद्धिदात्री ब्राह्मी मनोवृत्तिरुदेति अहं ब्रह्मास्मीति, अहं ब्रह्मास्मीति।

॥ इति तत्त्वमस्यादिवाक्यानामखण्डार्थत्वनिरूपणम् ॥

# अथ मोक्षनिरूपणम्

ननु "तरति शोकमात्मविद्" इत्यादिश्रुत्या धनवान् सुखीत्यादावुद्देश्यतावच्छेदकप्रयोज्यत्वं विधेये भासत इति दृष्टचरत्यायात् सर्वशोकतरणस्य प्रयोजकत्वमात्मवेदने बोध्यते। तत्र 'ऋते ज्ञानान्न मुक्तिः' इति श्रुतेः, मुक्तेर्ज्ञानैकप्रयोज्यत्वात् किं ज्ञानं का च मुक्तिरिति जायते जिज्ञासा मुमुक्षोः। तत्र ज्ञानपदार्थः पूर्वमुक्तः, अहं ब्रह्मास्मीति नीरन्ध्रमणिमयूखवदखण्डाकारमनःपरिणामविशेषः। मोक्षपदार्थः क इति जिज्ञासायां विविधमतव्याकुलतया संदेहप्रयुक्तायां किञ्चित् प्रस्तूयते। अत्र सौगताः—नीलपीताद्याकारैः रागद्वेषादिदोषैः विषयविभ्रमैश्च प्रवृत्तितत्फलोदयपर्यन्ते दूषितानि यानि विज्ञानानि, तेषु तत्त्वपरिभावनया निवृत्तेषु विभ्रमेषु विशुद्धविज्ञानचरमक्षणोदयो मोक्षः। एवं विषयाकारोपप्लुतविज्ञानसन्तानोपरमो मोक्षः। उक्तं हि "प्रदीपस्येव विज्ञानं विमोक्षस्तस्य तायिनः"। तत्र पूर्वलक्षण योगाचारादीनाम्। द्वितीयं तु माध्यमिकानामिति बोध्यम् तन्न युक्तम्, उक्तरूपविज्ञानोदयः सन्तानिक्षणस्य पुरुषार्थश्चेत् तस्य स्वरसतो विनाशात् फलिनोऽभावात् फलाभावात्। न चोक्तपुरुषार्थः सन्तानस्यैव, तथाविधसन्तानोदयेऽपि मुमुक्षोरुपप्लुतसन्तानरूपस्योपरमात्। बन्धमोक्षयोर्वैयधिकरण्याच्च। अपुरुषार्थत्वादेव नापि विज्ञानसन्तानोपरमो मोक्षो युक्तः। विज्ञानसन्तानस्यात्मरूपतया तदुच्छेदप्रसंगात्, तस्य चापुरुषार्थत्वात्। एवंविधसर्वप्रियात्मध्वंसरूपे मोक्षे न कस्यचित्प्रवृत्तिः स्यात्। न हि बद्धनाश एव मोचनार्थमुक्तिरिति युक्तम्। अपि तु सत एव बन्धविश्लेषः। किञ्च, विशुद्धविज्ञानोदयपक्षे नोभयोः किञ्चित् कारणमुपपद्यते, सर्वस्य क्षणिकत्वात्। सन्तानस्य च अवस्तुत्वात् सन्तानिनो विज्ञानक्षणस्य च प्रतिक्षणमपूर्वोत्पन्नत्वात्। किञ्च, श्रुत्यादिप्रमाणेनात्मनः स्थिरत्वे सिद्धे सौगतमतस्य निरस्तत्वान्न तन्मतमुक्तिर्युक्ता।

ननु एकविंशतिदुःखध्वंसो मोक्ष इति तार्किकमतमेव युक्तम्। तथाहि एकविंशतिप्रकारं दुःखम्—इन्द्रियषट्कम्, विषयषट्कम्, बुद्धिषट्कम्, शरीरम्, सुखम्, दुःखम्। एतेषां दुःखानामात्यन्तिकी निवृत्तिर्मुक्तिरिति चेत्, न, अतीतस्य निवृत्तिरिति चेन्मन्यते, तदा तस्यात्यन्तं निवृत्तत्वाद् असाध्यत्वाद् निवृत्तिर्नोपयुज्यते। वर्तमानस्य च विरोधिगुणप्रादुर्भावनिवर्त्यत्वाद्, अनागतस्य निवर्तयितुमशक्यत्वात्। किञ्च, दुःखादिवत् सुखस्यापि निवृत्तेरपुरुषार्थत्वाद् मुमुक्षुप्रवृत्तिर्नोपपद्येत। एवमेव दुःखात्यन्ताभावो मोक्षः। एतज्जीवनिष्ठदुःखसमानकालीन-

दुःखध्वंसातिरिक्तैतन्निष्ठदुःखध्वंसो मुक्तिः। एतन्निष्ठदुःखप्रागभावासमानकालीनैतन्निष्ठदुःखध्वंसो मोक्षः। ज्ञानाजनकसंस्कारजनकजन्यसाक्षात्कारविषयो दुःखध्वंसो मोक्ष इत्यादितार्किकमतसिद्धानि लक्षणानि तत्त्वप्रदीपिकायामुपपाद्य खण्डितानीति तत्रैव द्रष्टव्यम्।

प्रकृतिपुरुषविवेकदर्शनात् पुरुषस्य स्वरूपावस्थानं मुक्तिरिति सांख्यमतमपि न युक्तम्, सुखसाक्षात्कारस्यैव पुरुषार्थत्वोपपादनात्, आत्मनश्च सुखत्वानभ्युपगमान्न पुरुषस्य स्वरूपावस्थानं पुरुषार्थः। किञ्च बन्धमोक्षयोर्वैयधिकरण्यापातः, पुरुषस्य नित्यमुक्तत्वाद् बन्धनस्य च बुद्धिगतत्वाङ्गीकारात्।

न च—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण[1]॥

इतिदर्शनाद् उपचाराद् बुद्धिगतावेव बन्धमोक्षौ पुरुषे व्यपदिश्येते इति वाच्यम्, निमित्ताभावाद् उपचारानुपपत्तेः, उदासीनस्य च स्वस्वामिभावादेर्निमित्तस्य सम्भवाभावात्।

अतोऽविद्यास्तमय एव मोक्षः स्वीकर्तव्यः। अविद्या चात्मनस्तिरोधानं बन्धः। एवञ्चाविद्यैव बन्धः। उक्तञ्च नयनप्रसादिन्याम्—"सत्यज्ञानानन्तानन्दैकरसब्रह्मात्मनोऽविद्यया तिरोधानं बन्धः। विद्यया तन्निवृत्तिश्च मोक्षः[2]"।

ननु केयमविद्यानिवृत्तिः सद्रूपिणी, असद्रूपिणी, उभयरूपिणी, अनिर्वचनीया वा पञ्चमप्रकारा वा आत्ममात्रं वेति। नाद्यः, प्रथमे यदि आत्मव्यतिरिक्ता, तदा द्वैतापत्तेः। आत्मानतिरिक्तत्वे तस्याः सदानिवृत्तेः संसारानुपलब्धिप्रसङ्गात्। न द्वितीयः, असद्रूपत्वे खपुष्पादिवज्ज्ञानाधीनत्वासम्भवात्। न तृतीयः, विरोधात्। न चतुर्थः, अविद्यातत्कार्ययोरन्यतरत्वापातात्। नाप्यात्ममात्रमविद्यानिवृत्तिः, एवं सति सदानिवृत्या संसारानुपलब्धिप्रसङ्गः स्यात्। तस्मान्नाज्ञान निवृत्तिरुपपन्नेति चेत्, न,

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।
उपलक्षणनाशेऽपि स्यान्मुक्तः पाचकादिवत्[3]॥

यथा लोके पचनादिक्रियानिवृत्तावपि पाचक इति प्रतीयते व्यवह्रियते च, तथेहापि उपलक्षणस्य ज्ञातत्वस्य नाशेऽपि मुक्तिः स्यादिति आत्मैवाज्ञाननिवृत्तिरित्येव युक्तः पक्षः। तत्र न केवलमात्मैव निवृत्तिः; अपि तु ज्ञातत्वेनोपलक्षित एव सः। उक्तञ्च तत्त्वप्रदीपिकायाम्—"इहापि अनृतजडदुःखानात्मद्वतविरोधि सत्यज्ञानानन्तानन्दाद्वयलक्षणं ब्रह्मैव वेदान्तवाक्यजनितब्रह्मैकाकारान्तःकरणपरिणाम-

१. सां० का० ५९। २. चि० पृ० ६०२। ३. चि० पृ० ६४२।

दर्पणप्रतिबिम्बितं सविलासाज्ञाननिवृत्तिरिति युक्तमभ्युपगन्तुम्[1]"। एवञ्च आत्मरूपा निवृत्तिरिति पक्षे संसारानुपलब्धिरूपदोषो निरस्तः, ज्ञातत्वस्योपलक्षणात्। अविद्यानिवृत्तेश्च नित्यत्वान्न संसारस्य पुनरुज्जीवनादयो दोषाः प्रादुर्भवन्ति। शुक्तिशकलादौ शुक्तिसाक्षात्कारेण निवृत्तस्याज्ञानस्य तद्विलासस्य वा पुनरुन्मज्जनादर्शनात्। पुनरुद्भवो रजतादिविभ्रमस्याज्ञानान्तराधीनत्वात्। यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात्। इह च भूयश्चान्ते विश्वमायानिवृतिरिति श्रुतेः तत्त्वज्ञानेन सम्पूर्णस्य सविलासस्याज्ञानस्य नाशे न पुनः संसारोन्मज्जनप्रसङ्गशङ्का।

ननु आत्मरूपैवाज्ञाननिवृत्तिरित्यत्र किं प्रमाणमिति चेत्, श्रुतिरेवेति। तथाहि "यस्मिन् सर्वाणि भूतानि आत्मैवाभूद् विजानतः", "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिश्रुतिः प्रमाणम्। तत्रात्मरूपत्वपक्षे एवंविधाः श्रुतयो मुख्यार्थतया आञ्जस्येनोपपद्यन्ते।

अत एव—

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः॥

इति श्रीमधुसूदनसरस्वतीभिरद्वैतसिद्धौ मंगल एवोक्तम्। तत्रैव च मोक्षपदार्थनिर्णयावसरे लघुचन्द्रिकाकारा अपि प्राहुः—"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः" "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः"। अविद्यास्तमयः संस्कारादिरूपेणाप्यनवस्थानम्। सा च स्थूलरूपा संस्कारादिरूपा च। तथा च विदेहताकालीनोऽस्तमय एव मुख्यो मोक्षः। ज्ञातत्वोपलक्षित आत्मापि विदेहताकालीन एव[1]"। तत्र अविद्यास्तमयो मोक्ष इत्यनेन वाक्येन वार्तिकेन अविद्यारूपबन्धशून्यत्वस्य मोक्षपदार्थत्वमुक्तम्। द्वितीयेन तु वार्तिकेन तादृशमोक्षपदार्थस्य ज्ञातात्मत्वोक्त्या आत्मरूपता बोध्यते, अविद्यारूपबन्धाभावस्याधिकरणरूपत्वात्। एवञ्चोभाभ्यां वाक्याभ्याम् अविद्यारूपबन्धशून्यात्मनो मोक्षपदार्थत्वं सिद्धम्। ज्ञातत्वञ्च अखण्डधीविषयत्वम्। तच्च तत्रोपलक्षणीभूतमिति। तदुपलक्षितत्वञ्च स्वपूर्वकालीनप्रतियोगिसमानाधिकरणतदभाववत्त्वं तत्सम्बन्धोत्तरकालीनतत्समानाधिकरणतदभाववत्त्वं वेत्यादि तत्रैव विट्ठलेशोपाध्यायैः स्पष्टम्। एवञ्चाविद्यानिवृत्तिर्मोक्षः, सा चात्ममात्रमिति पक्षोऽवस्थितः।

नन्वविद्याबन्धनिवृत्तिरित्यत्र निवृत्तिपदार्थः कः? न हि ज्ञानेनाविद्यानिवृत्तिरित्यादिवाक्ये कारकहेतौ तृतीयानिर्देशाद् ज्ञानजन्यनिवृत्तिः ध्वंसरूपैव ग्राह्या। तथा सति तादृशाविद्याध्वंसस्य निवर्तकाभावात् तस्य सत्त्वात् विद्वान्

१. चि० पृ० ६०२।

नामरूपाद्विमुक्त इत्यादिश्रुतिर्बाधिता स्यात्। नामरूपविमुक्तौ वेदनस्य प्रयोजकत्वाद् ध्वंसरूपदृश्यस्य चाद्यापि सत्त्वाद् विमोचनाभावात् सर्वदृश्योच्छेदाभावात्। न च तत्त्वज्ञानमेव दृश्यस्य, तस्य ध्वंसस्यापि नाशक इति वाच्यम्, तत्त्वज्ञानोत्पत्तिद्वितीयक्षणे हि सर्वदृश्येन सह तत्त्वज्ञानस्यापि कतकरजोन्यायेन नाशान्नाशस्य नाशासम्भवात्। ननु तत्त्वज्ञानेन सर्वदृश्यनाशे सति तत्त्वज्ञानस्य कुतो नाश उपपद्यते। न च तत्वज्ञानं सर्वमज्ञानं निवर्तयत् स्वात्मानमपि निवर्तयतीति वाच्यम्, एकस्मिन् नाश्यनाशकभावविरोधात्। एवञ्च सति एकस्य कर्तृत्वकर्मत्वविरोधोऽपि आपतति। किञ्च, निवर्त्यतानिवर्तकतावच्छेदकयोरैक्याद् अनुगमाभावाद् भेदघटितो निर्वत्यनिवर्त्तकभावो नोपपद्यते। किञ्च, तत्त्वज्ञानस्यैव नाशकत्वोपगमे बाघकाभावाद् उत्पत्तिक्षणद्वितीयक्षण एव तत्त्वज्ञानं नश्येदिति तस्य क्षणिकत्वापत्तिः।

यदि च न तत्त्वज्ञानं स्वनिवर्त्यमपि तु स्वत एव वह्न्यादिवदुपशान्तो निमित्ताभावादिति स्वीक्रियते। तदापि ज्ञानेन सविलासाज्ञाननिवृत्तिरिति सिद्धान्तो भज्येत। ज्ञानं विनाऽपि ज्ञानस्य मनोवृत्तिरूपस्योक्तस्य उक्तप्रकारेण निवर्तनात्। किञ्च, स्वतोनिवृत्तिपक्षेऽपि क्षणिकत्वापत्तिदुरुद्धरा स्यादिति चेत्, न, तत्त्वज्ञानेन सकलदृश्योपादानरूपाज्ञाननाशे सत्युपादाननाशाद् उपादेयस्यापि नाशावश्यम्भावात् तत्त्वज्ञानस्यापि मनोवृत्त्यंशस्य नाशध्रौव्यात्। एवं विधया तत्त्वज्ञानमेव स्वोपादाननाशद्वारा स्वनाशकमिति स्वीकारे न दोषः। तत्त्वज्ञानत्वेन नाशकत्वमाविद्यिकत्वेन च नाश्यत्वमिति कल्पनादनुगमोऽपि युक्तः। अत एव न कर्मकर्तृविरोधो, न क्षणिकत्वम्, उपादाननाशानन्तरमेव स्वनाश इति स्वीकारात्।

अथवा तत्त्वज्ञानजन्यदृश्यनाशस्यैव तत्त्वज्ञाननाशहेतुत्वं स्वीकर्तव्यम्। उभयथापि तत्त्वज्ञाननाशसद्भावात् सर्वदृश्योच्छेदाभावाद् उक्तश्रुतिबाधापत्तिरूपदोषस्य तदवस्थतैवेति। तन्नाशकत्वस्वीकारेऽपि उक्तदोषावस्थितिरेव। किञ्चैवं नाशपरम्परास्वीकारे प्रमाणाभावः। अत एव भावाद्वैतस्वीकारे श्रुतेस्तात्पर्यमिति परास्तम्। एवंविधसङ्कोचे प्रमाणाभावादिति चेत्, मैवम्, तत्त्वज्ञानाधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानधिकरणत्वं दृश्योच्छेदः। शास्त्रीयचरमतत्त्वज्ञानोत्पत्तिक्षणे दृश्याधिकरणक्षणपूर्वत्वं नास्ति, तदुत्तरतादृशक्षणस्याप्रसिद्धत्वात्। नानाजीवपक्षे तज्जीवीयचरमतत्त्वज्ञानक्षणे तज्जीवीयदृश्याधिकरणकालपूर्वत्वाभावो वाच्यः। तत्र तत्त्वज्ञानाधिकरणकाले दृश्यपूर्वत्वाभाव इत्येतावन्मात्रोक्तौ दृश्यपूर्वत्वाभाव इत्यस्य दृश्यप्रागभावकालवृत्तित्वाभाव एवार्थः स्यात्। तथा च परमतत्त्वज्ञानक्षणवृत्तिदृश्यानामग्रिमकालानुवृत्तिवादिनां तार्किकादीनां मतेऽपि तादृशोच्छेदव्यवहारसम्भवाद् दृश्यानुवृत्तिः स्यात्, अविद्याद्यनादिदृश्यानां तादृशोच्छेदव्यवहारासम्भवश्च स्यात्, तेषां प्रागभावाप्रसिद्धेः। तत्त्वज्ञानेनाविद्योच्छेद इत्यादौ ज्ञापकत्वहेतौ तृतीया बोध्या।

ननु ब्रह्मज्ञानस्य मनोवृत्तिरूपत्वात् सुखदुःखाभावान्यत्वात् तत्साधनान्यत्वाच्च तत्रेच्छा नोपपद्यत इति चेत्, न, अभिव्यज्यमानात्मसुखव्यञ्जकत्वात् तद्व्याप्यत्वाच्च चरमवृत्तौ तावदुपपद्यते सा। यो हि यदा यदिच्छति, स कदाचित् तद्व्याप्यमपीच्छतीत्यनुभवात्। यस्मिन् सति अवश्यमिष्टाभावस्तत्र द्वेषस्य, यस्मिन् सति अवश्यमिष्टं तत्रेच्छायाश्चानुभवसिद्धत्वात्। चरमवृत्तावपि इच्छा उपपद्यत एव। अत एव इष्टव्याप्यस्येष्टत्वादेव कुन्त्या विपदोऽपि भगवद्दर्शनव्याप्यतया कामितास्तदुक्तम् श्रीमद्भागवते—

विपदः सन्तु नः शश्वत् तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत् स्याद् अपुनर्भवदर्शनम्॥

एवञ्च अविद्यानिवृत्तिरेव मोक्षः, सा चात्मरूपैवेति न कश्चिद् दोषः। भगवत्पादैरपि समन्वयाधिकरणे कर्मब्रह्मविद्याफलवैलक्षण्यप्रतिपादनावसरे "ब्रह्म वेद ब्रह्मैव भवति", "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" अभयं वै जनक प्राप्तोऽसीत्यादिश्रुतीरुदाहृत्य "एवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्तीत्युक्तम्" तेनापि मिथ्याज्ञाननिवृत्तिरेव मोक्षः। स चात्मरूपो नित्य आनन्दरूप एव। अतः न केवलं दुःखोच्छेदरूपैव मुक्तिरपि तु तस्या आनन्दरूपतापि आत्मरूपतया बोध्या। अत एव तस्याः पुरुषार्थत्वम्। भाष्येऽप्युक्तम्—"अतो अविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वम्"। एवमेव तत्र विकार्यत्वसंस्कार्यत्वाद्यपि मोक्षस्य निराकृतम्, चरमवृत्त्युपलक्षितात्मन एवाज्ञाननिवृत्तिरूपत्वात्, आत्मनश्च सिद्धत्वात्। मुक्तिगतसाध्यत्वं उपलक्षणीभूतवृत्तिसाध्यत्वमादायैव। सुखरूपत्वाच्च तस्य पुरुषार्थत्वमिति तूक्तमेव। सुखरूपत्वञ्च नाहमर्थस्य, तस्य मुक्तौ अनन्वयात्, किन्तु चिदंशस्यैव तदभिन्नत्वात् सुखस्य। ननु तत्त्वज्ञानकालपर्यन्तमनुवर्तमानः संसारबन्धस्तत्त्वज्ञानोत्पत्त्युत्तरकाले क्व गतः। मम तु नैयायिकस्य आत्यन्तिकदुःखध्वंसो मोक्ष इति ध्वंसाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावनियमस्वीकारान्न तत्त्वज्ञानोत्तरं दुःखं प्रमीयते इति चेत्, न, इहापि तत्त्वज्ञानोत्पत्तिक्षणस्य दुःखाधिकरणकालपूर्वत्वाभावनियमोऽपि नापलपितुं शक्यत इति सिद्धान्ते प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तद्वयविरोधित्वनियमः, शुक्त्यादिप्रमायां तथादर्शनात्।

वस्तुतस्तु संसारो नास्ति न निवर्तते; किन्तु प्रतीतिस्तस्य मिथ्या भवति, न तु संसारस्य सत्ता अस्ति, येनायं प्रश्नो युक्तः स्यात्, क्व गतः संसार इति, तस्यैवाभावाद् व्यवहारस्तु प्रतीतिसाक्षिक आब्रह्मज्ञानाद् अनुवर्तत इति। तथा च श्रुतिः—

न निरोधो न चोत्पत्तिः न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥

"ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्"

तत्रेत्येषा परमार्थता इत्यनेन सर्वविकल्पासहत्वं ब्रह्मण उक्तम्। उक्तञ्च भगवत्पादै-र्दशश्लोक्याम्

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णुः।
तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ७॥

एवञ्च, ब्रह्मणि कल्पितत्वादेव प्रपञ्चस्य भासमानता, न तु तस्य वास्तविकत्वमस्ति। नित्यमुक्तस्यात्मनो मुक्तिस्तु प्राप्तप्रापणन्यायेनोपयुज्यते। यथा कण्ठावलग्नमपि हारं विस्मृत्या नावबुध्यते, प्रबोधितश्चावबुध्यते, तद्वन्नित्यमुक्तोऽपि बद्ध इति भ्रान्तो वेदान्तविज्ञानात् पुनर्नित्यमुक्त इत्यात्मानं जानातीति भावः।

ननु मोक्षः केनचिदागन्तुकेन विशेषेण निष्पद्यते, आहोस्विद् आत्ममात्रेणेति। तत्र ब्रह्मज्ञानस्य फलं मोक्ष इति तस्य फलत्वप्रसिद्ध्या विशेषेणागन्तुकेन निष्पत्तिरेव युक्ता। तथा च श्रुतिः—"एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।१२।३) इत्यत्राभिनिष्पत्तिशब्दाद् विशेषेणैवोत्पत्तिर्वाच्या। अन्यथा स्वरूपेणाभिनिष्पत्तौ पूर्वावस्थातः को विशेषः स्यादितिचेत्, न, भगवत्पादैश्चतुर्थाध्याये चतुर्थपादे सम्पद्याविर्भावाधिकरणे "सम्पद्याविर्भावः स्वेन शब्दादि"ति सूत्रे समाहितत्वात्। तत्र स्वेनेति शब्दात् केवलेनात्मनाविर्भवति न धर्मान्तरेणेति। अन्यथा स्वेनेति विशेषणानर्थक्यप्रसङ्गात्। "मुक्तः प्रतिज्ञानात्" (ब्र० सू० ४।४।२) इति सूत्रे सर्वबन्धविनिर्मुक्त इति पूर्वावस्थातो विशेषः प्रतिपादितः। मोक्षस्य फलत्वं बन्धनिवृत्तिमात्रापेक्षयोपपद्यते। अभिनिष्पद्यते इत्यस्यापि पूर्वावस्थापेक्षया उपपत्तिः। अनेनापि सन्दर्भेणाविद्यानिवृत्तिरात्मरूपा-मुक्तिरिति गम्यत एव।

ननु परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यतां नाम; किन्तु स मुक्तात्मा परमात्मनः पृथगेव भवति। तथा च श्रुतौ—"स तत्र पर्येति" (छा० ८।१२।३) इत्यत्राधिकरणाधिकर्तव्यनिर्देशात्। ज्योतिरुपसम्पद्येत्यादावपि कर्तृकर्मनिर्देशात्। कर्तृकर्मनिर्देशश्च भेदव्याप्य इति मुक्तात्मपरमात्मनो भेदेनैवावस्थानं सिद्धं भवति, अत एव वैष्णवैर्जीवात्मपरमात्मनोर्भेदघटितमेवावस्थानं मुक्तौ स्वीक्रियत इति चेत्, न, 'अविभागेन दृष्टत्वात्'[1] इति सूत्र भाष्ये-"अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते। कुतः? दृष्टत्वात्। तथाहि "तत्त्वमसि[2]", "अहं ब्रह्मास्मि"[3], "यत्र नान्यत् पश्यति नान्यच्छृणोति"[4], "न तु तद् द्वितीयमस्ति ततो अन्यद् विभक्तं पश्येत्"[5] इत्येवमादीनि वाक्यानि अविभागमेव दर्शयन्ति। नदीसमुद्रादिनिदर्शनानि च। भेदनिर्देशस्त्व

१. ब्र० सू० ४।४।४। २. छा० ६।८।७। ३. बृ० १।४।१०।
४. छा० ७।२४।१। ५. बृ० ४।३।२३।

भेदेऽप्युपचर्यते। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि"[१], "आत्मरतिरात्मक्रीडः[२]" इति चैवमादिदर्शनात्। एवञ्च मुक्तात्मनो न पुनरावृत्तिर्भवतीति। 'अनावृत्तिः शब्दात्[३]' इति सूत्रे प्रतिपादितम्। अनावृत्तिशब्दश्च "तेषां न पुनरावृत्तिः"[४], "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते"[५], "ब्रह्मलोकमभिसम्पद्यते"[६], "न च पुनरावर्तते[७]" इत्यादिः। एवञ्च मिथ्याज्ञाननिवृत्तिरेव मोक्षः।

अन्येऽपि दार्शनिका विभिन्नमोक्षस्वरूपवादिनो मिथ्याज्ञाननिवृत्तिं वदन्त्येव। तथाहि "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात् अपवर्गः[८]"। अनेनापि मिथ्याज्ञानापाय एव मोक्ष इति प्रतिपाद्यते। आत्मशरीरेन्द्रियार्थ - बुद्धि-मनःप्रवृत्ति-दोष - प्रेत्यभाव फलदुःखापवर्गेषु द्वादशसु पदार्थेषु यदिदमनादिप्रवृत्तं मिथ्याज्ञानं तस्यात्मपरमात्मादितत्त्वदर्शनवैमल्याद् अपाये सति तेषु रागादयो नोत्पद्यन्ते। ततः प्रवर्तकाभावात्, सुखदुःखफले प्रवृत्तिर्नोपजायते। तदनन्तरं शरीरसम्बन्धो न जायते। तदभावे च सुखदुःखे नोत्पद्येते इति मिथ्याज्ञाननिवृत्तिरेव मोक्षो न्यायमतेऽपि।

वैशेषिकैरपि द्रव्यादिपदार्थानां तत्त्वज्ञानाद् अनादिप्रवृत्तं मिथ्याज्ञानं तत्त्वपरिभावनया निवर्त्यते ततश्चापवर्ग इति प्रोक्तम्।

सांख्ययोगैरपि दर्शितम्—दृग्दृश्याविवेकलक्षणा अविद्या अनादिप्रवृत्ता तत्त्वज्ञानेन निवर्त्यते। ततश्च अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः प्रहीयन्ते। एवञ्च प्रहीणक्लेशस्य प्रवृत्त्यभावादपवर्गः।

सुगतैरप्युक्तम्—तत्त्वपरिभावनया निवृत्तेषु विभ्रमरूपमिथ्याज्ञानेषु विशुद्धविज्ञानचरमक्षणोदयो मोक्ष इति, एवं सत्यपि मिथ्याज्ञाननिवृत्तिर्ब्रह्मात्मैकत्वविज्ञानादेवेति शाङ्करसिद्धान्तविशेषः।

सा च मुक्तिर्द्विधा—जीवन्मुक्तिर्विदेहमुक्तिश्चेति। तत्र विदेहताकालीन एव मुख्यो मोक्षः। तत्स्वरूपं तु पूर्वमेवोक्तम्। इदानीं जीवन्मुक्तिर्निरूपणीया भवति। सा च जीवन्मुक्तानामनुभवसिद्धा। भूयश्चान्ते विश्वमाया निवृत्तिरित्यादिश्रुतयोऽत्र प्रमाणम्। अनयैव च श्रुत्या अविद्यालेशानुवृत्तिरपि बोध्यते। अत एव न तत्त्वज्ञानादविद्यानाशे सद्यः शरीरपातापत्तिः। निवृत्तसर्पभ्रमस्यापि संस्काराद् भयकम्पानुवृत्तिवत्, दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्तेः। अविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसम्भवात्। एवञ्चाविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिः। न च अविद्यालेशशब्देन नावयवो ग्रहीतुं शक्यते, तस्या निरवयवत्वात्। तथा च कोऽयमविद्यालेशो नामेति वाच्यम्, आकारस्यैव लेशशब्दार्थत्वात्। "इन्द्रो

१. छा० ७।२४।१। २. छा० ७।२५।२। ३. ब्र० सू० ४।४।२२। ४. बृ० ६।२।१५। ५. छा० ४।१५।६। ६. छा० ८।१२।१। ७. छा० ८।१५।१। ८. न्यायसूत्रम् १।१।२।

मायाभिः पुरुरूप ईयते" इत्यादिश्रुत्या अज्ञानस्यानेकाकारतैव बोध्यते। आकारि-निवृत्तावपि आकारस्यानुवृत्तिर्भवति। यथा व्यक्तौ निवृत्तायां जातेरनुवृत्तिः। अत एवोक्तं तत्त्वप्रदीपिकायाम्—

अविद्यालेशशब्देन मोहाकारान्तरोक्तितः।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः॥ १०॥
लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिध्यति॥ ११॥

एकस्या अपि अविद्यायाः सन्त्येव बहव आकाराः। तत्रैकः प्रपञ्चस्य परमार्थ-सत्त्वभ्रमहेतुः। द्वितीयोऽर्थक्रियासमर्थवस्तुकल्पः, तृतीयस्त्वपरोक्षप्रतिभास-विषयाकारकल्पः। तत्राद्वैतसत्यत्वाध्यासेन प्रथमः, तत्त्वसाक्षात्कारेण द्वितीयश्च निवर्तते। तृतीयश्च मायालेशो जीवन्मुक्तस्यानिवृत्तेः समाध्यवस्थायां तिरोहितः सन्नन्यदा देहाभासकत्वेनानुवर्तते। प्रारब्धकर्मफलभोगावसाने तु निवर्तते। एतदेव च भूयश्चान्ते विश्वमाया निवृत्तिरिति श्रुत्या बोध्यते। तत्र अन्ते प्रारब्ध-कर्मभोगोपक्षये इत्यर्थः। भूयः पदेनैव अविद्यालेशोऽनुवर्तते इति गम्यते। ननु विरोधिज्ञानोदयादविद्यालेशस्यापि निवृत्तिः कथं न भवतीति चेत्, न, प्रारब्ध-कर्मण एव प्रबलस्य प्रतिबन्धकत्वात्। एवञ्च "क्षीयन्ते चास्य कर्माणि" इत्यादौ "ज्ञानाग्निः सर्वकर्माणि" इत्यादौ च कर्मपदेन प्रारब्धातिरिक्तान्येव कर्माणि ग्राह्याणि। प्रारब्धकर्माणि तु भोगेन क्षीयन्त इति।

उक्तञ्च—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ (बृ० ४।४.७) इति।

गीतायामपि सकलशास्त्रसारभूतायां स्थितप्रज्ञशब्देन जीवन्मुक्त एवोच्यते। तथा च तत्त्वज्ञानेन निवृत्ताविद्यस्यानुवृत्तदेहादिप्रतिभासता जीवन्मुक्तिरिति बोध्यम्। अत एवोक्तम्—

यः समस्तार्थजालेषु व्यवहरन्नपि शीतलः।
अन्तराकाशवत् स्वच्छः स जीवन्मुक्त उच्यते॥
प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥ (गी० २।५५)।
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति॥ (गी० २।७२)

तस्माद् अविद्यानिवृत्तिरूपात्मैव मोक्षः। अविद्यानिवृत्तिश्च विद्यया भवति। विद्या च अहं ब्रह्मास्मीति अखण्डधीरेव। अतोऽविद्यानिवृत्तये मुमुक्षुर्निरन्तरं भावयेद्—अहं ब्रह्मास्मीति, अहं ब्रह्मास्मीति।

श्रुतीनां खलु सर्वासां निर्विशेषे परात्मनि।
तात्पर्यं परमं सिद्धं तज्ज्ञानं मोक्षसाधनम् ॥ १ ॥

कर्मोपासादिभिर्भिन्नैः सृष्ट्यादिप्रतिपादनैः।
विशेषगुणधर्मैश्च तदेव श्रुतिसम्मतम् ॥ २ ॥

निर्विशेषं परं ब्रह्म मन्दानां हितकाम्यया।
विशेषं तु समारोप्य श्रुत्या मात्रेव बोध्यते ॥ ३ ॥

ब्रह्मात्मैकत्वविज्ञानान्मिथ्याज्ञानं निवर्तते।
आत्मानात्माविवेकोऽसौ बन्धोऽनादिः प्रवर्तते ॥ ४ ॥

जीवब्रह्मविभेदस्तु प्रत्यक्षादिनिधापितः।
अभेदश्रुतिबाधान्नो सत्यः स्याद्, व्यावहारिकः ॥ ५ ॥

आरोपितो हि सकलो भेदो ब्रह्मणि भासते।
तेनाद्वैतश्रुतेर्बाधः न कर्तुं शक्यते क्वचित् ॥ ६ ॥

तस्माद् द्वैतप्रबन्धास्ते वादिनो बहुविस्तराः।
अश्रद्धेया न च ग्राह्याः, अद्वैतश्रुतिबाधतः ॥ ७ ॥

एवं वेदान्तसिद्धान्तसम्प्रदायानुसारतः।
यथामति मया तावद् वेदान्तार्थो विचारितः ॥ ८ ॥

कृतः पूर्णप्रबन्धोऽयं, पारसाख्येन धीमता।
देवस्वरूपशिष्येण, ब्रह्मात्मैकत्ववादिना ॥ ९ ॥

अर्पितः प्रीतये भूयात्, चरणाब्जेषु भक्तितः।
काश्यां सदानिवसतो भंवानीविश्वनाथयोः ॥ १० ॥

इति नयनप्रसादिनी समीक्षा
गुरुकृपया सुपूर्णतामवाप्सीत्।
यदिह भवेन्ममैव दूषणं तु
कृतमतिभिर्न गण्यमिष्टलाभात् ॥ ११ ॥

॥ इति नयनप्रसादिन्याः समीक्षणं समाप्तम् ॥

॥ इति शम् ॥

# आधारग्रन्थानां सूची

| | |
|---|---|
| १—तत्त्वप्रदीपिका नयनप्रसादिनीसहिता— | उदासीन सं० म० वि० वाराणसी । |
| २—ब्रह्मसूत्रशाङ्करभाष्यम्— ( भामत्यादि टीकानवकोपेतम् ) | कलकत्ता । |
| ३—उपनिषद्भाष्यम्— | महेश अनुसन्धान संस्थानम् । |
| ४—अद्वैतसिद्धिः | उदासीन सं० वि० काशी । |
| ५—वेदान्तपरिभाषा शिखामणि-मणिप्रभासमन्विता | |
| ६—जैमिनिसूत्रवृत्तिः— | आनन्दहाउस, कालवादेवी रोड, बम्बई |
| ७—न्यायबिन्दुः— | चौखम्भा, वाराणसी । |
| ८—ब्र० सू० भाष्यभामती प्रकाशविकाशटीकोपेता | काशी हिन्दू वि० वि० वाराणसी । |
| ९—सिद्धान्तबिन्दुः, न्यायरत्नावली— | महेश अनुसन्धान संस्थान, आबू । |
| १०—सिद्धान्तलेशसंग्रहः— | अच्युत ग्रन्थमाला कार्यालय, काशी । |
| ११—विवरणप्रमेयसंग्रहः— | अच्युतग्रन्थमाला कार्यालय, काशी । |
| १२—न्यायसिद्धान्तमुक्तावली ( दिनकरी-रामरुद्रीसहिता ) | चौखम्भा, वाराणसी । |
| १३—वैयाकरणभूषणसारः— दर्पण-प्रभाव्याख्योपेता | चौखम्भा, वाराणसी । |
| १४—लघुसिद्धान्तमञ्जूषा, प्रभाव्याख्याभूषिता | चौखम्भा, वाराणसी । |
| १५—भगवद्गीता, शाङ्करभाष्योपेता— | गीताप्रेस, गोरखपुर । |
| १६—सामान्यनिरुक्तिः, बलदेवीयुता | मिथिलाविद्यापीठ ग्रन्थमाला । |
| १७—शतदूषणी— | ग्रन्थमाला आफिस ३९ काञ्जीवरम् । |
| १८—सिद्धित्रयम्— | निर्णयसागर प्रेस, मुम्बई । |
| १९—पञ्चपादिकाविवरणम्— | कलकत्ता । |
| २०—ऋजुविवरम् | कलकत्ता । |
| २१—महाभाष्यम्, प्रदीपोद्द्योतसहितम्— | मोतीलाल बनारसीदास, वाराणसी । |
| २२—काव्यप्रकाशः, प्रदीपोद्द्योतसमन्वितः— | आनन्दाश्रम संस्कृत ग्रन्थावलिः । |
| २३—श्रीभाष्यम्— | |
| २४—खण्डनखण्डखाद्यम्— | उदासीन सं० वि० वाराणसी । |
| २५—ईशावास्युपनिषदः— | |
| २६—छान्दोग्योपनिषद् | |
| २७—बृहदारण्यकोपनिषद् | |
| २८—संक्षेपशरीरकम् | |
| २९—वाक्यपदीयम्— | चौखम्भा, वाराणसी । |

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

### नूतनानि प्रकाशनानि

१. ऋग्वेदप्रातिशाख्यम्—ग्रन्थरत्नमिदं विविधैः पाठान्तरैः संशोध्य उवटाचार्य-कृतभाष्यसहितं प्रकाशितम्— ५६-००

२. संस्कारसारः—श्रीदलपतिमहाराजप्रणीतोऽयं धर्मशास्त्रीयो ग्रन्थो विभिन्नैः परिशिष्टैः सम्भूष्य प्रकाशितः— ५०-००

३. अद्वैतदीपिका—श्रीनृसिंहाश्रमविरचितेयमद्वैतदीपिका श्रीनारायणाश्रम-विरचिताद्वैतदीपिकाविवरणाख्यटीकया सनाथीकृत्य प्रकाशिता-द्वयोर्भागयोः—१०३-००

४. न्यायमञ्जरी—श्रीमज्जयन्तभट्टप्रणीतेयं न्यायमञ्जरी श्रीचक्रधरविरचितया 'ग्रन्थिभङ्ग' व्याख्यया समलङ्कृत्य प्रकाशिता—त्रयाणां भागानाम्— १५२-००

५. व्योमवती—व्योमशिवाचार्यविरचितमिदं ग्रन्थरत्नं विविधैः पाठभेद-परिशिष्टादिभिः सह प्रकाशितम्— प्रथमभागस्य—२७-००
द्वितीयभागस्य— ५०-००

६. तत्त्वचिन्तामणौ प्रामाण्यवादः—तत्त्वचिन्तामणेः प्रामाण्यवादपर्यन्तोऽयं ग्रन्थः श्रीगौरीनाथशास्त्रिविरचितया 'प्रभा'ख्यव्याख्यया युतः सन् प्रकाशितः —१५-००

७. प्रगल्भी—तत्त्वचिन्तामणिग्रन्थस्योपमानखण्डात्मकमिदं पुस्तकं श्रीप्रगल्भाचार्यप्रणीतया 'प्रगल्भी' व्याख्यया समलङ्कृत्य प्रकाशितम्— १५-००

८. अभावविमर्शः—श्रीदीपकघोषप्रणीतमिदं ग्रन्थरत्नं नानाशास्त्रनिष्कर्षभूतं चकास्ति— १६-००

९. दीधितिकारोपज्ञविचाराणामालोचनम्—अनुसन्धानप्रबन्धोऽयं दीधितिकार-सिद्धान्तानां भृशं समालोचनां विदधाति— ५०-००

१०. नित्याषोडशिकार्णवः—तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं शिवानन्दकृतया 'ऋजुविमर्शिन्या', विद्यानन्दकृतया 'अर्थरत्नावल्या' च टीकया सनाथीकृत्य प्रकाशितम्— ७६-००

११. परमानन्दतन्त्रम्—तन्त्रशास्त्रीयोऽयं ग्रन्थो विविधैः पाठभेद-परिशिष्टादिभिरानुसन्धानिकफलश्रुतिभिः सम्भूष्य प्रकाशितः— ९५-००

१२. शिवमहिम्नस्तोत्रम् · स्तोत्रमिदं 'मधुसूदनी', 'नारायणी' प्रभृतिभिः संस्कृत-टीकाभिः, अथ च हिन्दीपद्यानुवाद-हिन्दीव्याख्यादिभिः सनाथीकृत्य प्रकाशितम्—२०-००

१३. अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्—अग्निपुराणस्य काव्यालङ्कारभाग-पर्यन्तमिदं ग्रन्थरत्नं 'काव्यप्रभावृत्ति'संस्कृतटीकयाऽथ च हिन्दीव्याख्यया सम्भूष्य प्रकाशितम्— ५६-००

१४. पाणिनीयधातुपाठसमीक्षा—(द्वितीयं संस्करणम्) व्याकरणशास्त्रीयोऽयं ग्रन्थः स्वीयैर्गवेषणाभरिततत्त्वैः कामं बिभर्ति महनीयामभिख्याम्। प्रथमभागस्य— ८५-००

१५. वाल्मीकिरचनामृत—वाल्मीकिरामायणस्य विविधान् प्रसङ्गान् उपजीव्यत्वेनाङ्गीकृत्य विदुषा पण्डितश्रीकुबेरनाथशुक्लेन मार्मिकं तात्त्विकञ्च विवेचन-मनुष्ठितम्— ५६-००

प्राप्तिस्थानम्—
विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.